आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०१

# शांकरपादभूषणम् ।

मीमांसान्यायवेदान्ताद्यनेकतन्त्रमर्मज्ञैकनिष्णातपर्वतोपाह्व-

श्रीरघुनाथसूरिविरचितम् ।

द्वितीयो भागः ।

सोऽयं

वे० शा० सं० रा० शंकरशास्त्री मारुलकर

वे० शा० सं० रा० दिगम्बरशास्त्री काशीकर

इत्येताभ्यां संशोधितष्टिप्पण्यादिनाऽलंकृतश्च ।

एतत्पुस्तकं

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमत् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-

महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५५ ।

ख्रिस्ताब्दाः १९३३ ।

# प्रस्तावना ।

—०—

अथ विदितचरमेवैतन्निखिलानां भारतवर्षीयाणां वेदान्तशास्त्रपठनपाठनचातुरीवतां यशःसुधांशुधवलितदिग्विभागानां विद्वच्चक्रचूडामणीनामानन्दाश्रमग्रन्थावलीप्रकाशितग्रन्थग्राहकमहाशयानामन्येषां च विद्वन्महोदयानाम्—

यथैक एवाद्वितीयः परमात्मा शिवविष्णुरूपेण द्विधा भासत एवमेवापौरुषेयो भगवानाम्नायपुरुष एक एव सन् द्विधा विभक्तमात्मानं प्रदर्शयाचकारेति

तत्र पूर्वस्मिन्भागे ज्योतिष्टोमादिसकलकर्मजातस्य साङ्गोपाङ्गं प्रतिपादनात्सोऽयं भागः कर्मकाण्डं वेति प्रसिद्धिं गतो लोके । तदुत्तरस्मिंश्चाऽऽध्यात्मिकाधिदैविकाधिभौतिकरूपतापत्रयसंबद्धसंसृतिचक्राद्यनर्थव्रातौघनिदानाविद्याध्वान्तविध्वंसनपटीयःस्वयंप्रकाशात्मज्ञानस्य प्रकाशनाज्ज्ञानकाण्डमिति पवित्रामभिख्यां लभते स्मायमुत्तरो वेदभागः । पवित्रत्वं चाभिख्यायाः 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति भगवद्गीतत्वात् । उत्तरत्वादेव चायं वेदभागो वेदान्तः श्रुतिशिर उपनिषदित्यादिशब्दैः संबोध्यतेऽभियुक्तैर्महनीयैः ।

तत्र यथा जैमिनिना महर्षिणा 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'अन्वाहार्ये च दर्शनात्' इत्यन्तां द्वादशलक्षणीं मीमांसामारचय्य पूर्वभागगतवेदवाक्यानि यथायथं कर्मपरत्वेन व्यवस्थापितानि, अत एवेमां पूर्वमीमांसां व्यवहरन्ति, तथा श्रीमद्बादरायणाचार्येण 'अथातो ब्रह्मजिज्ञासा' इति प्रक्रम्य 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इत्यन्तां चतुर्लक्षणीं मीमांसां प्रणीय वेदान्तापरपर्यायोत्तरभागगतानि वेदवाक्यानि यथायोग्यसमन्वयकरणेनाद्वैतब्रह्मपरत्वेन व्यवस्थापयिषत । अत एवेयमुत्तरमीमांसेत्युच्यते ।

शुद्धब्रह्मज्ञानादेव च मोक्षापरपर्यायं सुखं लभ्यते नान्यथा । 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था अयनाय विद्यते' इति श्रुतेः ।

> तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम् ।
> ज्ञानादेव तु कैवल्यम् । इत्यादिस्मृतेश्च ।

सुखं च यद्यपि स्रक्चन्दनवनिताप्रभृतिभिर्लौकिकैः साधनैः कैश्चित्कदाचिल्लब्धुं शक्यं तथाऽपि न तन्मोक्षशब्दवाच्यम् । तस्य सातिशय

त्वात्सद्दक्षत्वाच्च । निरतिशयमेव हि तदभीष्टमिति न कस्याप्येतद्विषये विसंवादः ।

मोक्षश्च यावद्दुःखात्यन्ताभावरूपो न तु लोकान्तरावाप्तिजन्यवैषयिकसुखानुभवरूपः । अनुभवस्य शरीराधीनत्वेन शरीरस्य च विशरणस्वभावत्वेन भवितव्यताशजन्यदुःखसंसर्गस्य हिरण्यगर्भादावप्यवर्जनीयत्वेन लेशतोऽपि दुःखासंभिन्नसुखस्य कादाचित्कत्वेन मोक्षस्य लौकिकसुखसमानाकारत्वापत्तेः । तस्मात्कण्टकापसारणे सुखी संवृत्तोऽहमिति लौकिकप्रत्ययवद्दुःखनिवृत्तिरेव सुखशब्देनोपचर्यते । न पुनरस्ति सुखं नाम किंचिद्वस्त्वन्तरम् ।

ननु 'अपाम सोमममृता अभूम' 'हिरण्यदा अमृतत्वं भजन्ते' इत्यादिश्रुतिभिः सोमपानोपलक्षितकर्मणाऽमृतं मोक्षं संपादयेदित्यर्थपर्यवसानादमृतशब्दवाच्यस्य मोक्षस्य कर्मसाध्यत्वप्रतिपादनात्कथं ज्ञानैकसाध्यत्वं तस्योच्यते । कर्म च वेदविधिबोधितो धर्म एव । तदुक्तं जैमिनिना महर्षिणा—"चोदनालक्षणोऽर्थो धर्मः" इति । चोदना लिङादिवाच्यविधिर्लक्षणं प्रमाणं यस्य तादृशो यागादिर्धर्म इति तदर्थः । अत एवेशावास्योपनिषदि—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥

इति यावज्जीवं कर्मनिष्ठोक्ता । तथा भगवद्गीतास्वपि भगवताऽर्जुनं प्रति कर्मशब्देन धर्म एवोपदिश्यते—

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ इति चेत् ।

उच्यते—यद्यप्यपामेति श्रुते माध्यत्वादिवाचकद्वितीयाद्यभावे सति वस्तुतः शेषशेषिणोः सहोच्चारणमित्येवंरूपेण वाक्यप्रमाणेन यस्य पर्णमयी जुहूरित्यत्र पर्णताजुह्वोरिव मोक्षकर्मणोः साध्यसाधकभावः प्रतीतो भवति तथाऽपि 'विविदिषन्ति यज्ञेन' 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इत्यादिश्रुतिस्मृतिवचनैर्मोक्षसाधनीभूतब्रह्मात्मैक्यज्ञानं प्रति विविदिषप्रयुक्तत्वाद्विविदिषायाश्च चित्तशुद्धिप्रयुक्तत्वाच्चित्तशुद्धेश्च पापक्षयप्रयुक्तत्वात्पापक्षयस्य च कर्मानुष्ठानप्रयुक्तत्वान्मोक्षसाधनज्ञानोत्पत्तिप्रतिबन्धकदुरितक्षयलब्धचित्तशुद्ध्या विविदिषोत्पादनद्वारा ज्ञानोत्पत्तौ कर्मणामुपयोगावधारणेन परम्परया मोक्षोपयोगित्वकल्पनात् 'न कर्मणा न प्रजया' 'नाहं वेदैर्न तपसा' इति श्रुतिस्मृतिभ्यां कर्मणः

साक्षान्मोक्षसाधनत्वस्य प्रतिक्षेपात्, 'ब्रह्म वेद ब्रह्मैव भवति' 'तदात्मानमेवावेत्, तमेव विदित्वा, विद्ययाऽमृतमश्नुते, ज्ञानादेव तु कैवल्यम्, इत्यादिपर शतश्रुतिवचननिचयैश्च साक्षाज्ज्ञानसाध्यत्वमेव मोक्षस्य न कर्मसाध्यत्वमित्येव सिध्यति। तथा च ज्ञानकाण्डमेव मुख्यं कर्मकाण्डं तु तदङ्गमिति फलति। अत एव श्रीमदाचार्यचरणैः शारीरकभाष्ये 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र०सू० ३।४।२६) इति सूत्रे मोक्षसाधनज्ञानहेतुत्वमग्नीन्धनादिकर्मणां सिद्धान्तितं सङ्गच्छते। एतेन कर्मकाण्डस्यैव मुख्यत्वं ज्ञानकाण्डं त्वात्मनोऽविनाशित्वप्रतिपादनेन पारलौकिकस्वर्गादिसुखे विश्वासोत्पादनद्वारा कर्मकाण्डस्यैवोपकारकं तदङ्गभूतमिति यत्कर्मिणां मतं तदसत्यमिति मन्तव्यम्।

एतावता प्रबन्धेन पुनरपि जननं पुनरपि मरणमित्येवमात्मकसंसृतिचक्रनिवृत्तिरूपं निरतिशयसुखं संपिपादयिषुभिर्वेदान्तप्रतिपादिताद्वैतज्ञानसंपादनार्थमेव सर्वात्मना प्रयतितव्यमिति सिद्धम्।

ततश्चैतादृशमहामहिमशालिज्ञानसंपादने प्रयियतिषूणां मङ्गलपथमादिदर्शयिषयाऽपगतायासं तदवबोधाय बद्धपरिकरः श्रीमान्बादरायणश्चतुरध्यायात्मकमद्वैतवेदान्तशास्त्रं सूत्रैरारचयाबभूव। भगवत्पूज्यपादश्रीमच्छङ्करगुरुचरणास्तु तानि सूत्राणि बीजभूतान्युपादाय गभीरतरार्थन्यायानुविद्धाभिरपि ललितललितवाक्यसंदृब्धत्वाद्विशदविशदविषयविवेचनादुत्तमोत्तमोपपत्तिप्रदर्शनाच्च प्रसन्नाभिर्भाष्यवारिधाराभिः समासिच्य दशोपनिषद्भाष्यं गीताभाष्यं चेति प्रस्थानत्रयमारचय्याद्वैतवेदान्तशास्त्रमङ्कुरतामापादयामासुः।

एवं रीत्या खप्राणर्षि(७५०)मिते खिस्ताब्दे गौडपादाचार्यकर्तृकमाण्डूक्यकारिकानिर्माणादनन्तरं खखाष्टा(८००)ब्दे श्रीशङ्करगुरुचरणैस्त्रिवेणीमिव स्वावगाहनमात्रेण विशालविषयाटवीविलङ्घनदुःखदावानलजटिलज्वालाभीषणसंतापत्रयसंतापितं जीवजातमुद्धरन्तीं प्रस्थानत्रयीं निर्मायाद्वैतमीमांसाशास्त्रेऽङ्कुरिते भगवदानन्दगिरिभिरिषुनयनवसुषु (८२५) शारीरकभाष्यं न्यायनिर्णयाख्यव्याख्यया समभूषि। समभूषि च तथा दशोपनिषद्भाष्यं गीताभाष्यं च टीकया। अस्मिन्नेव समये श्रीसुरेश्वराचार्यैर्बृहदारण्यकभाष्यवार्तिकं नैष्कर्म्यसिद्धिश्चेति द्वे व्यलेखिषाताम्। समपादि च ज्ञानोत्तमैर्नैष्कर्म्यसिद्ध्युपरि सरसा टीका। खेषुकरिषु (८५०) वाचस्पतिमिश्रैर्भाष्योपरि गभीराऽपि प्रसन्ना भामत्याख्या व्याख्या समाख्यायि। इषुनिधिवसुषु (८९५) च श्रीपद्मपादाचार्या शारीरभाष्यव्याख्या पञ्चपादिका प्राणैषुः। पञ्चाशदादित्येषु

( १२९० ) अमलानन्दो भामतीं कल्पतरुणा, कल्पतरुं चाप्पय्यदीक्षितः पञ्चाशत्पञ्चदशसु (१५५०) परिमलेन समलमकार्षीत् । सर्पीषुभूषु (१५७०) गोविन्दानन्दै रत्नप्रभा प्राकाशि । तदनु सर्वज्ञात्ममहामुनयः खाम्बरनिधिषु ( ९०० ) निखिलविद्वन्मान्यं सक्षेपशारीरकं नाम प्रमाणभूतं निबन्धं निबन्धयामासु । श्रीहर्षः खनिधिभिन्दुषु ( ११९० ) खण्डनखाद्यं नाम ग्रन्थमग्रन्थीत् । शून्यद्वयोत्तरादित्यसमये ( १२०० ) प्रकाशात्ममुनयः पञ्चपादिकां व्यवृण्वन् । स्वप्रकाशात्मयतिर्लक्ष्मीधरश्चेति द्वाभ्यां ( १२२० ) काले क्रमेण तत्त्वदीपनामृतमकरन्दनामानौ ग्रन्थावग्रन्थिषाताम् । रामकृष्णविदुषा बाणर्ष्यग्नीन्दुषु ( १३७५ ), मोडकोपाह्वाच्युतरायेण च ( १८०० ) काले पञ्चदश्याः पृथक्पृथक् व्याख्या निरमायि । पञ्चाशत्तिथिषु ( १५५० ) नृसिंहाश्रमाख्यः पण्डितो द्वैतदीपिकां प्रकाशितवान् । षष्ट्युत्तरपञ्चदशसु ( १५६० ) धर्मराजाध्वरीन्द्रैर्वेदान्तपरिभाषा भाषिता । नारायणाश्रमोऽप्यस्मिन्नेव समये भेदधिक्कारटीकां सत्क्रिया जगौ । मधुसूदनसरस्वतीभिरपि ( १५६० ) अत्र कालेऽद्वैतसिद्ध्यद्वैतरक्षणवेदान्तकल्पलतिकासिद्धान्तबिन्दुगीतागूढार्थदीपिकाप्रभृतयः प्रभूता अद्वैतनिबन्धा व्यरचिषत । मधुसूदनसरस्वतीनां विषयविवेचनशैल्यतीव मार्मिकी सुविचारपरिप्लुता च भवतीति प्रथितं सर्वत्र । ( १५६५ ) काले ब्रह्मानन्दसरस्वति अद्वैतसिद्धिं टीकया भूषयामास । खद्वयनृपेषु ( १६०० ) नारायणसरस्वती भाष्यवार्त्तिकं नाम शारीरभाष्यव्याख्यानमचीकरत् । निरुक्त एव काले भेदधिक्कारसिद्धान्तलेशटीकादयो ग्रन्था नृसिंहदीक्षितधर्मय्यदीक्षितादिभिः प्राणायिषत । ( १६२५ ) खिस्ताब्दे रंगोजीभट्टा अद्वैतचिन्तामणिमाचेचिन्तन् । अग्निचित्सोमयाजिभिस्तथा रामतीर्थैश्चास्मिन्नेव समये सुबोधिन्यन्वयदीपिका चेति क्रमेण सक्षेपशारीरकोपरि टीकाद्वयं विरचितम् । खद्वितयाश्वे दुषु ( १७०० ) महादेवसरस्वतीशुकाचार्यविद्येन्द्रसरस्वतीप्रभृतिभिस्तत्त्वानुसधानतत्त्वानुसधानव्याख्यावेदान्ततत्त्वसाराभेदाखण्डचन्द्रमःप्रभृतयो बहवो निबन्धा अनुसधीयन्ते स्म । एवमग्रेऽपि नैकशोऽद्वैतवचनकुशला पण्डिता उच्चावचान्ग्रन्थाष्टीकाग्रन्थाश्च विपुलान्विस्तारयामासु । श्रीशंकराचार्यप्रणीता उपदेशसाहस्रीदशश्लोक्यपरोक्षानुभवात्मबोधवाक्यवृत्तीत्यादयो ग्रन्था वाचनार्हाः सन्ति । एवं क्रमेण खबाणदिग्गजेन्दुमितेऽब्दे पर्वतोपाह्वरघुनाथसूरयः श्रीमद्बादरायणप्रणीतब्रह्मसूत्राणां प्रथमाध्यायस्य द्वितीयाध्यायस्य चाऽऽदिमपादयोः शाङ्करभूषणं नाम व्याख्यानमकार्षुः । पण्डितप्रवरा म० म० अभ्यंकरोपाह्ववासुदेवशास्त्रिणः

( सं० १९२० )वत्सरेऽद्वैतामोद ( १९२८ ) अत्र सिद्धान्तबिन्दुटीका बिन्दुप्रपात प्राणेषु । अज्ञानिनामपि सुलभावगाहमीदृश ग्रन्थरत्नद्वयं निर्माया-द्वैतमहीरुहजीवातुभूत मायावादाङ्कुर सम्यक्परिपोषयाचक्रुरिति मन्ये । तथा चाद्ययावत्स्वमतिवैभवेन सुरगुरुवचनान्यधरीकुर्वन्त. प्राचीनार्वाचीना. पर.शता महनीयपण्डितप्रवरा अद्वैतमास्थाय तत्प्रवचने प्रवृत्ता सलक्ष्यन्ते ।

अत्र सर्वत्र ये ग्रन्थनिर्माणसमयाङ्का निर्दिष्टास्ते गु०म०म० अभ्यङ्करोपाह्व-वासुदेवशास्त्रिभि. स्वप्रणीतदर्शनाङ्कुरटीकासवलितसर्वदर्शनसग्रहनिवेशितग्रन्थ-कारादिसूचीनिश्चितास्तत एवोद्धृता इति बोध्यम् । एवमनुक्रमेणोत्तरोत्तरं शाखो-पशाखमुपचयमुपारूढोऽद्वैतवेदान्तमहीरुह पुनर्मुक्ताफलेन फलितो ब्रह्मवि द्याभरणेन मण्डित , सत्क्रियया ( भेदधिक्कारटीकया ) मञ्जरीसनाथो, वेदान्त-कौमुद्या कुसुमितो, न्यायमकरन्देन सजातपुष्परसोऽद्वैतामोदेन सुरभितो, विद्व न्मनोरञ्जन्या रमणीयश्चेति सर्वातिशायिताया परा कोटिमधिरूढ सुतरां विराजत इत्यत्र बिन्दुशीकरेण ( एतन्नाम्न्या सिद्धान्तलेशटीकया ) युतोऽपि न सदेहबिन्दुरपि ।

तदेवमङ्गप्रत्यङ्गादिविस्तृत्या परिपूर्णतामुपागतस्यास्याद्वैतब्रह्ममीमासाशास्त्रस्य ग्रन्थविषये क्रियमाणास्त्रयो विभागा सभवन्ति । ते च यथा—मूलग्रन्था., शा-स्त्रार्थनिर्णायकग्रन्था , प्रवेशग्रन्थाश्चेति । तत्र तत्तच्छास्त्रसप्रदायप्रवर्तकाचार्यै. प्रणीतास्ते मूलग्रन्था , ते च प्रायेण सूत्र भाष्य वार्तिक च । सूत्रं नाम—

अल्पाक्षरमसदिग्ध सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्य च सूत्र सूत्रविदो विदु. ।

इतिलक्षणलक्षितम् । अस्यार्थ — यावतामक्षराणामुपादान विना विवक्षिता-र्थोऽधिगमयितुमशक्यस्तादृशार्थप्रतिपादनाय ततोऽधिकाक्षराणामनुपादानमल्पा-क्षरत्वम् । विवक्षितार्थप्रतिपादनायावश्योपादेयाक्षरातिरिक्ताक्षरानुपादानमिति यावत् । एव वा भवितुमर्हतीत्यनिश्चितार्थराहित्यमसदिग्धत्वम् । विशिष्टार्था-भिधायित्व सारवत्त्वम् । बहुशाखानिर्णायकत्व विश्वतोमुखत्वम् । निष्फलार्था-भिधाय्यक्षरादिराहित्यमस्तोभत्वम् । अपशब्दादिदोषविधुरत्वमनवद्यत्वम् । तथा चाल्पाक्षरत्वादिविशेषणषट्कविशिष्टवाक्यविशेष. सूत्रमिति सूत्रलक्षणं फ लति । योगार्थस्तु सूत्र्यते सूच्यते विवक्षितार्थो येनेति, स्वार्थणिजन्तात्सूत्रधातोः 'एरच्' ( पा० सू०३ । ३ । ५६ ) इत्यच् प्रत्यय. । शास्त्रादिसूचनाग्रन्थः । शास्त्रीयबह्वर्थप्रतिपादकसंक्षिप्तवाक्यविशेष इति तात्पर्यम् ।

भाष्यते विवृततया वर्ण्यन्ते सूत्रार्थो यत्रेति योगेन सूत्रविवरणग्रन्थविशेषो भाष्यम् । लक्षणं तु—

सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ इति ।

वार्तिकं तु वृत्तिग्रन्थः सूत्रविवृतिः । तत्र साधु । 'तत्र साधु' ( पा० सू० ४.४.९८ ) इत्यधिकारीयेण 'कथादिभ्यष्ठक्' ( पा० सू० ४।४।१०२) इति सूत्रेण ठक्प्रत्ययः । उक्तानुक्तदुरुक्तार्थ व्यक्तिकारको ग्रन्थविशेषो वार्तिकम् । तदुक्तम्—

उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्तिकम् । इति ।

एतेषु त्रिषु ग्रन्थेषु अद्वैतब्रह्ममीमांसाशास्त्राभिमता स्थूलास्थूला व्यक्ता-व्यक्ता उक्तानुक्ताश्चेति सर्वेऽर्थाः संगृहीता भवन्ति । अत एवैत आकर-ग्रन्था इत्युच्यन्ते ।

साधकबाधकोहापोहप्रदर्शनेन विसंवादाद्याक्षेपनिरसनपूर्वकं युक्तिप्रयुक्त्या-दिना सिद्धान्तभूतानर्थान्निर्दोषत्वेन समर्थयन्तः शास्त्रार्थनिर्णायकग्रन्थाः । एतादृशाश्च ग्रन्था नियमेन पाण्डित्यप्रचुराः संलक्ष्यन्ते । एतेष्वद्वैतसिद्धिखण्ड-नखाद्यसंक्षेपशारीरकभेदधिक्कारादयो ग्रन्थाः समाविष्टा भवन्ति । प्रकृतं शांकर-पादभूषणमप्येतदन्तर्गतमेवेति स्पष्टं प्रतीयते । अत एवैते विवादग्रन्था इत्य-प्युच्यन्ते ।

प्रवेशसौलभ्याय तत्तच्छास्त्रस्थान्सिद्धान्तभूतान्दुरूहानप्यर्थान्मध्यमाधिका-र्युपकारार्थं सिद्धस्वरूपेणैव प्रकाशयन्तः शास्त्रप्रवेशग्रन्थाः । परिवर्जितार्थ-गाम्भीर्येण पदवाक्यसंदर्भयोजनेन विरचितत्वात्प्रथमाधिकारिणामपि सुलभावबोधा भवन्तीत्येतेषु गुणः । एतादृशग्रन्थाः प्रकरणग्रन्था इत्यभिधीयन्ते । वेदान्त-परिभाषावेदान्तसारपञ्चदश्यादयोऽत्रान्तर्भाव्याः । बहुभिः प्रणीता बहवश्चेमे । बहूनामप्येतेषामध्ययनेन शास्त्रपारदृश्वत्वं नैव लब्धुमर्हम् । यतो यथैवेतेऽक्षरतः संकुचितास्तथैव तदनुनिष्पादिनाऽर्थेनापि संकुचिता एव भवन्ति ।

सत्स्वपि त्रिविधेषु ग्रन्थव्यूहेषु व्यापकतया प्रौढतया शास्त्रीयसूक्ष्मसूक्ष्मतरा-दिसकलार्थानां सुगमभाषाबन्धेन साङ्गोपाङ्गाविष्करणवत्तया च सर्वतः श्रैष्ठ्येन मूलग्रन्था एव चकासति ।

ननु ज्ञानकाण्डापरपर्यायवेदान्तेषु क्वचिद्द्वैतं क्वचिच्चाद्वैतमित्युभे द्वैताद्वैते

वर्ण्यमाने सदृश्येते । तत्र देहभृन्मात्रेणाऽऽत्यन्तिकदुःखनिवृत्तिरूपमोक्षावस्थाप्राप्तये किं द्वैतमार्गोऽवलम्ब्यतामुताद्वैतमार्ग आहोस्विदुभयम् । उभयमार्गावलम्बनपक्षे चाऽऽदावेवाय पश्चाच्चासावित्यनुक्रमेणाथवा स्वेच्छया द्वयोरेक आदाववलम्बनीय । यदि चान्यतर एव समाश्रयणीयस्तदोभयोर्मध्ये कः श्रेयानित्यनेके प्रश्ना स्वपुरत प्रत्यवतिष्ठन्ते ।

तत्र संसाराम्भोऽम्भेष्वनवरतमध ऊर्ध्वं च निमज्जनेन भृश परिश्रान्तान्दीनवदनतया स्वोद्धारप्रत्याशया श्रुतिमुख प्रेक्षमाणाञ्जनानुद्दिधीर्षन्त्या मातृसहस्रापेक्षयाऽप्यधिकवत्सलया श्रुत्या सशयजालापाकरणेन निर्विचिकित्ससदेकमार्गप्रदर्शनपरयैव भाव्य न पुनरज्ञाना मार्गद्वयप्रदर्शनेन विशयगर्ते प्रक्षिपन्त्या भवितु युक्तम् ।

अथ कदाचित्कस्मिंश्चित्प्रकरणे निखिलसदेहसदोहसमुच्छेदपूर्वक मार्गद्वय संगतिरविरोधेन वर्णिता भवेत्तथाऽप्यधुनोपलभ्य श्रुतिषु न सा दृष्टिपथमवतरति । श्रुतिसप्रदायश्च चतुर्मुखमारभ्याद्ययावदखण्डपरम्परया प्रचलितोऽप्यध्येतृमतिदौर्बल्यात्तावदवकाशाभावादशक्तेर्वा कियानपि श्रुतिभागोऽध्ययनसंप्रदायात्परिभ्रष्ट कियताऽपि कालेन लोपमभिप्राप्त । तेन सह मार्गद्वयसगतिप्रदर्शकप्रकरणमपि लुप्तमभूदिति शङ्के ।

ईदृश्या दुरवस्थाया संजातायामर्थादेव सशयव्यपाश्रयो मतभेद समजनि । समजनिष्ट च लोकाना यथाभिरुचि प्रवृत्ति । तदेतस्या अव्यवस्थाया परिजिहीर्षया परमात्मा व्यासरूपेणावतीर्य तादानिकीरुपलब्धश्रुती परस्परविरोधापनयनपुर सर यथायोग्य समन्वयकरणेन व्यवस्थाप्य लोकाना तदर्थयाथात्म्यावबोधनाय तदनुसारेण ब्रह्मसूत्राणि रचयाबभूव ।

तानीमानि सूत्राणि गभीरन्यायजालोपबृहितविशालभाष्यरज्जुसवलितानि मन्दराद्रिमिव मन्थान परिकल्प्य वेदान्तापरनामधेयश्रुतिशिरास्युदन्वदम्भासीव प्रमथ्य तेभ्य श्रीमच्छकरगुरुचरणैर्विबुधैरिव बादरायणहृदयगुहानिगूढमद्वैतममृतमुद्धृत्य स्पष्टी क्रियते स्म ।

सत्यप्येव तत्तद्दुर्मताभिमानग्रहग्रस्ततयाऽनाद्यविद्यादिसंसारबीजविशरणपटीयसीमद्वैतब्रह्मविद्यामभिदधतामपि श्रुतिशिरसा मिथो विरुद्धार्थाभिधायकतया भासमानाना याथातथ्येनार्थमनवगच्छन्ता श्रुति प्रमाणीकुर्वतामपि परस्परार्थाधिक्षेपेण वेदा तानधिकृत्यानेके सिद्धान्ता प्रावर्तिषत ।

तथा हि—आनन्दतीर्थापरनामभिर्मध्वाचार्यैरिमामेवोत्तरमीमांसामाश्रित्य सर्वे

वेदान्ता द्वैतं, रामानुजाचार्यैर्विशिष्टाद्वैत, वल्लभाचार्यैश्च शुद्धाद्वैत तत्त्व मम स्थिरे, इति । रामानुजाचार्या वल्लभाचार्याश्च यद्यपि तन्मतप्रतिपादकशब्दस्याद्वैतशब्दघटितत्वेनाऽऽपाततोऽद्वैतवादिन इति प्रतिभासते तथाऽप्यन्ततो गत्वा विचारे क्रियमाणे द्वैतिन एवेति मध्वादयस्त्रयोऽपि द्वैतवादिन ।

तत्र द्वैत नाम—द्वयोर्भावो द्विता । द्वितैव द्वैतम् । स्वार्थेऽण् । इति व्युत्पत्त्या द्वैत भेद । द्वैतमतेषु जगत सत्यत्व (१) जीवेश्वरादिभेदपञ्चक (२) परमात्मनः सर्वोत्तमत्वं स्वातन्त्र्य च (३) जीवाना बहुविधत्व (४) सायुज्यादिमोक्षश्चेति सर्वत्र समानम् ।

विशिष्टाद्वैत नाम—द्वैतं भेद । न द्वैतमद्वैतम् । अभेद इत्यर्थ । विशिष्टस्याद्वैत विशिष्टाद्वैतम् । स्वव्यतिरिक्तसमस्तचेतनाचेतनविशिष्ट ब्रह्मैकमेवेत्यर्थ. । यथा लोके शरीरस्य जीवात्मनश्च मिथोऽत्यन्त भेदेऽप्येकश्चैत्र इति व्यवहारो भवति तद्वदिहापि चिद चिद्विशिष्टस्य ब्रह्मण एकत्वव्यपदेश परस्पर भेदश्च भवति ।

शुद्धाद्वैतं नाम—शुद्धयोरद्वैतमिति व्युत्पत्त्या मायासबन्धरहितयो कार्यकारणयोर्जीवब्रह्मणोरैक्यमित्यर्थ । केचित्तु शुद्ध च तदद्वैत चेति कर्मधारयमप्याचक्षु । एतन्मते भक्तिमार्गो जीवब्रह्मणोरशांशिभाव सत्कार्यवादोऽहिकुण्डलवत्परिणामवादो जगत. सत्यत्वमाविर्भावतिरोभावौ चेति ।

अद्वैत नाम—द्विधा इत द्वीतम् । तस्य भावो द्वैतम् । तदुक्त वार्तिके—

द्विधेत द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते । इति ।

न विद्यते द्वैत द्विधाभावो यत्र तदद्वैतमित्यक्षरार्थ । अत्र मते नित्यज्ञानानन्दात्मक स्वयज्योतीरूप चिन्मात्रमेकमेव ब्रह्मतत्त्वम् । अनिर्वचनीयख्याति, न तु सत्ख्याति । अद्वैतज्ञानेन मूलाज्ञाननिवृत्तौ स्वस्वरूपाधिगमो मोक्ष इति ।

एव निरुक्तविधया शाकरसप्रदाय, माध्वसप्रदाय, रामानुजसप्रदायः, वाल्लभसप्रदायश्चेति चत्वार सप्रदाया प्रावर्तन्त । स्वस्वसप्रदायपुष्ट्यर्थं च चतुर्भिरप्याचार्यै. स्वस्वमतानुसारेण बादरायणप्रणीतब्रह्मसूत्रोपरि भाष्याणि निरमीयन्त । चतुर्ष्वप्येतेष्वाचार्येषु शकराचार्या एवैकेऽद्वैतवादिनोऽन्ये त्रयो द्वैतवादिन इत्युक्तम् । एव च वेदान्तशास्त्रे द्वैताद्वैते इति द्वावेव मुख्यौ भेदाविस्यप्युक्तप्रायम् । अतोऽद्वैतप्रतिपादकशाकरभाष्य द्वैतप्रतिपादकमाध्वभाष्य

चेति भाष्यद्वयमधिकृत्य सूक्ष्मेक्षिकाया क्रियमाणायां शांकरभाष्ये द्वैताद्वैतोभयश्रुतिव्यवस्था सामीचीन्येन क्रियमाणा दृश्यत इति सद्युक्तिसुयोजनागुम्फितत्वान्निर्दोषत्वाच्चास्य भाष्यस्यान्यादृशमेव गाम्भीर्यं भवति । माध्वभाष्ये तु तत्सर्वं विपरीतं नैकस्या अप्यद्वैतश्रुतेरञ्जसा समन्वय इति उभयभाष्ययोरवधूय पक्षपातं सूक्ष्मया दृशा निरीक्षणेनाऽऽकलितम् । ततश्चानाद्यज्ञानसमुद्भूतद्वैतदुर्वासनापिशाचिकागृहीतैरिव याथातथ्येन सारस्येन च श्रुत्यर्थमनवगच्छद्भिरात्मानमनल्पबोधमन्यमानैर्दैवदुर्विलासादद्वैतवादे निर्भये परममङ्गले बद्धविद्वेषैरिव मध्वापरनामकानन्दतीर्थैर्न्यायाभासदुर्योजनादिकुतर्कपुरस्कारेण ब्रह्मसूत्रोपरि भाष्यं रचयित्वा, तथा तच्छिष्यैर्जयतीर्थव्यासतीर्थादिभिस्तद्भाष्योपरि तदनुगा टीका विधाय च शांकरभाष्योपरि स्थले स्थले ये दोषविस्फुलिङ्गाः सादरं प्रक्षिप्तास्तेषां दोषाणां निरसनेन तेषामेव चोक्तीनां सदोषत्वससाधनेन च शांकरभाष्यस्य निस्तुलं सारस्यं गाम्भीर्यं प्रौढत्वं च लोकान्प्रत्याययितुं श्रीमद्रघुनाथपण्डिताः शांकरपादभूषणं नामाद्वैतवेदान्तीयमनुपमं निबन्धमवातीतरन्निति महदेतत्प्रमोदस्थानम् । तदेतदुक्तं ग्रन्थारम्भे स्वयमेव ग्रन्थकृता—

> आनन्दतीर्थादिभिरादरेण यद्दूषितं भाष्यमनल्पबोधैः ।
> तदुद्धृतौ तत्कृतिदूषणे च ह्युज्जृम्भतेऽसौ रघुनाथसूरिः ॥ इति ।

तथा चास्य शांकरपादभूषणनाम्नो निबन्धस्य निर्णयग्रन्थ इत्यभिधानापेक्षया खण्डनग्रन्थ इत्येव नामाभिख्यं शोभते । ननु यद्यस्मिन्निबन्धे प्राधान्येन पराभिमताद्वैतमतस्य खण्डितत्वात्खण्डनग्रन्थोऽयमित्युच्यते तदा कथमिवास्य शांकरपादभूषणमित्यभिधानं सङ्गच्छताम् ? प्रत्युत विरुणद्धि ह्येतदभिधानम् । यथा ह्यानन्दगिरिप्रभृतिभिर्व्याख्याय शांकरभाष्यं भूषितं न तथाऽत्र किंचित्संदृश्यत इति चेद्भ्रान्तोऽसि । यथा ह्यद्वैतनयद्वयब्रह्मज्ञानेन मूलाज्ञाननिवृत्तौ सत्यां स्वस्वरूपाधिगमो मोक्ष उच्यते । न तु मोक्षो नाम कश्चित्साध्यः पदार्थः । तद्वद्दुर्वाद्याहितक्षेपदूरीकरणेन स्वत एव भूषितं भाष्यं भूषितमिवेत्युपचर्यते । नास्य स्वभावसुन्दरस्य भूषणान्तरेण किंचित्प्रयोजनम् । तथा ह्युक्तम्—'उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः' इति । एतावतैवास्य शांकरपादभूषणत्वं विवक्षितमित्येव निबन्धयितुराशयं प्रतीमः । एतेन शांकरमतानुसारित्वं स्वग्रन्थस्य प्रामाणिकत्वेन श्रद्धेयत्वात्समादरणीयत्वं च स्फोरितम् ।

सोऽयं रघुनाथसूरिर्न्यायमीमांसावेदान्ताद्यनेकतन्त्रमर्मवधानिष्णातः खरतरबाणकोटिविद्धावितविशिरोदूषणादिनिशाचरः श्रीरामचन्द्र इव श्रुतिशिरोदूषणपङ्क-

बांदिनक्तंचरान्कादिशीकान्कुर्वन्रघुनाथ इत्यन्वर्थनामाऽऽसीदिति प्रकृतग्रन्थं ग्रथ्नयता प्रत्यक्षम्। अतिशयोक्त्यंश वर्जयित्वा वक्तव्यं चेत्तदाऽपि न्यायमीमांसाद्यनेकशास्त्राणा मार्मिक ज्ञान रघुनाथसूरिषु प्राचुर्येण सकलितममूदिति केनाऽप्यनुररीकर्तुमशक्यम्। किंच तादृशज्ञान न यावत्तावत्किंतु पर्वतप्रायं प्राज्य समभूत्। अत एवैनान्पण्डितप्रवरान्पण्डिता अपि जनाः 'पर्वते' इत्यन्वर्थेनोपनाम्नाऽऽजुहुवुरिति तर्कयामि। युज्यते चाय तर्क। अत्रैव पुण्यपत्तने मेहुणपुरासंज्ञिकाया वीथ्या 'श्रीमन्त सरदार' इति राजमान्यपदवीविभूषित चित्तपावनद्विजकुल प्रतिवसति। निरुक्तकुलस्य पेशवाराज्यकाले युक्तप्रवचनाद्युक्ताचरणाद्युक्तधीप्रदानाच्च ( रास्त बोलणें, रास्त करणें, व रास्त सल्ला देणें, यामुळें ) 'रास्ते' इत्युपनाम सपन्नमित्याख्यायिका श्रूयते। तदेव चोपनामाद्ययावत्प्रचलित वर्तते, तद्वदिदमपि स्यात्। यद्यपि रघुनाथसूरेः प्राचीनेषु तत्पितृपितामहप्रपितामहादिष्वपि 'पर्वते' इत्येवोपनामाभूत्तथाऽपि तेषाऽमुष्योपनाम्नोऽन्वर्थता रघुनाथसूरिमि पुनरुज्ज्वालितेत्यत्र तात्पर्यम्। तदेतत्सर्वं 'रघुनाथसूरि.' इति सूरित्वेनाऽऽत्मानमुल्लिखता निबन्धयित्रा स्वयमेव सूचितमिति न केनापि मदुक्तावश्रद्धा कर्तव्येति प्रार्थये।

अथास्य ग्रन्थस्य कर्ता कदा समुत्पन्नः कस्मिन्देशे कस्मिनृषिकुले च समुत्पन्नः किंनामधेयौ चास्य मातापितरौ किं किं कृतमनेनेत्यादिचरितविषये स्वनामोल्लेखमन्तरा नान्यत्किमप्युपलभ्यते। महदिद दुःखस्थानं यद्भारतीयाः प्राचीनविद्वांसो ग्रन्थप्रणेतारोऽपि ग्रन्थान्ते निजवृत्तादि लेखनेन नाऽऽत्मान परिचाययन्ति. महता प्रयासेन तेषा ग्रामनामादिक ज्ञातव्य भवति। प्रयासश्चात्र पुरातनकथाकोविदग्रामवृद्धमुखात्परम्परया श्रवणमेवेति तदाश्रित्य किंचिदुपन्यस्यते रघुनाथसूरिपरिचायक चरितम्—

शाकरपादभूषणग्रन्थस्य ग्रथयिता रघुनाथसूरिर्बह्वृच शाकलशाखी आश्वलायनसूत्रश्चित्तपावनजातीयो वासिष्ठगोत्रोत्पन्नः सन्स्वजनुषा 'पर्वते' इत्युपाभिख्य साभिख्य द्विजकुलमलंचकार। अलचकार च कुशाग्रधिषणतयाऽल्प एव वयसि गृहीतसर्वतन्त्ररहस्यस्तादानिकीं विद्वन्मण्डलीम्। अमुष्य सूरे पितुर्नाम 'रामचन्द्रः' इति। अनेन हेतुना जननीनामापि सामान्यतोऽनुमातुं शक्यम्। अनेन पण्डितेन श्रीमद्भगवद्गीताया पदभूषण नाम संस्कृतव्याख्यान, तथा भाषाविवृतिर्नाम महाराष्ट्रव्याख्यान च कृतमस्ति। यद्यपि कोऽस्याभिजन इति न निश्चेतु पार्यते तथाऽपि वरहट्ट(वह्हड)देशे पर्वतोपनामके सदाचारसपन्न पावन विद्यामण्डित च द्विजकुल प्रतिवसतीति साम्प्रतमपि

श्रूयते । एतेषां द्वितीयगृहिणी वेराट( वाई )क्षेत्रस्था । रघुनाथसूरिणामात्मजः ' रामशास्त्री पर्वते ' इत्यभिधेयो भोरराजधान्या राजाश्रितो नीतिवक्ता(सरकारी वकील)आसीत् । एतेषां नप्ताऽपि विराटप्रान्ते कुत्रचिद्वसतीति कर्णोपकर्णिकया श्रूयते ।

अस्य श्रीरघुनाथसूरेर्देशिको मीमांसान्यायपञ्चास्यराघवाचार्यसूरिः । तदुक्तं रघुनाथसूरिभिरेव—

> मीमांसान्यायपञ्चास्यराघवाचार्यसूरिणाम् ।
> शिष्यस्य शांकरे भाष्ये भूषणे परदूषणे ॥ इति ।

शिष्यशब्दस्य यत्किंचिन्निरूपितार्थप्रतिपादकत्वान्निरूपितार्थस्य च नियमेन निरूपकसापेक्षत्वाच्छिष्यत्वनिरूपकगुरुत्वाकाङ्क्षायामुपस्थित परित्यज्यानुपस्थितकल्पने मानाभाव इति न्यायेन पूर्वार्धोपात्तराघवाचार्यसूरिणा तन्निरूपकत्वेनान्वयाद्रघुनाथसूरेर्गुरू राघवाचार्यसूरिरिति लभ्यते ।

अयं च राघवाचार्यसूरिः शैव शांकरमतानुयायी, सांप्रतिकश्रूयमाणसप्तर्षि( सातारा )पुरस्थगजेन्द्रगडकरकुलजनुषो राघवाचार्याद्भिन्न एव । गुरुनिर्देशपरे वाक्य आचार्येति सामान्यपदश्रवणमात्रेण मध्वमतानुयायिनो वैष्णवस्य गुरुत्वकल्पनं साहसमात्रं स्यात् । तदन्यस्यापि शांकरमतानुयायिनः शैवस्य राघवाचार्यस्य प्रसिद्धत्वात् । अन्यथाऽमीषा रघुनाथसूरिणा कथमीदृशे कुशाग्रधिषणेनाप्यनिर्ग्राह्ये शांकरेऽद्वैतमते मार्मिक पाण्डित्यातिशयो लभ्येत । कथ वा गुरोरभीष्टं द्वैतमतं सर्वथोज्जासयितुमुद्युञ्जीत । किंच मध्वमतानुयायी राघवाचार्यो वैयाकरणत्वेन प्रसिद्धो न नैयायिकत्वेन नापि मीमांसकत्वेन । दूरे तत्र न्यायमीमांसादिपञ्चास्यत्वम् । न चाप्ययं नियमो यदाचार्यपदं मध्वमतानुयायिन्येव प्रयुज्यत इति । शंकराचार्यसुरेश्वराचार्येत्यत्राद्वैतमतप्रवर्तकेऽप्याचार्यपदप्रयोगात् । तस्माद्वेदशास्त्रादिगतसूक्ष्मसूक्ष्मतरार्थप्रवचनपाटवेन स्वयंप्राप्ताचार्यपदवीकोऽयं महाभागो राघवाचार्यो मध्वमतानुयायिनो भिन्न एव । पञ्चास्येति विशेषणेन वादिमत्तमतंगजगण्डभित्तिविदारणे मृगेन्द्रस्येव स्वगुरोः सामर्थ्यमासीदित्याविष्कृत भवति । तेन च तादृग्गुरोः शिष्यस्य ममापि दुर्वादिद्विरदनक्रचरकुटिलकुतर्कजालसमूलोच्छेदने शक्तिरस्तीति स्वाहंकारपरिहारपूर्वकं सूचयति ।

एवं गच्छता कालेन प्रतिभाशालिनोऽस्य पण्डितस्य सर्वतः प्रथितान्गुणगणाञ्श्रुत्वा मुख्य आङ्ग्लाधिकारी अत्रैव पुण्यपत्तने पण्डितप्रवरमेनं

न्यायाधीशपदं ग्राहयामास । पण्डितोऽपि तदनुमान्य स्वाधिष्ठानेन न्यायासनं भूषयांबभूव । कारयांबभूव च चिराय जनमनोरञ्जनं युक्तन्यायप्रदानेनेति वक्तृपरम्परया श्रूयते । तत्सत्यत्वे नाहं प्रमाणम् करवीरसिंहासनाधीश्वरमहाराजसत्सद्यपि कतिचन संवत्सरान्मुख्यन्यायाधीशपदमलङ्कुर्वाणा आसन्नेते रघुनाथपण्डिता इत्यप्यवगम्यते ।

इमे पश्चिमे वयसि च नेत्राश्वार्षिभूमिते वत्सरे ( शा० १७७२ ) नीरातीरसमीपस्थभोरमण्डलाधीश्वरान्पण्डितपदालङ्कृत ' * नानासाहेब ' पंतसचिवान्समाश्रयन् । तदानीमेवासावद्वैतरत्नरक्षणकरण्डकं शाङ्करपादभूषणं नाम निबन्धो विरचितस्तदाश्रयेणैव शिलाक्षरैरङ्कितश्च । तदुक्तं ग्रन्थकृता स्वयमेव—

नीरातीरसमीपस्था नगरी भोरसञ्ज्ञिका ।
येषां रम्या राजधानी श्रीरामः कुलदैवतम् ॥
नानासाहेबनाम्ना ये प्रसिद्धास्तु तदाश्रयात् ।
सिद्धिं गतश्च ग्रन्थोऽयमङ्कितश्च शिलाक्षरैः ॥ इति ।

अथ भेदाभेदयोस्तुच्छत्वस्वच्छत्वाधिगमाय द्वैताद्वैतवादिनोर्मतप्रक्रिया क्रियत्यपि विविच्य प्रदर्शयिष्यते—

मध्वाचार्याणां मतं द्वैतम् । द्वैतं नाम भेदः । स च जीवजडेश्वरादिभेदात्पञ्चविधः सन्सत्योऽनादिश्च । यदि च सादिः स्यात्तर्हि नाशमाप्नुयात् । न च कदाऽपि नाशमुपैति । तथा यदि चायं भेदोऽसत्यः स्यात्तदा तस्य भ्रान्तिकल्पितत्वं स्वीकार्यं स्यात् । न चासौ भ्रान्तिकल्पित इति मन्तव्यम् । कल्पितस्य निवृत्त्यवश्यंभावात् । नैव चैष कदाऽपि निवर्तते । तस्मात्सत्योऽनादिश्चायं भेदप्रपञ्चः । एवं च द्वैतं न विद्यत इति यन्मतं तदज्ञानिनां मतमिति बोद्धव्यम् ।

श्रुतिरप्यत्रार्थे प्रमाणम् । तथा हि—' सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवाऽऽरुवण्यो मैवाऽऽरुवण्यो मैवाऽऽरुवण्यः ' इति । अस्यार्थः—आत्मा परमात्मा सत्यः । त्रिकालाबाधित इत्यर्थः । तथा जीवः सत्यः । तयोर्जीवेश्वरयोर्भेदश्चापि सत्यः । मैवाऽऽरुवण्य इत्यत्र मा एव आरुवण्य इति पदत्रयम् । तत्र मा इति निषेधार्थकमव्ययम् । एवेति निश्चयद्योतको निपातः । आरुभिर्दुष्टैर्वण्यो भजनीय आरुवण्यः । मैव नैव । एवं च परमात्मा दुष्टजनसेव्यो नैव भवतीत्यर्थः ।

* त इमे भोरमण्डलनरेशाः पण्डितनानासाहेबपंतसचिवाः संप्रति भोरराज्यासनमलंकुर्वाणेभ्यः पण्डितपंतसचिवरघुनाथरायेभ्यः प्राचीनास्तार्तीयीकास्तत्पितामहपूज्यपादा इत्यवधेयम् ।

सेव्यं मिदेति मैवाऽऽरुवण्य इति च त्रिर्वचनं भेदमत्यत्वदार्ढ्यं प्रदर्शयितुम् । अस्यां श्रुतौ स्पष्टमेव भेदोऽभिहित । नह्यभेदे सति भेददार्ढ्ये सेव्यसेवकभावो वाऽञ्जसा सगच्छते ।

न च ब्रह्म वेद ब्रह्मैव भवतीति श्रुतिबलाज्जीवेश्वरयोरभेद शक्यशङ्क इति वाच्यम् । 'संपूज्य ब्राह्मण भक्त्या शूद्रोऽपि ब्राह्मणो भवेत्' इतिवत्प्रशंसापरत्वादभेदश्रुते । नहि ब्राह्मणपूजया शूद्रो ब्राह्मणजातिता लभते किंतु ब्राह्मणवत्प्रशंसनीयो भवतीत्यर्थ ।

तत्त्वमसीति महावाक्यमपि भेदप्रतिपादकमेव । तस्य त्व तत्त्वमिति षष्ठीसमासमङ्गीकृत्य तस्येश्वरस्य त्व दासोऽसीत्यर्थात् । अथवा 'स आत्मा तत्त्वमसि श्वेतकेतो' इत्युद्दालकस्य स्वपुत्र श्वेतकेतु प्रत्युपदेशपरे वाक्ये 'आत्मा अतत्त्वम्' इति पदच्छेद । अतदित्यत्र च नञर्थो भेद. । तथा च य स्वातन्त्र्यादिगुणोपेत स एव परमात्मा । त्वं त्वतत् । तस्मादात्मनो भिन्न. परतन्त्रो जीवोऽसीत्यर्थात् । एव च जीवेश्वरयो सेव्यसेवकभावात्तयोर्भेद सिध्यतीति द्वैतवादिन आचार्या प्राहु ।

अद्वैतवादिन. श्रीशङ्करगुरुचरणास्तु—

> सजातीय न मे किंचिद्विजातीय न मे भवेत् ।
> स्वगत च न मे किंचिन्न मे भेदत्रय भवेत् ॥

इति श्रुतौ परस्मिन्ब्रह्मणि सजातीयाद्विजातीयात्स्वगताच्च भेदः प्रतिषिध्यते । यदि च मध्वमतानुसारेण भेदो वास्तविक स्यात्तर्हि चेतनत्वेन सजातीयाज्जीवादचेतनत्वेन विजातीयाज्जडाद्रामानुजमते ब्रह्मण सगुणत्वेन स्वगताद्गुणाच्च ब्रह्मणि भेदस्य दुर्वारतया भेदत्रयनिषेधप्रतिपादिका श्रुति पीड्येत । जीवब्रह्मणोर्वास्तविकत्वेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽपि न सगच्छेत । 'नेह नानाऽस्ति' 'नेति नेति' इत्याद्या श्रुतयोऽप्यमुमेवाभेद प्रथयन्ति । 'सर्वं खल्विद ब्रह्म, ऐतदात्म्यमिदं सर्वम्' इत्येवमादिश्रुतयश्च त द्रढयन्ति । ततश्च भेदत्रयनिषेधान्यथानुपपत्त्या परिदृश्यमानस्य सचराचरस्य सचेतनाचेतनस्य सर्वस्य जगत प्रातिभासिकत्वकल्पन विना गत्यभावात्तदुपपादकमनादिमावरूपाज्ञान परिकल्पनीयम् । यथैव हि रज्ज्वा तिमिरादिदोषवशात्सर्पभूच्छिद्राम्बुधारा. परिकल्प्यन्त एवं चिन्मात्रवपुषि परे ब्रह्मणि परिकल्पितमिदमनेकभेदभिन्नं सकलं जगन्मिथ्याभूतम् । यथावस्थितब्रह्मस्वरूपावबोधबाध्य च । मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् । यथा भ्रमाधिष्ठान-

भूतरज्जुतत्त्वज्ञाने प्रतीयमानसर्पादेर्निवृत्तिः । दोषश्चात्र स्वरूपावरोधानविवि च्छिन्नविक्षेपकरं सदसद्भ्यामनिर्वचनीयमनाद्यविद्यापरपर्यायं भावरूपाज्ञानमेव । इदमेव सर्वस्य जगतो मूलकारणमिति मूलाज्ञानमित्युच्यते । तच्च त्रिगुणात्मकमपि न सांख्यसंमतप्रधानवन्नित्यम् । मोक्षावस्थायां तस्य विनाशावश्य भावात् ।

एतादृशाज्ञाने प्रमाणं—'देवात्मशक्तिं स्वगुणैर्निगूढाम्, भूयश्चान्ते विश्वमाया-निवृत्तिः, पराऽस्य शक्तिर्विविधैव श्रूयते' इत्याद्याः परःसहस्राः श्रुतयः । अत्र स्वगुणैर्निगूढां मायानिवृत्ति पराऽस्य शक्तिर्विविधैवेत्यादिपदैः पूर्वोक्तविशेषणविशिष्टस्य तादृशाज्ञानस्य स्पष्टमेवोपपादितत्वात् । अतो न कथमपि द्वैतप्रसङ्ग इति ।

यत्तूक्तम्—'सत्य आत्मा सत्यो जीवः सत्यं भिदा' इति श्रुत्या भेदः, तस्य च सत्यत्वं प्रतिपाद्यत इति श्रुतिस्तत्र प्रमाणमिति । तन्न विचारसहम् । 'अनन्यलभ्यः शास्त्रार्थः' इति न्यायेन शास्त्रादतिरिक्तेन प्रमाणेन यन्न लभ्यते तत्रैव शास्त्रस्य तात्पर्यम् । 'नीलं पीताद्भिन्नम्' इत्यत्र नीलपदार्थो भेदस्याऽऽश्रयः । पीतपदार्थस्तु भेदस्य प्रतियोगी । भेदनिरूपक इति यावत् । तत्र च नीलस्य भेदधर्मित्वेन ज्ञानं तथा पीतस्य भेदप्रतियोगित्वेन ज्ञानं यदि स्यात्तदेव भेदज्ञानं संभवतीति भेदः प्रत्यक्षादिभिरप्यवगम्यत इति स्वयैवोक्तत्वेन न सत्यं भिदेति निरुक्तश्रुतेस्तत्र तात्पर्यं संभवति । किंत्वाग्निहोत्रं जुहुयादित्युत्पत्तिवाक्येन विहितस्य हवनस्य दध्ना जुहुयादित्यादौ पुनर्विधानस्य चर्वितचर्वणन्यायेनानुपयोगाद्यथा तदनूद्यते तथा प्रत्यक्षप्रमाणादेव भेदस्य सिद्धत्वेन पुनस्तस्यैव तात्पर्यतः प्रतिपादनेऽनुत्साहात् 'नान्योऽतोऽस्ति' इत्याद्यनेकाभेदश्रुतिविरोधाच्च निरुक्तश्रुतेर्निषेधापेक्षितसत्यत्वेन प्रतीतव्यावहारिकभेदानुवादपरत्वेन स्वार्थपरत्वाभावादपूर्वबोध्यत्वलक्षणप्रामाण्यानुपपत्तेः । अभेदश्रुतेः कथमपि व्यावहारिकभेदाविषयत्वासंभवेन पारमार्थिकाभेदपरत्वस्यैव वक्तव्यतया स्वार्थपरत्वादपूर्वबोध्यत्वलक्षणप्रामाण्योपपत्तेः ।

किंवाऽस्तु वा प्रामाण्यं तथाऽपि 'नेह नानाऽस्ति नात्र काचन भिदाऽस्ति' इत्यादिभिर्भेदनिषेधपरश्रुतिभिरविरोधाय निरुक्तश्रुतेर्भेदनिषेधपरत्वमेवास्तु । तथा हि—सत्य आत्मेत्यात्मनस्त्रिकालाबाध्यत्वमाह । किं तर्हि, जीवत्वमपि वास्तवमि-मेत्याह—असत्यो जीव इति भावप्रधानो निर्देशः । जीवत्वमिति यावत् । विशिष्टनिषेधस्य विशेष्ये बाधे विशेषणोपसंक्रमात् । द्विविधे पदविभागे संभवत्यपि बह्वभेदश्रुतिवाक्यानुरोधेनोक्तन्यायेन चात्रासत्य इति पदच्छेद एवो-

त्वित । एवं सजातीयभेदं निराकृत्य विजातीयभेदं निराकरोति—सत्यं चानृतं च सत्यमभवदिति । सत्यशब्देन पञ्चभूतात्मकं जगत्प्रतिपाद्यते । 'सच्च त्यच्चाभवत्' इति श्रुतेः । तत्र सदिति पृथिव्यप्तेजांसि । त्यदिति वाय्वाकाशौ । तदेव भिद्यत इति भिदा । असत्यमनिर्वचनीयम् । तस्य दार्ढ्याय पुनरुक्तिः 'भिदाऽसत्या भिदेति' । काकाक्षिगोलकन्यायेनासत्यमित्यस्योभयत्रानुषङ्गः । स्मृतिरपि भेदं निषेधति—विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ इति रघुनाथसूरय आहुः ।

किंच भेदवाद्यभिमतो जीवब्रह्मणोर्भेदो यदि सत्यः स्यात्तदा तयोरभेदो ब्रह्मणाऽपि निर्वक्तुमशक्यः । नहि वस्तुतः परस्परस्माद्भिन्नयोर्गवाश्वयोरभेदः प्रतिपाद्यमानः संगच्छते । अतः श्रुत्युपवर्णिताभेदनिर्वाहाय प्रतीयमानो भेदः कल्पनाधीन इत्यवश्यमभ्युपगन्तव्यम् ।

अपि च प्रसिद्धाखिलशाखास्वनवगमात्सत्यं भिदेत्यस्याः श्रुतित्व एव विप्रतिपत्तेः ।

अस्त्वस्याः श्रुतित्वे विप्रतिपत्तिः । इयमपरा प्रसिद्धशाखास्वाम्नाता 'क्षरात्मानावीशते देव एकः' 'पृथगात्मानं प्रेरितारं च मत्वा' 'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यादिका भेदग्राहिणी श्रुतिरस्ति । ननु 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदꣳ सर्वम्' इत्यादिरप्यद्वैतग्राहिणी श्रुतिरास्ति । अस्तु नाम किं तत इति चेच्छृणु—द्वैतवादिनो मध्वाचार्यादयो हि भेदप्रतिपादिकां श्रुतिं परमार्थत्वेनोररीकृत्य तदनुसारेणाभेदग्राहिणीं श्रुतिमौपाधिकीं वदन्ति । अद्वैतवादिन आचार्यचरणास्तु—अभेदश्रुतिं परमार्थतयाऽङ्गीकुर्वन्तो भेदश्रुतिमौपाधिकीं प्रतिपादयन्ति । तदुक्तमद्वैतामोदेऽस्मद्गुरुचरणैः—'अद्वैतश्रुतयः सदर्थविषया भेदोक्तिरौपाधिकी' इति । एवं च श्रुतिमूलकत्वाविशेषात्कतरामद्वैतवाद एव जेजीयतामिति चेद्भ्रान्तोऽसि । कुत इति चेत्—भेदाभेदयोस्तेजस्तिमिरवदत्यन्तपरस्परविरोधित्वात्तयोर्द्वयोरपि श्रुतितात्पर्यविषयत्वस्य साक्षात्सहस्रवदनेनापि वदितुमशक्यत्वादभेदस्यैव श्रुतितात्पर्यविषयत्वेन भेदोक्तेर्गौणार्थत्वं विनाऽगतेः ।

एवं चेद्भेदाभेदयोर्द्वयोरपि श्रुतितात्पर्यविषयत्वाविशेषादभेदस्यैव श्रुतितात्पर्यविषयत्वे विनिगमकाभावेनान्यतरस्य तात्पर्याविषयत्वेऽन्यतरस्य च गौणार्थत्वेऽवश्यं स्वीकर्तव्ये भेदप्रतिपादकश्रुत्यनुसारादभेदस्यैव गौणार्थत्वं किं न स्यादिति चेच्छ्रूयतामिदम् । 'क्षरात्मानावीशते देव एकः' इत्यादिका हि भेदग्राहिका श्रुतिः । 'तत्त्वमसि' इत्यादिका पुनरभेदग्राहिणी । तत्र तत्त्वमसीत्यादौ तत्त्वंपदयोः सामा-

न्याभिकरण्याचदभिन्नस्तदेव त्वमसीति मुख्यया वृत्त्या शक्त्यैवाभेदं प्रदर्शयति श्रुतिः। भेदश्रुति पुनर्न मुख्यवृत्त्या शक्त्या भेद प्रतिपादयति किंतु वाच्यवृत्त्या नियन्तृनियम्यभावमेव प्रतिपादयति। स च नियन्तृनियम्यभावो भेदपूर्वक इति तदन्यथानुपपत्त्या तयाभेदमाक्षिपति। एव चाऽऽर्थिको भेदो न वाच्य.। अभेदः पुन. शाब्दत्वेन प्रत्यक्ष। सत्येवं प्रत्यक्षाप्रत्यक्षयो. प्रत्यक्षस्यैव बलिष्ठत्वादभेदश्रुतेरेव पारमार्थिकत्वम्। भेदस्यैव चाऽऽर्थिकत्वेन 'गुणे त्वन्याय्यकल्पना' इति न्यायेन भेदश्रुतेश्च गौणार्थत्व युक्तम्।

न च यद्यभेदस्यै। श्रुत्यभिप्रेतत्वमिष्येव तर्हि जीवेशयो पारमार्थिकभेद ग्राहिणी 'द्वा सुपर्णा सयुजा सखाया' इति श्रुति. पीड्येतेति वाच्यम्। किं कारणम्। उच्यते—न तया श्रुत्या परमार्थतो भेद प्रतिपाद्यते। तस्य पदार्थत्वाभावाद्वाक्यार्थत्वाभावाच्च। किंतु द्वा सुपर्णा इत्यादिद्वित्वार्थकप्रत्ययोपादानसमधिगम्य इति तस्य जीवब्रह्मणोरैक्यस्यैव पारमार्थिकत्वाभावात्। द्वित्वार्थोपत्तिसमधिगम्यस्यापि श्रौतत्वमेवेति तस्य पारमार्थिकत्वमेवेति चेदस्तु नाम। तथाऽपि 'द्वौ चन्द्रमसौ' इत्यत्र यथा द्वित्वस्य श्रौतत्वेऽपि पारमार्थिकत्वाभावेनागत्या काल्पनिकत्व कल्प्यते तथाऽत्रापि भेदस्य श्रौतत्वेऽप्यभेदश्रुतिविरोधेन पारमार्थिकत्वस्य वक्तुमशक्यत्वेनानायत्या काल्पनिकभेदपरत्वस्यैव वक्तव्यतया तादृशापारमार्थिकत्वस्याकिंचित्करत्वात्।

यत्पुनरुक्तम्—ब्रह्म वेद ब्रह्मैव भवतीत्यभेदश्रुते सपूज्य ब्राह्मण भक्त्येति वत्प्रशंसापरत्वादिति। तत्रोच्यते—सर्वं खल्विद ब्रह्म, ऐतदात्म्यमिद सर्वम्, इत्यादिबह्वभेदश्रुतिभिरैकवाक्यतया सामानाधिकरण्येन च शब्दमर्यादया वाच्यवृत्त्याऽभेदप्रतिपादकत्वे सिद्धे स्वेच्छया विना कारण जघ यल्लक्षणावृत्तिकल्पनेन प्रशंसापरत्ववचनस्यात्यन्तायुक्तत्वात्। तथा सति गङ्गाया स्नातीत्यत्रापि गङ्गापदस्य लक्षणयाऽन्यन्नापवित्रदेशाभिधायकत्वापत्त्या तत्र स्नातुस्तादृशापवित्रदेशप्राप्तिप्रयोजकत्वापवत्त्वकल्पनप्रसङ्गापातात्। यदि चानुपपत्तितो जघन्यवृत्ति स्वी क्रियत इति ब्रूषे चेत्। का च ब्रह्म वेद ब्रह्मैव भवतीत्यत्र जीवब्रह्मणोरभेदप्रतिपादनेऽनुपपत्तिरिति वक्तव्यम्। भेदप्रतिपादकश्रुत्यनुपपत्तिरिति चेत्। या तु भेदप्रतिपादिनी श्रुतिरुदाहृता न सा वाच्यवृत्त्या भेदप्रतिपादिका। किंत्वर्थापत्त्याक्षिप्तभेदाभिधायिनी। ब्रह्म वेदेति तु साक्षादभेदाभिधायिनीति प्रागुक्तमेव। तथा चाप्रत्यक्षत्वेन दुर्बला भेदश्रुति. प्रत्यक्षत्वेन बलिष्ठामभेदश्रुतिं विरोद्धु नोत्सहते। विरोधस्य तुल्यबलप्रयुक्तत्वात्। अन योस्तुल्यबलत्वात्। न ह्यतुल्यबलयो. परस्परं विरोधो लोके दृष्टपरः।

क खलु खरनखरायुधयोर्विरोध । कीदृशो वा तृणस्य भगवतोऽर्बुदेन साकं विरोध ।

नाप्यनुपपन्ना भेदश्रुति । द्वौ चन्द्रमसावित्यादाविव काल्पनिकभेदानुवादकत्वेनाप्युपपत्तेः ।

किंच ' तत्सृष्ट्वा तदेवानुप्राविशत् ' इत्याद्या श्रुतयो जीवब्रह्मणोरभेदमेव स्पष्टमवगमयन्ति । ' नेह नाना ' इत्याद्य श्रुतयोऽप्यमुमेवाभेद प्रशसन्ति । ऐतदात्म्यमिदमित्यादयश्च त द्रढयन्ति । तस्माद्ब्रह्म वेदेति श्रुतिरभेदपरैवेति युक्तम् ।

यच्चोक्तम्—स आत्मा तत्त्वमसीत्यत्र आत्मा, अतत्, त्वम्, इति पद च्छेद इति । तदसत । तथा हि—छान्दोग्ये षष्ठप्रपाठके सदेव सोम्येदमग्र आसीदित्युपक्रमात्, ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि, इत्युपसहाराच्चाद्वितीयब्रह्मण एव प्राकरणिकतया तदनुरोधेनैव तत्त्वमसीत्यस्य व्याख्येयत्वेन जीवब्रह्मणोरभेदस्यैव तत्तात्पर्यविषयतया तदिति च्छेदस्यात्यन्तासंगतत्वादिति बोध्यम् ।

इत्थमन्येषामपि परोक्तानामद्वैतवादविषयकाणामाक्षेपाणा रघुनाथपण्डितैरतीव मार्मिकप्रवचनेनात्र निरसन विहित तत्तत एवावधार्यम् । विस्तरभयान्नेह प्रपञ्च्यते । उदाहरणत्वेन दिङ्मात्रमिह प्रदर्शितम् । एवमिष्टाद्वैतपरिपोषकत्वेनानिष्टद्वैतपरिहारकत्वेन चोभयोपकारि महामाहिमशालि च—

> भाष्ये शंकरभाषितेऽद्वयपरे सद्देशिकैर्योजिते
> वादिव्याहृतदोषचूषणपुरस्कारेण तद्दूषणे ।
> एतद्धै रघुनाथसूरिरचित विद्वन्मनस्तोषद
> श्रीमच्छांकरपादभूषणमिद जीयाज्जगत्या चिरम् ॥

इति सत्याधीशितु. सच्चिदानन्दस्य सविधे प्रणतिततिपुरःसरं प्रार्थयते—

| पुण्यपत्तने पौष शु० नवम्या इन्दुवासरे श० १८५५ | आनन्दाश्रमस्थप्रधानग्रन्थावलीसस्करणाधिकृतो मारुलकरोपाख्यः शंकरशास्त्री भारद्वाजः । |
|---|---|

# अथ शांकरपादभूषणस्थविषयाणामनुक्रमणिका ।

## द्वितीयो भागः ।

—०।—

इति शांकरपादभूषणस्थद्वितीयभागस्थितविषयाणा-
मनुक्रमणिका ।

===

# अथान्तस्तद्धर्मोपदेशाधिकरणम् ।

—०— ○ —०—

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

सविशेषब्रह्मनिरूपणस्य यथा शास्त्रादिसंगतिस्तथा प्रागेवोक्तमानन्दमयाधिकरणोपक्रमे । पूर्वाधिकरणे बहुभिः प्राधान्यलिङ्गैरेकमप्राधान्यद्योतकं पुच्छपदमिवेह बहुभिरनीश्वरधर्मैः सर्वपाप्मोदितत्वं यथाकथंचिद्व्याख्येयमिति प्रत्यवस्थानादनन्तरसंगतिः । इदमाम्नायते—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः' 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' 'इत्यधिदैवतम्' (छा० १।६।६,७,८)'अथाध्यात्मम्' 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छा० १।७।१,५) इत्यादि । आप्रणखात्—प्रणखो नखाग्रं तदभिव्याप्य । तस्य यथा कप्यासं पुण्डरीकमित्यत्र कप्यासशब्दो लक्षणया तत्सदृशपरः । आस्त उपविशत्यनेनेत्यासः पश्चाद्भागः, कपेर्मर्कटस्याऽऽसो गुदभागस्तत्सदृशं रक्तवर्णमिति पर्यवसितोऽर्थः । पुण्डरीकं पद्मं यथा, एवं तस्य मण्डलान्तर्वर्तिनः पुरुषस्याक्षिणी इति छान्दोग्यभाष्ये श्रीमद्भगवत्पादैरर्थो वर्णितः । अन्यैस्तु—अस्मिन्नर्थे कप्यासपदे लक्षणा कप्यासपदस्योक्तव्युत्पत्त्या मर्कटगुदपरत्वे हीनोपमा च स्यात् । सादृश्यपरेण कप्यासशब्देन पुण्डरीके रक्तत्वलाभेन 'पुण्डरीकं सिताम्भोजम्' इति कोशवचनविरोधश्च स्यादिति मत्वा कं जलं पिबतीति कपिः सूर्यस्तेनाऽऽसितं विकसितं कप्यासम् । यद्वा कं जलं पिबतीति कपिः पद्मनालस्तत्राऽऽस्ते इति कप्यासम् । यद्वा कं पिबतीति कपिस्तस्मिन्कपि, समन्ताद्भवा अलुक्समासे कप्यासम् । यद्वा कऽऽप्यास्त इति *कप्यासम्, इति पुण्डरीकविशेषणे बहवो व्युत्पत्तयो दर्शिताः । तत्राऽऽचार्याणामयमाशयो वर्णितस्तदनुयायिभिः—योगाद्रूढिर्बलीयसीति न्यायेन कपिशब्दस्य रूढ्यर्थग्रहणसंभवे योगाश्रयणं

---

* कप्यासमिति । अस्मिन्पक्षे—'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति भागुरिमतेनाप्युपसर्गाकारस्य लोपो बोध्यः ।

नन्याय्यम्। आसशब्दश्च सर्वेषु पक्षेषु यौगिक एव। यद्यपि कपिशब्दस्य रूढ्यर्थपरत्वे कप्यासशब्दो लाक्षणिकस्तथाऽपि रूढिपूर्वकलक्षणापेक्षया यौगिकार्थग्रहणं जघन्यम्। योगमपेक्ष्य रूढेः शीघ्रोपस्थितिकत्वेन तन्मूललक्षणाया अपि शीघ्रोपस्थितिकत्वात्। अपि च कपिशब्दस्याऽऽदित्यपरत्वे योगोऽप्यतिक्लिष्ट एव। कं पिबतीत्यत्राऽऽदित्ये मुख्यजलपानस्य बाधात्। आदित्यकिरणसंपर्काज्जलं शुष्यतीत्येतावन्मात्रमवलम्ब्याऽऽदित्यकिरणानां जलग्रहीतृत्वमुपचरणीयम्। जलग्राहकाङ्गारकस्येवाऽऽदित्यकिरणानां जलादर्शनप्रयोजकत्वसाम्यात्। तस्मिंश्चौपचारिके ग्रहणेऽयःपीताम्बुन्यायेन पानत्वमारोप्य किरणकर्तृकमादित्यकर्तृकताऽध्यवसनीया। एवं कपिशब्देनाऽऽदित्यं लक्षणया व्युत्पाद्य तद्विकसितत्वमपि पद्मानां कष्टेनैव व्याख्येयम्। नहि रात्रौ मुकुलितानि पद्मानि पुनः प्रातः सूर्यो विकासयति। किंतु किंचित्कालं मुकुलितानि विकासावस्थां प्राप्तानि न पुनर्मुकुलितानि भवन्ति। अत एव काननमात्रे सिंहशार्दूलादि नदीमात्रे हंसचक्रवाकादि नगरमात्रेऽत्युन्मत्त(न्नत)गोपुरप्रासादादि कीर्तौ धावल्यं प्रतापे लौहित्यं चन्द्रोदयमात्रे कुमुदविकासो दिवा सूर्यकृतः पद्मविकास इति कविसमय इत्यालंकारिकैरुक्तम्। रात्रौ मुकुलितानां दिवा विकासः पद्मानामिति नियमोपगमेऽपि कालकृत एव सः, न सूर्यकृतः। सूर्यस्य सर्वदा सत्त्वेन सर्वदा विकासापत्तेः। तत्तत्कालोपलक्षितसूर्यस्य विकासकत्वे कालस्यैव तद्युक्तम्। अत एव रामायणे कविप्रौढोक्तिसिद्धं दिवा गाढान्धकारं प्रस्तुत्य—

> निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः।
> विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः॥

इति कालकृतावेव विकाससंकोचौ प्रतिपादितौ। एवमाद्ययोगोऽतिक्लिष्ट एव। द्वितीयतृतीययोगयोस्तु नालस्य जलग्रहणकर्तृताऽस्त्येव। ग्रहणे पानत्वमात्रमुपचरणीयम्। आसशब्दे च न क्लेश इति नातिक्लिष्टावेतौ। के जलेऽप्यास्त इति तुरीययोगस्त्वतिक्लिष्ट एव। तथाऽपि सर्वेष्वेतेषु योगेषु कशब्देनाप्रसिद्धं

जल ग्राह्यमिति निहतार्थत्वदोषो दुर्वार । आद्येषु त्रिषु कपि-
शब्देन सूर्यो नालो वा ग्राह्य इति निहतार्थत्वमस्त्येव । श्लेषय-
मकादिप्रयोजनं विनाऽप्रसिद्धार्थग्रहण निहतार्थत्व तदेवावाचक-
त्वमप्युच्यत आलंकारिकै । अपि चाऽऽद्ययोग भगवदाश्रयीभूत
आदित्येऽमङ्गलकपिशब्दः प्रयुक्त इत्यश्लीलत्वमपि दोषः ।
द्वितीयतृतीययोर्योगयोर्नेत्रदृष्टान्तभूतपुण्डरीक तदाश्रये च कपि-
शब्दः प्रयुक्त इत्यश्लीलता । अविवक्षितामङ्गलव्रीडादावपि
श्लेषयमकादिप्रयोजन विनाऽर्थप्रत्यायकत्वं पदस्याश्लीलत्वमिति
तल्लक्षणात् । अपि चास्मत्पक्षे न हीनोपमा । हीनोपमा न चक्षु-
रुपमानपुण्डरीकोपमानत्वमात्रेण । चक्षुषि ×हीनोपमाप्रसक्तेः ।
कवयो हि वर्ण्यमान एव हीनोपमान प्रयुञ्जते । यथा—

महामहानीलशिलारुच पुरो निषेदिवान्कंसकृषः स विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥
(मा० १ । १६)

इति माघकाव्य इन्दूदयाश्रयाचलाभिमुख. सायंकालो वर्ण्य-
मानस्य श्रीकृष्णस्योपमानत्वेन निबद्ध । ननु सायकालस्य तम-
स्वित्वेऽपि न हीनत्वम्, अनादिकविसमयस्वीकृतत्वादिति चेत् ।
तर्ह्यनादिवेदस्वीकृतत्वान्मर्कटपश्चाद्भागस्यापि न हीनत्वम् ।
अपि च कप्यासशब्देन रक्तिम्नः पुण्डरीकविशेषणत्वासिद्धौ
तादृशपुण्डरीकोपमितं चक्षुररुणमिति सिध्यति । तच्चाऽऽदित्या-
न्तर्वर्तिपुरुषस्य 'य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य
मध्यात् । स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा
पुनातु' (तै०आ०४।४२।३३) इतिमन्त्रानुमतम् । न च 'पुण्ड
रीक सिताम्भोजम्' इति कोशविरुद्धत्वात्पुण्डरीकपदस्य न
पद्ममात्रपरत्वं रक्तपद्मपरत्व वा किंतु सिताम्भोजपरत्वमिति
शङ्क्यम् । अनेकवृद्धव्यवहारविरुद्धस्य कोशवचनस्याप्रमाण-
त्वात् । शाबरे भाष्ये 'मौद्ग चरु निर्वपच्छ्रीकाम' इतिवाक्य
विहितायामिष्टौ 'पुण्डरीकाणि बर्हींषि भवन्ति' इति बर्हि

× हीनोपमाप्रसक्तेरिति । हीनोपमाया अप्रसक्तेरित्यर्थ. ।

स्थाने पुण्डरीकाणां विधानेन तत्र प्रकृतितः प्राप्ते 'दर्भैस्तृणीत हरितैः' इति मन्त्रे दर्भपदस्थाने पुण्डरीकपदवद्धरितपदस्थाने रक्तपदोहः कर्तव्य इत्युक्तम् । 'आकाशवापीसितपुण्डरीकम्' इति महाकविप्रयोगे पद्मत्वसामान्यमादायैव पुण्डरीकशब्दः प्रयुक्तः । अन्यथा सितेतिविशेषणवैयर्थ्यापत्ते । महापुरुषने त्रोपमानुपपत्तेश्च । पाणिपादतलनखनेत्रान्ततालुजिह्वाधराणां सप्तानां रक्तिमा हि महापुरुषलक्षणम्, इति सामुद्रिकशास्त्रविदो वदन्ति । अत उपजीव्यप्रयोगविरोधे कोशवचनमप्रामाणिक मेवेति ।

अत्राऽऽदित्याक्ष्णोरन्तःस्थत्वेन प्रतीयमानो विद्याकर्मातिशयवशात्प्राप्तोत्कर्षः कश्चिदादित्यपुरुषरूपदेवताविशेषरूपो जीवः स्यादाहोस्वित्परमात्मेति संशयः। ऐश्वर्यमर्यादाधारत्वरूपवत्त्वाद्यनीश्वरधर्माणा सर्वपाप्मोदितत्वादीश्वरधर्माणां च बलाबलान॰वधारणात्।तत्राऽऽदित्याद्यन्तःस्थस्तावन्न परमेश्वरो भवितुमर्हति। 'य एषोऽन्तरादित्ये' इत्याधारश्रवणात् । अपरिच्छिन्नस्य स्वमहिमप्रतिष्ठितस्य निराधारस्य च तस्याऽऽधारायोगात्।'स्वे महिम्नि प्रतिष्ठितः' ( छा० ७।२४।१ ) इति श्रुतेः । 'स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानाम्' ( छा० १। ६।८ ) इत्यैश्वर्यमर्यादाश्रवणाच्च । 'एष सर्वेश्वरः' ( बृ० ४ ४।२२ ) इति श्रुत्या परमेश्वरस्य निरङ्कुशैश्वर्यावगतेः। 'हिरण्यश्मश्रुः' इति रूपश्रवणाच्च । 'अशब्दमस्पर्शमरूपमव्ययम्' ( का० १।३।१५ ) इति श्रुत्या ब्रह्मणो नीरूपत्वावगमात् । एवमक्षिस्थोऽपि न परमेश्वरः । चक्षुषीत्याधारश्रवणात् । 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामाना च' ( छा० १ । ७ । ६ ) इत्यैश्वर्यमर्यादाश्रवणात् । 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' ( छा० १ । ७ । ५ ) इत्यतिदेशेनाक्षिस्थेऽपि रूपवत्त्वश्रवणादादित्यपुरुषरूपदेवतात्मा जीव एवेहान्तःस्थ इति प्रतिपत्तु युक्तम् । तादृशजीवविशेषस्य विद्याकर्मातिशयवशात्प्राप्तोत्कर्षस्य सर्वमेतद्युक्तमिति पूर्वपक्षे सिद्धान्तः । अन्तस्तद्धर्मोपदेशादिति सूत्रेऽन्तरितिशब्द आदि-

त्येऽक्षिणि चान्तर्विद्यमानपुरुषोपस्थापकः । आधिकारिकब्रह्मपदं चात्र संबध्यते आदित्यान्तःस्थत्वादत्परमेश्वर एव । तस्य परस्य ब्रह्मणो ये धर्माः 'य आत्मा अपहतपाप्मा' ( छा० ८ ७ १ ) 'इदं सर्वं यदयमात्मा ( बृ० २ ४ । ६ ) इत्यादिश्रुत्यन्तरे परमात्मधर्मतया निर्णीताः सर्वपाप्मोदितत्वसार्वात्म्यादयस्तेषामुपदेशात् । तथा हि—'तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति' ( छा० १ । ६ । ७ ) इति सर्वपाप्मोदितत्वस्य 'तस्यर्क्च साम च गेष्णौ' ( छा० १ । ६ । ८ ) इति ऋक्सामयोरिन्द्रादिस्तावकयोरेतत्स्तुतिसाधनत्वेनोक्त्या लब्धेन्द्राद्यात्मकत्वोपलक्षितसार्वात्म्यस्य निरङ्कुशसर्वलोककामेशितृत्वस्य च परमात्मन्येव संभवात् । एवमाक्षिस्थोऽपि परमेश्वर एव । तत्रापि 'यन्नाम तन्नाम यावमुष्य गेष्णौ तावमुष्य गेष्णौ' इति सर्वपाप्मोदितत्वप्रवृत्तिनिमित्तानामतिदेशेन 'सैव ऋक् तदुक्थं तद्यजुः' इत्युक्त्या विधेयाभिप्रायं स्त्रीलिङ्गादिकम् । 'तद्य इमे वीणायां गायन्त्येतमेव ते गायन्ति' (छा० १।७।६) इत्यनेन लौकिकगीतिगेयत्वोक्त्या च सर्वपाप्मोदितत्वेन्द्राद्यात्मकत्वऋग्यजुरात्मकत्वलौकिकगीतिगेयत्वाद्यात्मकत्वोपलक्षितसार्वात्म्यरूपधर्मोपदेशात् 'स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' ( छा० १ ७ ६ ) इति निरङ्कुशलोककामेशितृत्वश्रवणाच्च । तेषां धर्माणां सर्वकारणत्वात्सर्वात्मनः परमेश्वर एव संभवाद्रूपवत्त्वादिकं च स्यात् । परमेश्वरस्यापीच्छावशान्मायामयं दिव्यं रूपं साधकानुग्रहार्थम् ।

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं नैवं मां द्रष्टुमर्हसि ॥ इति स्मरणात् ।

अपि च यत्र निरस्तसमस्तविशेषं पारमेश्वरं रूपमुपदिश्यते भवति तत्र शास्त्रम् 'अरूपमस्पर्शम्' इत्यादि । कारणत्वात्तु विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वर उपास्यत्वेन निर्दिश्यते 'सर्वकर्मा सर्वकामः' इत्यादिना । तथा हिरण्यश्मश्रुरित्यादिनिर्देशोऽपि भविष्यतीत्यादिश्रीमद्भाष्योक्तदिशोपास्ये ब्रह्मण्यपि संभवतीति ।

ननु रूपत्वादीनि जीवलिङ्गानि भाष्योक्तदिशा यथाकथंचिन्नेयानीति न वक्तुं युक्तम्। तुल्यवत्कल्पनानां जीवब्रह्मलिङ्गानामेकानुरोधेनान्यस्य नयने नियामकाभावात्। न च निरवकाशत्वं नियामकम्। जीवेऽपि परमात्मलिङ्गानां यथाकथंचिद्योजयितुं शक्यत्वात्। सर्वपाप्मोदितत्वं तावदादित्यमण्डलाभिमानिनि जीवेऽपि नेतुं शक्यम्। देवानां पुण्यसंबन्धे सत्यपि 'न ह वै देवान्पापं गच्छति' बृ० १। ५।२०) इतिश्रुतिपर्यालोचनया पापासंबन्धस्य वक्तुं शक्यत्वात्। न चेन्द्रादीनां वृत्रवधादिना पापश्रवणादुक्तश्रुतिः पापफलाल्पत्वाभिप्रायेण नेयेति वाच्यम्। तथा सत्यत्रोदितस्य सर्वपाप्मोदितत्वस्यापि त्वदुक्ताभिप्रायेण नेतुं शक्यत्वाज्जीवपरत्वेऽपि बाधकाभावात्। न चाऽऽदित्याक्षिस्थस्य परमेश्वरत्वमभ्युपेत्य सर्वपाप्मोदितत्वस्य यथाश्रुतस्यैव नेतुं शक्यतयोक्तार्थे लक्षणाकल्पनं निर्युक्तिकम्। एवं तात्पर्यलिङ्गान्तर्गतं फलवचनम् 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' (छा० १।६।७) इति सर्वपाप्मोदयरूपगुणः श्रूयते। तथा च सर्वपाप्मोदयस्य निरङ्कुशस्य फलतया प्रतिपादनात्तत्क्रतुन्यायेन गुणभूतं सर्वपाप्मोदितत्वं निरङ्कुशमेव भविष्यति। तथा च तात्पर्यलिङ्गोपबृंहितस्य न यथाकथंचिन्नयनमुचितमिति वाच्यम्। सिद्धान्तेऽपि हिरण्यश्मश्रुत्वादिविशिष्टशरीरसंबन्धविरोधात्। 'रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमापद्यन्ते' 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' (छा० ८। १२।१) इतिश्रुतिपर्यालोचनया शरीरमात्रस्य पुण्यपापतत्फलसंबन्धापादकत्वावगमात्। न चोक्तबलवल्लिङ्गेन तस्येश्वरत्वसिद्धौ तस्य सशरीरत्वावगतौ 'न ह वै सशरीरस्य' इत्यादेः स्वकर्मार्जितशरीरपरत्वं कल्पनीयमिति वाच्यम्। एवमपि प्रियाप्रियसंबन्धव्याप्यतायां शरीरित्वस्यावच्छेदकत्वे लाघवमिति लाघवरूपोपपत्तिरूपतात्पर्यलिङ्गसचिवायाः 'न ह वै सशरीरस्य' इत्यादिश्रुतेरन्यथानयने नियामकाभावात्। समर्यादैश्वर्यप्रतिपादनमपि व्यवस्थितनिर्देशोपपत्तियुक्तम्। 'स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाऽऽप्नोति देवकामांश्चेत्यथानेनैव ये चैतस्मादर्वाञ्चो

लोकांस्तांश्चाऽऽप्नोति मनुष्यकामाश्च ' ( छा० १ । ७ । ७–८) इति तत्क्रतुन्यायेन व्यवस्थितफलनिर्देशरूपोपपत्तियुक्तं च कथमिवेश्वरे व्याख्यातुं शक्यम् । तथा च प्रबलानेकजीवलिङ्गानुसारेण सर्वपाप्मोदय एव यथाकथंचिद्व्याख्येयः । अपि च ' उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ' ( छा० १ । ६ । ७ ) इति फलवचनानुसारेणैव सर्वपाप्मोदयः संकुचितोऽवगम्यते । फलवाक्ये हि जीवगत एव सर्वपाप्मोदयः प्रतिपाद्यते । न च जीवे निरङ्कुशः सर्वपाप्मोदय. संभवति । अपि चाऽऽदित्यमण्डलाभिमानिन्या देवताया जीवन्मुक्तायाः प्रारब्धमात्रशेषाया न पापं विद्यते । ज्ञानाग्निदग्धनिखिलाघत्वात्तस्या. । प्रारब्ध त्वधिकारमात्रोपयोगि पुण्यमेव । तथा च तत्र निरङ्कुशसर्वपाप्मोदयस्यापि सत्त्वात्तेनेन धर्मेण परमेश्वरत्वनिर्णय. सभवति । ऋगाद्यात्मत्वं त्वादित्यमण्डलस्थपुरुषस्यापि सभवति । तैत्तरीयके—' आदित्यो वा एष मण्डल तपति ' इत्युपक्रम्य मण्डलतदर्चिस्तदन्तवर्तिपुरुषाणामृगाद्यात्मत्वं क्रमेण निरूप्य ' सैषा त्रय्येव तपति ' इत्युपसंहारात् । इन्द्राद्यात्मत्व तु परमेश्वरस्यापि न पारमेश्वररूपेण सभवति । शुद्धचैतन्यात्मनाऽभेदस्तु देवतापक्षेऽपि योजयितु शक्यः । निरङ्कुशैश्वर्यं तु न श्रूयते । तथा च कथमत्र परमेश्वरनिर्णय इति चेत् । उच्यते--जीवन्मुक्तेऽपि न सर्वपाप्मोदयो निरङ्कुशः संभवति । कर्मार्जितशरीरस्याभियत्संबन्धानियमस्य श्रुतिसिद्धत्वात् । न च तर्हि शरीरमात्रस्यैव तन्नियमोऽस्तु लाघवसहकृतोक्तश्रुतेरिति वाच्यम् । फलवचनरूपतात्पर्यलिङ्गोपेतया निरङ्कुशसर्वपाप्मोदयबोधिकयोक्तश्रुत्या ' य आत्माऽपहतपाप्मा' इत्यादिश्रुतावीश्वरधर्मत्वेन प्रसिद्धस्य सर्वपाप्मोदयस्येहावगमादीश्वरत्वे निर्णीते तत्र च सशरीरत्वस्यापि श्रुत्या प्रतीयमानतयोक्तनियमे कर्मजन्यत्वस्य शरीरविशेषणस्याऽऽवश्यकतया वैदिकफलवचनरूपतात्पर्यलिङ्गमपेक्ष्य लाघवस्य लौकिकोपपत्तिरूपतया दुर्बलत्वाच्च न प्रागुक्तो विनिगमकाभावः । एवं रमणीयेत्यादिश्रुतिरपि जीवविषयैव व्याख्येया । न नु

फलवचनानुसारेणैव सर्वपाप्मोदयः संकोचनीय इति युक्तम् । क्रममुक्तिमादाय जीवेऽपि सर्वपाप्मोदयस्य वक्तुं शक्यत्वात् । वृक्षापादानकं शकुन्तोद्गमनमिव पापापादानकं जीवोद्गमनं तु बाधितम् । पापस्यामूर्तनया विश्लेषावधित्वायोगात् । तथा च वृक्षादुद्गतः पक्षी सर्वात्मना वृक्षासंसृष्टो भवति तथा जीवोऽपि पापासंसृष्टो भवतीत्येतावदेव वाच्यम् । तच्च जीवेऽसंभवीत्युक्तम् । परमेश्वरे तु तदाञ्जसम् । एवमैश्वर्यं व्यवस्थया निर्दिष्टमपि सर्वाधिपत्य एव पर्यवस्यति । 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' ( ऐ० १ । २ ) इति श्रुत्याऽक्ष्यादित्यपुरुषयोरभेदावगमात् । पूर्वपक्षिणाऽपि तस्य प्रत्याख्यानायोगात् । अध्यात्माधिदैविकविभागापेक्षया विभज्य निर्देशश्चोपासनार्थः । तथा च निरङ्कुशतदैश्वर्यं पारमेश्वरमेव लिङ्गम् । एवं सर्वात्मत्वमपि । न चेश्वरस्याविद्योपहितस्याविद्याविषयत्वोपहितस्य वा न तादूप्येणेन्द्राद्यात्मकत्वमित्युक्तं युक्तम् । अविद्योपहितेऽविद्यापरिणामान्तःकरणोपहिततादात्म्यावश्यकत्वात् । समुद्रावच्छिन्नाकाशे तरङ्गावच्छिन्नाकाशतादात्म्यस्य लोके दर्शनात् । वाचस्पतिमते त्वविद्याविषयचैतन्यस्यैव सर्वाधिष्ठानतया तत्राविद्याश्रयतादात्म्यस्य सत्त्वमक्षतमेव । जीवस्त्वविद्याविशिष्टोऽन्तःकरणविशिष्टो वा न जगदुपादानमित्यादिकं स्पष्टमाकरे विवेचितमिति दिक् ॥ २० ॥

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥

'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद' ( बृ० ३।७।९ ) इति श्रुत्यन्तरे वेदितुरादित्याद्भेदेनान्तरत्वादिनेशस्य व्यपदेशादत्रापि तस्यैव प्रत्यभिज्ञानात् । तथा च चरमनिर्दिष्टस्याप्यपहतपाप्मत्वादेरनन्यथासिद्धत्वेन प्रयोजनवत्त्वेन तात्पर्यवत्त्वेन च बलवत्त्वात्तदनुरोधेनोक्तलिङ्गानुसारेण चाक्ष्यादित्ययोरन्तःस्थः परमेश्वर इति सिद्धम् ।

यत्तु चन्द्रिकायाम्—अन्ये त्वित्यादिना निरुक्तपूर्वपक्षसिद्धान्तावनूद्य नीरूपे ब्रह्मणि रूपादि यद्युपासनार्थमुच्यते जीवेऽपि पाप्माभावादि तद्वदुपास्यर्थमुच्यताम् । त्वन्मत उपास्यनाम्-

वागादौ ब्रह्मत्वधेनुत्वादेः प्रातीतिकत्वनियमेनात्रापि तथैव वक्तुं युक्तत्वात् । जीवे पाप्माभावादेर्व्यावहारिकस्यासंभवेऽपि न क्षतिः । त्वन्मत उपासनावाक्यस्य तत्कर्तव्यतामात्रपरत्वेन स्वार्थपरत्वाभावात् । कर्तव्यताया च व्यावहारिकप्रातिभासिकविभागानपेक्षणात् । श्रुतौ श्रद्धालुना श्रुत्योर्विषयभेदेन तात्त्विकत्वस्यैव वक्तव्यतापाताच्च । किंच ब्रह्मणि हिरण्यश्मश्रुत्वादेर्मानान्तराप्राप्ततया तद्वाक्यस्यानुवादकत्वाभावेन तद्वाक्यं तत्परमेव वाच्यम् । तथा च तस्य तात्त्विकत्वं दुर्वारमेव । यच्चोपादानं ब्रह्म कार्यकारणयोरभेदात्कार्यधर्मैर्व्यपदिश्यत इत्युक्तम् । तन्न । स्वर्णे कटकत्वादेरिव कटकादावपि स्वर्णत्वव्यवहारेण ब्रह्मधर्मैः कार्ये एव व्यपदेशापातादिति दूषणमुक्तम्। तत्रोच्यते—यद्यपि 'नाम ब्रह्मेत्युपास्ते' 'वाचं धेनुमुपासीत' इत्यादावुपास्यस्य प्रातिभासिकत्वमस्ति तथाऽपि न सर्वत्रापि तथैव वाच्यमित्यस्ति नियमः । मानाभावात् । परंतु मनोवृत्तीनां प्रामाण्यस्यौत्सर्गिकतया तत्संभवे विषयस्याबाध्यत्वमेव । तत्र च त्रिकालाबाध्यत्वं शुद्धस्यैव ब्रह्मण इति तद्विषयकज्ञानध्यानादीनामेव मुख्यं प्रामाण्यम् । यत्र च प्रमाणान्तरेण बलवता विरोधान्न त्रिकालाबाध्यत्वं विषयस्य संभवति, तस्मादर्थक्रियादिकं च दृश्यते, न दृश्यते च व्यवहारदशायां बाधः, तत्र तद्विषयकज्ञानध्यानादीनां व्यवहारकालाबाध्यविषयकत्वलक्षणं व्यावहारिकप्रामाण्यमेव । यत्र व्यवहारकाल एव विषयस्य बाधस्तद्विषयकज्ञानध्यानादीनां द्विविधस्यापि यथार्थत्वापरपर्यायस्य प्रामाण्यस्यासंभवादयथार्थत्वमेव । एवं च विनाऽपवादं पूर्वपूर्वस्य त्यागायोगात्प्रकृते जीवस्योपास्यत्वे सर्वपाप्मोदयाद्यंशे ध्यानस्यायथार्थतापरपर्यायमप्रामाण्यमेव स्यात् । ब्रह्मणस्तथात्वे रूपवत्त्वाद्यंश इतरांशे वा तद्विषयकध्यानादीनां यथार्थरूपत्वमेव । रूपवत्त्वादीनां ब्रह्मणि व्यवहारकालाबाध्यत्वात् । यथार्थवृत्तेर्विधेयत्वासंभवेऽयथार्थवृत्तेर्विधेयताकल्पनस्यानुचितत्वात् । प्रतिपादितं चैतत् 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्' इति संकर्षणसूत्रार्थवर्णने 'असदुपासना न घटते'

इति त्वदुक्तिदूषणप्रकरणे सविस्तरमानन्दमयाधिकरण इति न जीवस्योपास्यता युक्ता । नापि श्रुतिद्वयस्य विषयभेदेन तात्त्विकविषयकत्वकल्पनं युक्तम् । श्रुतिद्वयस्य समानबलत्व एव तत्कल्पनाप्रसरात् । प्रकृते च न तथा । अद्वैतश्रुतेरुपक्रमादितात्पर्यसचिवत्वेन बलवत्त्वात् । रूपवत्त्वादिबोधकश्रुतेश्च विधेयध्यानाङ्गगुणसमर्पकतया तद्वैशिष्ट्ये तात्पर्याभावात् । न च तर्हि व्यावहारिकरूपवत्त्वादिकमपि न सिध्येत्तद्बोधकश्रुतेस्तत्परत्वाभावादिति वाच्यम् । प्राशस्त्यपरार्थवादैरसति प्रमाणान्तराविरोधे देवताविग्रहादिसिद्धिवत्प्रमाणान्तराविरोधे सत्युपासनापरैरपि वाक्यैर्देवताधिकरणन्यायेन तत्सिद्धिसंभवात् । हिरण्यश्मश्रुत्वादेरपूर्वत्वात्तदंशेऽनुवादासंभवेन श्रुतेस्तत्परत्वस्यैव वाच्यत्वात्तस्य तात्त्विकत्वमेव स्यादिति ।

किंचेत्याद्युक्तिरविचाररमणीयैव । अपूर्वत्वेऽप्यन्यशेषस्यातत्परत्वायाः पूर्वतन्त्रे दशमाष्टमे निर्णीतत्वात् । तथा हि—'जर्तिलयवाग्वा जुहुयात्, गवीधुकयवाग्वा जुहुयात्, न ग्राम्यान्पशून्हिनस्ति, नाऽऽरण्यान् । अथो खल्वाहुः—अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च । पयसाऽग्निहोत्रं जुहुयात्' इत्यग्निहोत्रे श्रुतम् । तत्र जर्तिलयवाग्वेत्यादिना विहितयोर्जर्तिलगवीधुकयवाग्वोः 'अनाहुतिः' इत्यादिनिन्दया प्रतिषेधकल्पनात्तयोर्विधिप्रतिषेधाभ्यां विकल्पः । पयसेत्यादिकं तु पयोविधिः । वाक्यभेदस्त्विष्टः । पृथगाख्यातश्रवणात्, इति पूर्वपक्षे सिद्धान्तः—जर्तिलयवाग्वेत्यादेर्विधित्वेऽप्यनाहुतिरित्यादिकं न विकल्पतात्पर्यग्राहकम् । तद्विनाऽपि पयोविधिबलादेव विकल्पस्य व्रीहियवन्यायेन सिद्धेः । किंतु नहि निन्दान्यायेन पयःस्तुतिपरम् । वस्तुतस्तु जर्तिलयवाग्वेत्यादेरपि न विधिः । किंतु पशुनिन्दाद्वारेण पयःस्तुतिपरम् । वाशब्दं विनाऽपि व्रीहियवन्यायेन विकल्पबोधसंभवेन वाशब्दस्य वैयर्थ्यात् । तस्माद्विषं वा भुङ्क्ष्व विष्णुमपूजयित्वा भुङ्क्ष्व, विषभोजनं मरणहेतुः, विष्णुं पूजयित्वा भुङ्क्ष्वेत्यादाविवान्यनिन्दापोषणद्वाराऽन्यस्तुतिपरं प्रथमवाक्यमिति पयोविध्येकवाक्यतापन्नमेव जर्तिलादिवाक्यत्रय-

मिति । तथा च यथा जर्तिलयवाग्वादेरपूर्वहोमसाधनतावाक्यस्यानाहुतिरित्यपूर्वनिन्दाबोधकवाक्यस्य च पयसा जुहुयादिति विधिशेषतया तदेकवाक्यतापन्नस्य न जर्तिलयवाग्वादिनिष्ठहोमसाधनतादिपरत्वं तथा हिरण्यश्मश्रुरित्यस्याप्युपासनाविधिशेषतयोपासनाविध्येकवाक्यतापन्नस्य न हिरण्यश्मश्रुत्वादिपरत्वमिति तस्यापूर्वत्वेन तात्त्विकत्वापादनमापाततएवेति ।

यच्च स्वर्णे कटकत्वादेरिव कटकादौ स्वर्णव्यवहारेण ब्रह्मधर्मैः कार्य एव व्यपदेशापातादिति दूषणमुक्तम् । तदप्यविचाररमणीयम् । कार्यकारणयोरभेदात्कचित्केनचित्कारणधर्मेण कार्यव्यपदेशेऽपि न सर्वैरेव कारणधर्मैः कार्यं व्यपदिश्यत इति वक्तुं शक्यम् । किंतु यत्र यत्र बाधकानुपलम्भस्तेन तेनैव । तथा च सर्वकार्यसाधारणयत्किंचित्सत्त्वादि[ ना ] ब्रह्मणो धर्मेण कार्यव्यपदेशेऽपीन्द्राद्यात्मकत्वराजाद्यात्मकत्वादिनाऽऽदित्यव्यपदेशायोगः । तद्विरुद्धादित्यत्वस्य तत्रोपलम्भाद्बाधकसत्त्वात् । अन्यथा कार्यकारणयोरभिन्नत्वनियमवत्तदभिन्नाभिन्नस्य तदभिन्नधर्मेण तदभिन्नत्वनियमात्कटकाभिन्नसुवर्णाभिन्नकुण्डलस्य सुवर्णात्मना कटकाभिन्नस्य कटकधर्मसुवर्णत्वव्यपदेशवत्कटकत्वव्यपदेशापातात् एवं सर्वपाप्मोदितत्वेन्द्राद्यात्मत्वोपलक्षितसर्वतादात्म्यादिनाऽपि नाऽऽदित्यव्यपदेशः संभवति । सशरीरत्वनियतपापादिमत्त्वासार्वात्म्यादिविरुद्धधर्मोपलम्भात् । सर्वात्मके ब्रह्मणि च सर्वधर्मवत्त्वस्याविरोधात्तत्तत्कार्यधर्मेण व्यपदेशो युक्त एव।सकलकल्पनानिदानाविद्यानिवर्तकविजातीयब्रह्मसाक्षात्कारं यावत्तथाव्यवहारे बाधकाभावात् । एतेन कथं चाधिष्ठाने ब्रह्मणि पापराहित्याद्यसाधारणरूपेण भासमाने तत्राध्यस्तगतधर्मव्यवहार इति चन्द्रिकोक्तं दूषणं निरस्तम् । तादृशाधिष्ठानभानस्य निखिलकल्पनामूलाविद्यानिवर्तकत्वाभावात् । प्रतिपादितं चैतज्जिज्ञासासूत्रे विस्तरेण ।

मुमुक्षुं प्रति सविशेषब्रह्मनिरूपणं च मोक्षसाधननिर्विशेषज्ञानार्थम् । तच्च ज्ञानं महावाक्यजन्याद्वैतब्रह्मात्मैक्यबोधप्रयोजकनिर्विशेषात्मरूपमहावाक्यघटकपदार्थज्ञानम् । यथोक्तं कल्पतरौ—

> निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
> ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥
> वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
> तदेवाऽऽविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥ इति ।

आविर्भवेत्—सगुणज्ञानाधीनसगुणोपासनापरिपाकेनैकाग्र्यादौ वशीकृते मनसि विशेषपरित्यागेन निर्विशेषाकारवृत्त्याऽपरोक्षी भवेत् ।

यत्तु चन्द्रिकायाम्—सविशेषनिरूपणं मोक्षसाधननिर्विशेषज्ञानार्थमित्यनेनोक्तार्थमनूद्य तन्न, 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' (छा० १ । ६।७) इति श्रुतपापनिवृत्तिरूपमुक्तिफलहानस्याश्रु-फलान्तरकल्पनस्यायोगात् । किंच सविशेषज्ञानं निर्विशेषज्ञानार्थं किंवा चित्तस्य विजातीयवृत्त्यन्तररूपमारोपितविषयमुपासनापर्यायं ध्यानं वा । नाऽऽद्य । निर्विशेषशब्देन विशेषाभावविशिष्टस्योक्तौ त्वन्मते विशिष्टज्ञानस्य मोक्षाहेतुत्वात् । तदभावोपलक्षितस्योक्तौ काकेन गृहस्थानविशेषस्येव विशेषाभावेनोपलक्ष्यान्तरस्यैवाभावात् । विशेष्यस्यैवोपलक्ष्यत्वे तस्य विशिष्टग्राहिणा ज्ञानेन प्रागेव ज्ञातत्वात् । उपलक्ष्यत्वाकारेण ज्ञानस्य त्वन्मते मोक्षसाधनत्वात् । न च विशेषणाविषयं विशेष्यज्ञानं प्रागसिद्धमिति वाच्यम् । विशिष्टज्ञानस्य विशेषणज्ञानाभावार्थत्वायोगात् । तथा च—

> विशिष्टब्रह्मधीसाध्या शुद्धधीरित्यसंगतम् ।
> विशिष्टप्रत्यये यस्माद्विशेष्यं भासतेतराम् ॥

इति दूषणमुक्तम् । तदसत् । 'उदेति ह वै सर्वेभ्य पाप्मभ्यो य एवं वेद' (छा० १।६।७) इत्यत्र विदेरुपासनार्थकतया निर्विशेषात्मसाक्षात्कारप्रतिबन्धकपापनिवृत्तेः 'विचाराक्षममर्त्याश्च तच्छ्रुत्वोपासते गुरो.' इत्यभियुक्तोक्तरीत्या तत्क्रतुन्यायेन सविशेषब्रह्मज्ञानाधीनतदुपासनाफलत्वस्यैवोक्तत्वेन श्रुतफलहानाश्रुतकल्पनाप्रसङ्गाभावात् । 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं निरूप्यते' इति न्यायेन सृष्ट्याद्यध्यारोपेण सृष्ट्यादिविशिष्टज्ञानस्यैव सविशेषात्मज्ञानस्य निर्विशेषाद्वितीयात्मज्ञानार्थत्व-

स्याऽऽकरे सविस्तरं प्रतिपादनात् । यथा हि वायौ रूपं नास्तीत्युक्तौ रूपस्याऽऽत्यन्तिकासत्त्वं न लभ्यते । तस्य वायावभावज्ञानेऽपि पृथिव्यादावुपादानकारणे सत्त्वोपपत्तेः । तथा निर्गुणनिर्विशेषश्रुत्या ब्रह्मण्युपास्यतया विवक्षितगुणविशेषयोर्निषेधेऽप्यन्यत्र तेषां सत्त्वाशङ्कया तत्कृतपरिच्छेदेन चतुर्विधाभावाप्रतियोगित्वरूपं निरङ्कुशं ब्रह्मत्वमात्मनि न संभवतीति तेषामधिष्ठाने ब्रह्मण्येवाऽऽरोपपुरःसरं निषेधे जगत इवोपादानादन्यत्र तेषां सत्त्वायोगात्तत्कृतपरिच्छेदासंभवाय तत्रैव निषेधेऽद्वैतनिर्विशेषात्मप्रतिपत्तिः सुकरैवेति निर्विशेषशब्देन सकलविशेषाभावोपलक्षितं ब्रह्मैव विवक्षितम् । तेन विशिष्टात्मज्ञानस्य मोक्षहेतुत्वाभावेऽपि न क्षतिः । यदुपस्थितधर्मान्तरवत्तया ज्ञात एव विधेयस्य विधेयवदन्यव्यावृत्तेर्वा बोधस्तस्योपलक्षणत्वमिति नियमस्य काकादिरूपोपलक्षणोपस्थितोत्तृणत्वादिरूपधर्मान्तरवत्तया ज्ञात एव देवदत्तगृहत्वस्य देवदत्तगृहेतरव्यावृत्तेर्देवदत्तगृहे बोधान्नानाव्यक्तिगतकाकादिरूपोपलक्षणधर्मे धर्मान्तरोपस्थापकतानियमदर्शनेन संभवेऽप्येकव्यक्तिमात्रगतोपलक्षणे न तादृशनियमसंभवः । तथा हि—देहसंस्थानविशेषविशिष्टेदमर्थस्य तदन्यव्यावृत्तेश्च प्रत्यक्षसिद्धतया सोऽयमित्यादिवाक्येन तद्बोधने तादृशवाक्यवैयर्थ्यात्सोऽयमित्यादिवाक्यात्तत्तदादिरूपैकव्यक्तिमात्रगतोपलक्षणोपस्थितदेहसंस्थानरूपधर्मान्तरवतीदमर्थस्य तद्व्यावृत्तेर्वा धियोऽसंभवापातात्तत्र तादृशनियमस्य वक्तुमशक्यत्वात् । तस्माद्धर्मस्य धर्मिणो वोपस्थितिद्वारा स्वाविषयकं स्वाश्रयविषयकं यज्ज्ञानं येन जन्यते तस्मिन्स्वाश्रयज्ञाने तस्योपलक्षणत्वमिति सर्वोपलक्षणसाधारणनियमस्य वाच्यतया तादृशोपलक्षणत्वस्य धर्मान्तरानुपस्थापके विशेषाभावेऽपि प्रकृते संभवात् । स्पष्टं चेदमद्वैतसिद्धिटीकादौ । सविशेषब्रह्मज्ञानमारोपितविशेषविषयमुपासनापरपर्यायध्यानरूपं दृष्टैकाग्र्यरूपचित्तवशीकरणसाध्यनिर्विशेषध्यानजन्यशुद्धा-मानुभवाहितसंस्कारजन्यपदार्थस्मरणहेतुकमहावाक्यार्थनिर्विशेषब्रह्मात्मापरोक्षज्ञानार्थमि-

त्यपि वक्तु सुवचम् । तथा हि—'यतो वा इमानि भूतानि जायन्ते' ( तै० २ । १ । १ ) इत्याद्याः श्रुतयस्तत्त्वमस्यादि-महावाक्यस्थतत्पदवाच्यार्थबोधिकाः । 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २ । १ । १ ) इत्याद्या श्रुतयस्तत्पदलक्ष्यार्थबोधिकाः । 'तद्यथा महामत्स्य उभे कूले अनुसचरति पूर्वं चैवापरं च । एवमेवाय पुरुषः स्वप्नान्त च बुद्धान्त च' ( बृ० ४।३।१८ ) इत्येवमाद्याः श्रुतयो जाग्रत्स्वप्नसुषुप्त्यवस्थाविशिष्टजीवचैतन्य-बोधिका महावाक्यस्थत्वपदवाच्यस्य बोधिकाः । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः,' ( बृ० ४।३।७ ) 'न दृष्टेर्द्रष्टार पश्ये.' ( बृ० ३ । ४ । २ ) इत्याद्या श्रुतय-स्त्वपदलक्ष्यस्य बोधिका । तथा चोक्तवाच्यार्थबोधकश्रुति भिर्मुख्यवृत्त्योपस्थितयोर्विशिष्टजीवब्रह्मणोरैक्यबोधस्य प्रमा-त्वानुपपत्तिज्ञानेन लक्षणयोक्तावान्तरवाक्येभ्योऽनुभूतयोः शुद्ध-तत्त्वपदार्थयोः स्मरणेन ब्रह्मात्मैक्यरूपवाक्यार्थापरोक्षबोधे सति तस्य स्वतः प्रमाणभूतवेदवाक्यजनितत्वात्स्वत एव प्रामा ण्यात्तस्याविद्यातत्कार्यनिवृत्त्यात्मकमोक्षसाधनत्वेऽप्यसंभावना विपरीतभावनादिशून्यस्यैव तस्योक्ताविद्यातत्कार्यनिवृत्तौ शक्त-त्वात्प्रमाणप्रमेयासभावनाविपरीतभावनादिनिवृत्तौ च श्रवणम-ननानिदिध्यासनान्तविचारस्यैव सामर्थ्यावधारणादुक्तविचार-प्रतिबन्धकप्रज्ञामान्द्यकुतर्कविपर्ययदुराग्रहाद्यभिभूतस्य पुरुषस्यो-क्तनिदिध्यासनान्तविचारस्यासभवेन सविशेषोपासनासाध्य-निर्विशेषोपासनाक्रमेण निर्विशेषत्वंपदलक्ष्यार्थात्मानुभवद्वारोक्त निवृत्तिक्षमो ब्रह्मात्मैक्यरूपमहावाक्यार्थापरोक्षबोधः । तदुक्त वासिष्ठे—

> द्वौ क्रमौ चित्तनाशस्य योगो ज्ञान च राघव ।
> योगश्चित्तनिरोधः स्याज्ज्ञान सम्यगवेक्षणम् ॥
> असाध्यः कस्यचिद्योगः कस्यचित्त्वात्मनिश्चय ॥ इति ।

चित्तनाशस्य चित्तधर्मादर्शनप्रयुक्तशुद्धात्मदर्शनस्य । अद र्शन स्वरूपेण सत्यत्वेन वा । क्रमौ साधनानुष्ठानक्रमेण क्रियमा-णावुपायौ । सम्यगवेक्षण श्रवणमननानिदिध्यासनान्तविचार-

रूपम् । योगः सविशेषध्यानरूपसम्प्रज्ञातसमाधिसाध्यासंप्रज्ञात-समाधिरूपः । उक्तसम्प्रज्ञातसमाधेरसंप्रज्ञातसमाधिहेतुत्वं चोक्तं भगवद्गीतासु कृष्णेन भगवता—

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥६।२०।
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥६।२१।
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥६।२२।
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् । इति ॥ ६ । २३ ।

व्याख्यातं च मधुसूदनसरस्वतीभिः—योगसेवया सम्प्रज्ञातसमाधिरूपयोगाभ्यासेन । यत्र यस्मिन्मनः परिणामे जाते सति चित्तं निरुद्धं सर्ववृत्तिशून्यं सदुपरमते कमपि विषयं न गृह्णाति । यत्र यस्मिन्मनःपरिणामे सत्यात्मना शुद्धसत्त्वेन मनसैव व्यञ्जकेनाऽऽत्मानं ब्रह्माभिन्नं साक्षिणमेव पश्यन्पुरुष आत्मन्येव तुष्यति द्वैतभानप्रयुक्तानन्दाल्पत्वरहितो भवति तं परिणामं योगसंज्ञितं विद्याज्जानीयात् । असंप्रज्ञातसमाधौ निरुद्धेन मनसा ब्रह्मैवाऽऽत्मस्वरूपं भाति, न तु सम्प्रज्ञातसमाधाविव ब्रह्मान्यद्ध्यातृध्यानादीति भावः । तदुक्तम्—

ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् ।
निर्वातदीपवच्चित्तं समाधिरभिधीयते ॥ इति ।
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
भगवानमुमेवार्थमर्जुनाय न्यवेदयत् ॥ इति च ।

आत्मन्येव तोषमुपपादयति—यत्र मनःपरिणामे सत्यात्यन्तिकं सर्वसुखेभ्य उत्कृष्टं सुखं वेत्ति । विषयादिसुखाद्भिनत्ति—अतीन्द्रियमिति । विषयेन्द्रियसंयोगाजन्यम् । सोपुप्तसुखाद्भिनत्ति—बुद्धिग्राह्यमिति । निरुद्धमनोभिव्यक्तं सुषुप्तौ मनो न व्यञ्जकम् । लीनत्वात् । उक्तं च गौडपादैः—लीयते तु सुषुप्तौ तन्निरुद्धं नैव लीयत इति । आत्यन्तिकत्वे हेतुमाह—यत्र परिणामे स्थितोऽयं योगी तत्त्वतो ब्रह्माभिन्नस्वरूपात्परमार्थात्

चलति । द्वैतभानाभावात् । तथा च पातञ्जलसूत्राणि—'योगश्चित्तवृत्तिनिरोधः' 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' 'वृत्तिसारूप्यमितरत्र' (यो० सू० १।१।२, ३, ४) इति । सकलचित्तवृत्तिनिरोधकाले द्रष्टुर्दृक्स्वरूपस्य पुरुषस्य स्वरूप एवावस्थानं न तु बुद्धिवृत्तौ प्रतिबिम्बितत्वम् । इतरत्र कालान्तरे तु वृत्तिसारूप्यं बुद्धिवृत्तौ प्रतिबिम्बितत्वं द्वैतभानं विषयवासना चाऽऽत्यन्तिकसुखानाभिव्यक्तौ प्रयोजकम् । तत्राऽऽद्यं तत्त्वतो न चलतीत्यनेन, द्वितीयमप्रमित्यनेन निर्वासनबोधकेन निरस्तम् । अस्यासम्प्रज्ञातसमाधेरावश्यकतामाह—यं परिणामं लब्ध्वाऽपरं श्रवणादिभिन्नं लाभं महावाक्यार्थापरोक्षधीप्रयोजकं न मन्यते । तस्यैव शुद्धत्वंपदार्थसाक्षात्कारद्वारा महावाक्यार्थापरोक्षधीप्रयोजकत्वात् । अयमर्थो मैत्रायणीयशाखायामपि—

> लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् ।
> यदा यात्यमनीभावं तदा तत्परमं पदम् ॥
> तावन्मनो निरोद्धव्यं हृदि यावद्गतक्षयम् ।
> एतज्ज्ञानं च मोक्षं च शेषान्ये ग्रन्थविस्तराः ॥

समाधिनिर्धूतमलस्य चेतसो निवेशितस्याऽऽत्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥

> अपामापोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत् ।
> एवमन्तर्गतं यस्य मनः स परिमुच्यते ॥
> मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
> बन्धाय विषयासङ्गि मोक्षे निर्विषयं स्मृतम् ॥

इति प्रतिपादितः । अत्र भाष्यम्—लयो निद्रा, विक्षेपो विषयस्मृत्यादि, अमनीभावः मनःप्रवेशकृतविशेषस्याऽऽत्मनि त्यागः, तं यदा याति तदा तत्परमं पदं याति, हृदि साक्षिणि, गतः प्राप्तो विनाशो येन तत्तथा, अन्तःकरणेन शुद्धसत्त्वेन निरुद्धेन गृह्यते ऽनुभूयते, अन्तःकरणावस्थाविशेषवशात्साक्षिणा स्वयं गृह्यत न स्वप्रकाशतया तद्भातीति वा, अपामप्सु आपोऽपः, निक्षिप्ता इत्यध्याहारः । अग्निरग्नौ निक्षिप्त इत्यनुषङ्गः ।

व्योम घटाद्याकाश एवमिति । तथा च निरुद्धं सन्न्यग्भूतं भवतीति । असंप्रज्ञातसमाधिकाले साक्षिस्वरूपं ब्रह्मैव भाती-त्यर्थः । कठवल्लीष्वपि—

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ (का० २।१०)।

इत्यनेनायमर्थ उक्तः । ज्ञानानि ज्ञानेन्द्रियाणि मनो बुद्धिश्च न विचेष्टते वृत्तिरूपेण न परिणमते । अप्रमत्तो द्वैतभानरूपप्रमादशून्यः । निरुद्धस्य मनसोऽपि न्यग्भावेन साक्षिभास्यत्वाभावात् । सौषुप्तलयावस्थाया इव प्रलयावस्थाया अप्यावृतत्वमेव न्यग्भाव इति भावः । महावाक्यार्थसाक्षात्कारोत्तरमपि तदाव-श्यकतामाह—न दुःखेन गुरुणाऽपीति । गुरुणा तत्त्वज्ञानानाश्य भुज्यमानप्रारब्धकर्मजन्येन प्रारब्धकर्मापेक्षयाऽपि समाधेर्बलव-त्त्वेन स्वकाले भोक्तव्यस्य धर्मणो नाशकतया तज्जन्यं दुःखं नोत्पद्यत इत्यर्थः । तथा च संप्रज्ञातसमाधिपाटवेनासंप्रज्ञातसमा-धिलाभः । संप्रज्ञातसमाधिस्तु—श्रवणमननादेरुपविचारसम-र्थस्य पञ्चकोशविवेकादिना देहादिभिन्नतया तत्साक्षिणो ज्ञान-प्रवाहरूपः । ब्रह्मात्मसाक्षात्कारोत्तरं तु ब्रह्माहमस्मीति ज्ञानप्रवा-हरूपः । तदसमर्थस्य तु सविशेषब्रह्मोपासनाप्रवाहरूपः । अस-म्प्रज्ञातसमाधिस्तु—धकलध्यातृध्यानादित्रिपुटयात्मकवृत्तिशून्य-निरोधरूपं मन एव । न च 'अपरोक्षहेतुावैचैकाग्र्यादेर्निर्विशेष-परोक्षज्ञानाधानतन्निदिध्यासनादेव ।सद्धिश्चित्तवशीकरणाभावे सविशेषनिदिध्यासनस्याप्यसंभवः' इति चान्द्रिकोक्तदूषणं साधु ।

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ (गी० ६।२५) इति भगवतैव चित्तस्य बाह्यविषयासक्तिस्वाभाव्या न्निर्विशेषोपासनस्य प्रथमत एवासंभवेन विषयेषु दोषदर्शना-दिनोपायेन क्रमेण विषयेभ्यो मन आकृष्य सविशेषोपासनाभ्या-सेनैव चित्तवशीकरणद्वारा निर्विशेषनिदिध्यासनात्मकोक्तास-म्प्रज्ञातसमाधिहेतुत्वस्योक्तत्वात् ।

---

१ 'ष्ठते ता' इत्यपि पाठः ।

यत्तु दशमस्त्वमसीत्यादाविव शाब्दापरोक्षज्ञाने चित्तवशीकरणानपेक्षेति चन्द्रिकोक्तं दूषणं तदप्युक्तरीत्या सम्प्रज्ञातसमाधिस्थ निर्वि(सवि)शेषानुभवाहितसंस्कारजन्यपदार्थस्मरणद्वारा वाक्यार्थापरोक्षज्ञाने चित्तवशीकरणावश्यकताप्रदर्शनेन निरस्तम् । अन्यथाऽसंप्रज्ञातसमाधेरेवानुपपत्तेः । एतेन किंच सविशेषज्ञानं निर्विशेषज्ञानस्य न तावद्दृष्टद्वारा हेतु । तद्विशिष्टज्ञानजन्येनाज्ञानध्वंसेन वा चित्तवशीकरणेन वा तदभावविशिष्टज्ञानस्य तदुपलक्षितज्ञानस्य काप्यदर्शनात् । रूपादियुक्तपराङ्भूतविशेषज्ञानेन तद्विपरीतनिर्विशेषज्ञानायोगाच्च । निषेधोपयोगिनो बुद्धिपूर्वकारोपस्यापि शब्दप्रमाणानपेक्षणाच्चेति चन्द्रिकोक्तं दूषणं निरस्तम् । उक्तरीत्या सविशेषज्ञानस्योपासनासाध्यचित्तवशीकरणद्वारा निर्विशेषात्मविज्ञानहेतुत्वस्योक्तश्रुतिस्मृतिप्रमाणसिद्धतया काप्यदर्शनादित्युक्तेस्तदनालोचननिमित्तत्वस्य स्पष्टत्वात् । अध्यारोपन्यायेन निर्विशेषात्मज्ञानस्य सविशेषज्ञानजन्यताया अद्वैतग्रन्थेषु बहुश इहाप्यनुपदमेवोक्तत्वात् । प्रमाणान्तरागम्योपास्यसत्यकामत्वादिवैदिकगुणारोपेणोपासनयोक्तफलाप्तौ श्रद्धोत्पादनाय प्रमाणभूतशब्दापेक्षाया स्पष्टत्वात् । तदुक्तमभियुक्तैः—उपासनायामश्रद्धा प्रतिबन्धिका, नतरादिति । अथवा सविशेषब्रह्मज्ञानमुपासनासाध्यादृष्टद्वारा ब्रह्मलोके निर्विशेषब्रह्मात्मैक्यापरोक्षज्ञानार्थम् । अदृष्टं चोक्तापरोक्षहेतुपुण्यरूपमैहिकब्रह्मविद्याप्रतिबन्धकपापनिवृत्तिरूपं वा ।

> दिने दिने च वेदान्तश्रवणाद्भक्तिसंयुतात् ।
> गुरुशुश्रूषया लब्धात्कृच्छ्राशीतिफलं लभेत् ॥

क्षणमेकं क्रतुशतस्येत्यादिना सगुणब्रह्मविचारस्य तत्साध्योक्तोपासनात्मकसमाधेश्चापरोक्षनिर्विशेषात्मब्रह्मैक्यसाक्षात्कारजनकपुण्यजनकतायाः 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति स्मृत्या 'उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' (छा० १।६।८) इत्यादिश्रुत्या च तादृशापरोक्षात्मसाक्षात्कारहेतुपापनिवृत्तिहेतुतायाश्चोक्तत्वात् ।

यत्तु चन्द्रिकायाम्—नापि सविशेषज्ञानं निर्विशेषज्ञानस्या॰

दृष्टद्वारा हेतुः । विहितक्रियाजन्यत्वाददृष्टस्य, त्वन्मते च ज्ञानस्याविधेयत्वात् । नापि ज्ञानप्रतिबन्धकदुरितनिवृत्तिद्वारा । तस्य नित्यादिकर्मणैव निवृत्तेः । नित्यादिकर्मणामपीहैव शास्त्रे निरूपणापत्तेश्च । त्वन्मते ज्ञानस्याज्ञानमात्रनिवर्तकत्वाच्च । न च व्यावहारिकं दुरितं व्यावहारिकसविशेषब्रह्मज्ञानकार्यम् । येनाज्ञाननिवृत्त्या तत्कार्यं पापं निवर्तेत । एतेन सविशेषज्ञानसंतानरूपं निदिध्यासनमदृष्टद्वारा वा दुरितनिवृत्तिद्वारा वा चित्तवशीकरणद्वारा वा निर्विशेषज्ञानार्थमिति निरस्तम् । श्रुतहानाद्यापातादित्युक्तम् । तदस्मन्मताज्ञानरमणीयम् । मन्मते प्रमाणवस्तुपरतन्त्रस्य तत्त्वज्ञानस्य पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुमशक्यतया तस्याविधेयत्वेऽपि पुरुषेण कर्तुमन्यथा कर्तुमकर्तुं वा शक्यस्य पुरुषेच्छाधीनव्यापारतन्त्रस्य चोदनातन्त्रस्य ध्यानस्य विधेयताया भाष्य एवोक्तत्वात् । ध्यानस्य ज्ञानाभेदस्य ।

> न बुद्धिं मर्दयन्दृष्टो घटतत्त्वस्य वेदिता ।
> उपमृद्नाति चेद्बुद्धिं ध्यातासौ न तु तत्त्ववित् ॥ (प०ध्या०९१)

इति विद्यारण्यचरणैरुक्तत्वाच्च । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन' (बृ० ६ । ४ । २२ ) इत्यादिना नित्यकर्मणां विविदिषार्थत्वप्रतिपादनेन तेषां विविदिषाप्रतिबन्धकदुरितनिवर्तकत्वेऽपि विविदिषोत्तरमपि निर्विशेषात्मसाक्षात्कारप्रतिबन्धकदुरितनिवर्तकत्वाभावेनोक्तरीत्या तस्य सविशेषोपासनादिनैव निवृत्तेः प्रमाणसिद्धत्वान्न विचारशास्त्रे नित्यकर्मविचारापत्तिः । स्पष्टश्चायमर्थः 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' ( ब्र० सू० ३ । ४ । ५१) इति सूत्रे भाष्यतदीयटीकादौ । तथा हि—प्रतिबन्धकानि पापानि द्विविधानि प्रारब्धफलान्यप्रारब्धफलानीति । तत्र विविदिषाप्रतिबन्धकानि पापानि यान्यनारब्धफलानि तानि विविदिषोद्देशेन कृतैः कर्मभिर्नष्टानि । प्रारब्धफलानि तु भोगैकनाश्यानीति यावद्भोगक्षयं विविदिषैव नोदेति । तथा च श्रुतिः 'श्रवणायापि बहुभिर्यो न लभ्यः (का० १।२।७)' इति । सत्सु प्रतिबन्धकेषु श्रवणसामग्र्या एवानिष्पत्तेः । एवं विविदिषोत्तर-

मपि यदि प्रारब्धफलानि प्रतिबन्धकानि संभावितानि तदा श्रवणादिकं दुर्घटमेव यावद्भोगक्षयम् । विविदिषोत्पत्त्यनन्तरं विद्यमानानां श्रवणादिप्रतिबन्धकानां तु पापानामनारब्धफलानां ज्ञानोद्देशेन कृतैः कर्मभिर्नाशः ।

> ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मण. ।
> धर्मेण पापमपनुदति ॥

इति वचनेन कर्मणां पापनिवृत्तिद्वारा ज्ञानार्थताया अपि प्रतीतेः । श्रवणादिषु प्रवृत्तस्यापि प्रारब्धफलान्यप्रारब्धफलानि च निदिध्यासनपर्यन्तं विचारप्रतिबन्धकानि पापानि संभावितानि । तत्रापि प्रारब्धफलानां भोगादेव नाशः । अप्रारब्धफलानां तु श्रवणाद्युपासनादिनियमानुष्ठानेन । तथा च श्रुत्योक्तम्—'श्रवणायापि बहुभिर्यो न लभ्यः । शृण्वन्तोऽपि बहवो यन्न विद्युः' ( का० १ । २ । ७ ) इति । अत्र हेतुः—' कुशलोऽस्य लब्धाऽऽश्चर्योऽस्य ज्ञाता कुशलानुशिष्टः ' ( का० १ २।७ ) इति। अस्याऽऽत्मनः साक्षात्कारवान्कुशल एव । योऽपि ध्यानं सम्यगनुतिष्ठति, कृतश्रवणस्यापि निदिध्यासनप्रतिबन्धकं पापं प्रस्तुतं भवति तदा यावद्भोगक्षयं ध्यानासंपत्तेर्दुर्लभ एवाऽऽत्मेति भावः । किं बहुना क्रियमाणेऽपि श्रवणे बुद्धिमान्द्यादिना शाब्दज्ञानमपि नोत्पद्यते । तदिदमाह—आश्चार्यो ज्ञातेति । कुशलेनाऽऽचार्येणानुशिष्टो बोधितोऽपि ज्ञाताऽऽश्चर्यो दुर्लभ एव । तथा च यस्य ध्यानपरिपाकान्तं प्रतिबन्धकानि प्रारब्धफलानि पापानि न भवन्ति तस्यैवेह विद्या सिध्यति । अन्येषां तु श्रवणादिषु प्रवृत्तानामपि जन्मान्तर एवेति । सेत्वज्ञानाकार्यस्यापि पापस्य ' सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ' इतिवचनबलेन सेतुदर्शननिवर्त्यत्वस्येव सविशेषज्ञानाकार्यस्यापि निर्विशेषात्मज्ञानप्रतिबन्धकपापस्य सविशेषज्ञानसाध्योक्तसविशेषोपासननिवर्त्यताया: 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ' ( छा० १ । ६ । ७ ) इतिश्रुतिबलादङ्गीकारादधिष्ठानसाक्षात्त्वेनाधिष्ठानसाक्षात्कारस्याज्ञानमात्रनिवर्तकत्वेऽपि नोक्तदूषणावकाशः । उक्तरीत्या सविशेषज्ञानस्य निर्वि-

शेषज्ञानार्थत्वानपायात् । तथात्वेऽपि श्रुतहानाश्रुतकल्पनाभावस्योक्तत्वाच्च । एतेनेत्यादिचन्द्रिकोक्तदूषणमाभास एव । सविशेषध्यानं निर्विशेषध्यानार्थमिति चन्द्रिकायां विकल्पितः पक्षोऽपि [ अ ]साधुः । उक्तरीत्या संप्रज्ञातसमाधिरूपसविशेषध्यानस्य चित्तवशीकरणद्वाराऽसम्प्रज्ञातसमाधिरूपनिर्विशेषोपासनापरपर्यायनिर्विशेषध्यानार्थतायाः श्रुतिस्मृतिप्रमाणसिद्धतायाः उक्तत्वात् । ध्यानस्य ज्ञानाद्वैलक्षण्यस्य भाष्यादिसंमतस्योक्तत्वात् । विदधातोरुपासनायां प्रयोगस्य बहुस्थलेषु दृष्टत्वादिह ' य एवं वेद ' इत्यत्रोपासनाया एव विवक्षितत्वात् । वेदनस्य तत्क्रतुन्यायेनोक्तत्वाच्च ।

नापि सविशेषध्यानं निर्विशेषज्ञानार्थमिति द्वितीयः पक्षः । ध्यानविशेषो ज्ञानमित्यन्यत्रोक्तत्वात् । इह ' य एवं वेद ' इति ज्ञानार्थविद्धातुश्रवणाच्चेति चन्द्रिकोक्तं दूषणं निरालम्बनमेव ।

यच्चोक्तं चन्द्रिकायाम्—* भगवति तात्त्विकं रूपमित्यन्यत्रोक्तत्वात् । ' हिरण्मयः पुरुषो दृश्यते ' इत्यपरोक्षज्ञानविषयत्वोक्तेः । न हि योषित्यग्नित्वं दृश्यत इत्युच्यते । किंच योषिदादेरग्नित्वाद्यभावेऽपि तथाऽध्यासवन्निर्विशेषब्रह्मण एव हिरण्यश्मश्रुत्वादिना ध्यानसंभवेन सविशेषब्रह्मणः साधकानुग्रहार्थमैच्छिकरूपपरिग्रहोक्तिरयुक्ता । तस्मान्न सविशेषनिरूपणं निर्विशेषज्ञानार्थम् । अन्यथा × वैपरीत्यं स्यात् । ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै० २ । १ । १ ) इत्यादिसद्ब्रह्मनिरूपणमपि 'असद्वा इदमग्र आसीत् ( तै० २ । ७ । १ ) इत्यादिश्रुतिसिद्धासद्ब्रह्मज्ञानार्थं स्यात् । एवं च

> असद्रूपं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
> ये मन्दास्तेऽनुकम्प्यन्ते सद्ब्रह्मप्रतिपादनैः ॥

---

* ननु ध्यानविशेषो ज्ञानमिति यदुक्तं तन्न संगच्छते । कुत इति चेत् । ' हिरण्मयः पुरुषो दृश्यते ' इत्यत्रोक्तरूपस्य मिथ्यात्वात्तद्विषयकं ध्यानं कथं ज्ञानं स्यात् । अविद्यमानस्य ज्ञानायोगेऽपि ' योषितमग्निं ध्यायीत ' इतिवद्ध्यानस्योपपत्तेरित्यत आह—भगवतीति ।

× अन्यथा वैपरीत्यमिति । अन्यनिरूपणादन्यज्ञाने सति निर्विशेषनिरूपणं सविशेषज्ञानार्थं स्यादित्यर्थः ।

इत्याद्यपि स्यादित्यादि । तत्रोच्यते—'केवलो निर्गुणश्च' इति श्रुत्याऽऽत्मनो निर्गुणत्वप्रतिपादनाद्ब्रह्मणि रूपवत्त्वादिकं न तात्त्विकम् । किंतूपासनार्थमारोपितमेव ।

यत्तु 'बृहन्तोऽस्य धर्माः' इति श्रुत्या

ब्रह्मेशानादिभिर्देवैः समेतैर्यद्गुणांशकः ।
नावसाययितु शक्यो व्याचक्षाणैश्च सर्वदा ॥

इति स्मृत्या च 'ब्रह्म धर्मवत्, पदार्थत्वात्' इत्याद्यनुमानैश्च ब्रह्मसमानसत्ताकधर्मवद्ब्रह्मेति परैरुक्तम् । तदाकरग्रन्थेषु दूषित विस्तरेण । तत्संक्षेपतोऽत्र प्रसङ्गादुच्यते—न तावत्त्वदुदाहृतसगुणादिश्रुत्या ब्रह्मणस्तात्त्विकगुणवत्त्वसिद्धिः । सगुणप्रकरणस्थायास्तस्या उपास्तिविधिविषयविशेषणसमर्पकत्वेन ब्रह्मणि धर्मविशेषप्रकारकोपासनाविधायकत्वेन ब्रह्मणि धर्मवैशिष्ट्ये तात्पर्याभावात् । अन्यथा वाक्यभेदप्रसङ्गात् । 'सत्यकामादिरूपं ब्रह्मोपासीत' इत्यादिवाक्यस्य ब्रह्मणि सत्यकामत्वादिप्रकारकोपासनायां तात्पर्येऽपि ब्रह्मणि सत्यकामत्वादिवैशिष्ट्यस्याबाधितत्वान्मानान्तराप्राप्तत्वरूपापूर्वत्वस्य तात्पर्यनिर्णायकषड्विधलिङ्गान्तर्गतस्य तस्मिन्सत्त्वाच्च तत्परत्वमप्युक्तश्रुतेरास्तामिति चैकवाक्यताभङ्गापत्तेर्मानान्तराप्राप्तस्याप्यन्यशेषस्यातत्परतायाः सदृष्टान्त पूर्वमेवोपपादितत्वेन च निरस्तमेव । निर्गुणप्रकरणस्थायास्तस्याश्चाद्वितीयब्रह्मप्रतिपत्त्यनुकूलनिषेधापेक्षितप्रतियोगिसमर्पकतयाऽन्यथासिद्धेश्च । न च 'नेह नानाऽस्ति किंचन' (बृ० ४।४।१९) इतिद्वैतसामान्याभावबोधकश्रुतिस्थेन 'किंचन' इत्यादिसामान्यवाचकेन पदेनैव ब्रह्मातिरिक्तसकलनिषेध्योपस्थितौ विशेषसमर्पणमनर्थकमिति शङ्क्यम् । अलौकिकतया सगुणोपासनावाक्यप्रमेयत्व भ्रमव्युदासार्थत्वेन सार्थक्यात् ।

यत्तु श्रुतिमात्रस्य श्रुत्या निषेधेऽहिंसावाक्यम् 'अग्नीषोमीयं पशुमालभेत' इतिवाक्यबोधितहिंसायाः 'नातिरात्रे षोडशिनं गृह्णाति' इत्यग्रहणवाक्यम् 'अतिरात्रे षोडशिनं गृह्णाति' इतिवाक्यविहितषोडशिग्रहणस्य 'असद्वा इदमग्र आसीत्' * (तै०

२।७।१) इति वाक्यम् 'सदेव सोम्येदमग्र आसीत्' (छा० ६।२।२) इतिवाक्यबोधितब्रह्मसत्त्वस्य, 'द्वा सुपर्णा' इत्यादिभेदवाक्यं च तत्त्वमस्यादिवाक्यबोध्यस्याभेदस्य निषेधकं स्यादिति परैरुक्तम् । तदत एव निरस्तम् । प्रकृते श्रुतिप्राप्तत्वस्यैवाभावात् । श्रुतिप्राप्तत्वं हि न यथाकथंचिच्छ्रुतिबोधितत्वम् । तथा सति 'न कलञ्जं भक्षयेत्, न ब्राह्मणं हन्यात्' इत्यादौ मानान्तररागादिप्राप्तकलञ्जभक्षणानुवादकेन 'कलञ्जं भक्षयेत्' इत्यनेन कलञ्जभक्षणादेर्बोधनात्तस्य श्रुत्यैव नेत्यनेन निषेधे विकल्पापत्तेः । किंतु श्रुतितात्पर्यविषयत्वं श्रुतिप्रमितत्वापरपर्यायमेव तद्वाच्यम् । तच्च न प्रकृतेऽप्यस्तीत्युक्तमेव । अहिंसावाक्यस्य वैधहिंसाविषयत्वाभावाद्वैधहिंसाविषयाग्नीषोमीयहिंसाबोधकवाक्यसमानविषयकत्वाभावेन न 'अहिंसावाक्यमग्नीषोमीयहिंसाया बाधकं स्यात्' इत्यापादनं युक्तम् । द्वयोः समानविषयत्व एव बाध्यबाधकभावकल्पनावसरात् । तयोः समानविषयत्वे ग्रहणाग्रहणवद्विकल्पस्यैवाऽऽपत्तेर्न बाध्यबाधकभावापादनं संभवति । ग्रहणाग्रहणवाक्ययोस्तु सत्यपि समानविषयत्व एकस्याधिकबलवत्त्वाभावेन बाध्यबाधकभावस्याप्रसक्तिनत्वात् । अन्यथा विकल्पानाश्रयणप्रसङ्गात् । असद्वाक्यभेदवाक्ययोस्तु 'कथमसतः सज्जायेत' इति दूषणाय 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना भेदनिषेधाय चासद्भेदानुवादतयोपक्रमाद्यवगततत्त्वैक्यतात्पर्यकसत्त्वैक्यपरवाक्यतो दुर्बलतया न ब्रह्मसत्त्वैक्यनिषेधकतासंभवः । अथवा सगुणश्रुतिरपरब्रह्मविषया । उक्तरीत्या वाक्यभेदापत्तेः । तस्याः सगुणत्वे तात्पर्याभावेऽपि देवताधिकरणन्यायेन तया शुद्धब्रह्मान्यत्सगुणं ब्रह्म प्रमाप्यते । निर्गुणश्रुत्यनुरोधेन विषयभेदस्याऽऽवश्यकत्वात् । तावताऽपि शुद्धब्रह्मणो निर्गुणत्वे बाधकाभावः । अविद्याबिम्बवद्बुपहितस्यैव सगुणत्वप्रमापणात् । न च 'सगुणातिरिक्तस्य ब्रह्मणोऽसिद्धिः सगुणश्रुत्या तात्त्विकत्वस्य गुणादावविषयीकरणेऽपि बाधकाभावात्तात्त्विकगुणवत्त्वस्य तदर्थतया अवगमनीयतया स्वपक्षे तात्त्विकगुणवद्ब्रह्मकत्वन्तरस्या-

भावात्' इति वाच्यम् । द्वैतमिथ्यात्वश्रुत्यनुमानादेरेव बाधकत्वात् । सगुणत्वाद्ये श्रुतेर्व्यावहारिकप्रामाण्यवत्त्वान्निर्धर्मकश्रुतेर्विषयान्तराभावेन शुद्धे निर्धर्मकत्वप्रमापकत्वावश्यकतया निर्धर्मकत्वादिश्रुत्यैव शुद्धब्रह्मसिद्धिसंभवात् । अत एवोक्तस्मृतिसूत्राभ्यां न विरोधः । व्यावहारिकधर्मभेदांशविषयत्वेन तेषां शुद्धान्यसगुणब्रह्मप्रमापकतया शुद्धाविषयकत्वाभावात् । एतेन किंच—

> आद्यसूत्रे धर्मशब्दाद्द्वितीये भेदशब्दतः ।
> निर्धर्मकत्वमैक्यं च निरस्तं परवस्तुनः ॥
> धर्मो भेदश्च मिथ्या चेच्छ्रुतिसूत्राप्रमाणता ।
> व्याख्याव्याजेन चोक्ता स्यात्त्वया सौगतसौहृदात् ॥

इति चन्द्रिकोक्तप्रलाप उन्मत्तप्रलाप एवेत्युपेक्षणीयः । अप्रसिद्धमर्थं प्रसिद्धत्वेन बोधयतां श्रुतिसूत्राणामप्रमाणत्वासंभवस्य जिज्ञासाधिकरण एवोक्तत्वात् । न च 'सगुणः परः पराणाम् ।' इत्यादिस्मृत्या सगुणस्य परादपि परत्वं स्मर्यते, तथा च कथं सगुणवाक्यानामपराविषयत्वमिति शङ्क्यम् । जडापेक्षया परः किंचिज्ज्ञस्तदपेक्षया सर्वज्ञस्य शुद्धापेक्षयाऽपरस्यापि परत्वात् । न चैवं सति 'सदेव सोम्येदमग्र आसीत्' 'असद्वा इदमग्र आसीत्' इति श्रुती अप्यपरब्रह्मपरब्रह्मविषये स्यातामिति वाच्यम् । तत्रेदमिदामिति प्रपञ्चस्यैव प्रकृतत्वेन ब्रह्मपरत्वस्य वक्तुमशक्यतया प्रपञ्चस्यैव सृष्टेः पूर्वं कारणात्मना सत्त्वमनभिव्यक्तनामरूपत्वस्वरूपं कार्यात्मनाऽसत्त्वं च विषयी कुरुतः । अत एव पश्चात् 'ततो वै सदजायत' इति विशेषेणाभिव्यक्तत्वोक्तिः संगच्छते । नापि ग्रहणाग्रहणवाक्ये परापरयागविषये स्यातामित्यापादनं सम्यक् । 'ऐन्द्रवायवं ग्रहं गृह्णाति' इत्यादिवाक्यवत्षोडशिग्रहणवाक्यस्य यागपरत्वेऽप्यग्रहणवाक्यस्य तदभावबोधकतया यागविषयत्वाभावात् । न च ग्रहणवाक्यस्य यागविषयकत्वस्येवाग्रहणवाक्यस्य ग्रहणशून्यपरयागविषयकत्वमस्त्विति वाच्यम् । ग्रहणवाक्यप्रमितयागनिषेधपरत्वसंभवे ग्रहणशून्यपरयागविषयकत्वे मानाभावात् ।

अपूर्वपरयागग्रहणस्याप्रामृतत्वेन तन्निषेधवैयर्थ्यात् । न च ग्रह-णाभावनित्यानुवादेनापूर्वयागपरत्वकल्पनमपि युक्तम् । यदेव ग्रहणवाक्ये विधीयते तत्प्रतिषेधरूपमुख्यार्थपरत्वसंभवे व्यर्थप्रायनित्यानुवादेनापूर्वयागपरत्वकल्पनायोगात् । निर्गुणवाक्ये त्वद्वैतश्रुतिविरोधेन निषेधपरत्वासंभवात्प्रतिषेधोपलक्षितशुद्धब्रह्मपरत्वस्यैव वक्तुं युक्तत्वात् । नन्वेव सति 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' ( तै० २ । ६ । १ ) इति श्रुतिरपि नासत्त्वसिद्ध्यर्था । किंतु शून्यतापत्तिरूपपरममोक्षपरेति स्यादिति ।

असद्रूपं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सद्ब्रह्मप्रतिपादनैः ॥

इति चन्द्रिकोक्तदूषणमापतेदिति चेत् । न । शून्यताया अपुरुषार्थत्वात् । 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्' इतिश्रुतिसिद्धानन्दात्मकब्रह्मस्वरूपतावाप्तिरूपपरमपुरुषार्थमोक्षसाधनज्ञानविषयसद्रूपब्रह्मस्वरूपप्रतिपादनाय प्रवृत्ताया: श्रुते: शून्यतापत्तिरूपपरममोक्षपरत्वस्य वेदबाह्यशून्यवादिसुहृदेव वक्तव्यत्वात् । यत्तु श्रुत्योर्विरोधे नैकस्यास्तात्त्विकविषयकत्वमन्यस्या अतात्त्विकविषयकत्वमिति कल्पनं युक्तम् । तन्त्रान्तरे व्याकरणादौ च शास्त्रयोर्मिथो विरोधे संकोचविकल्पादिनोभयप्रामाण्यस्यैव निर्णीतत्वात् । तदुदाहरणानां पूर्वतन्त्रे स्पष्टत्वात् । व्याकरणेऽपि परेण पूर्वस्य नित्येनानित्यस्येत्यादिना बाधस्योक्तत्वेऽपि तस्य संकोचरूपतैव । तथा चोक्तम्—

को हि मीमांसको ब्रूयाद्विरोधे शास्त्रयोर्मिथः ।
एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति ॥

निर्गुणसगुणश्रुत्योर्विरोधे निर्गुणश्रुतेः प्राकृतहेयगुणशून्यार्थकतया संकोच एव युक्त इति पराभिमतम् । तदसत् । पूर्वतन्त्रादौ विधिनिषेधशास्त्रयोर्द्वयोरपि स्वार्थे तात्पर्यसत्त्वेन प्रामाण्ये समकक्षतयैकतरस्याऽऽत्यन्तिकबाधायोगात्संकोचनं विकल्पेन पर्युदासादिना वा पाक्षिकं प्रामाण्यमाश्रितम् । इह तु निर्गुणश्रुतेः स्वार्थपरत्वेन प्राबल्यात्सगुणश्रुते स्वार्थे तात्पर्याभावेन

ततो दुर्बलतया प्रामाण्ये समानकक्षत्वाभावेन निषेध्यसमर्पकतद्वैकवाक्यतया प्रामाण्यसम्भवेन वाक्यभेदेन गुणप्रमापकवाक्या न्यायत्वेन च वैषम्यात् । अत एव 'को हि मीमांसको ब्रूयात्' इत्यादिना न विरोधः । तस्य समानबलाविरुद्धशास्त्रद्वयविषयकत्वात् । अधिकमाकरे द्रष्टव्यम् । नाप्यनुमानेन प्रपञ्चे तात्त्विकरूपवत्त्वसिद्धिः । 'ब्रह्म धर्मिसमानसत्ताकधर्मवत्, पदार्थत्वाद्घटवत्' 'ब्रह्म स्वज्ञानाबाध्यप्रकारवत्, अधिष्ठानत्वाच्छुक्तिकादिवत्' इत्याद्यनुमानेषु परोक्तेषु धर्मिपदस्वपदघटितेषु धर्मिपदस्वपदयोर्यत्किंचिद्धर्मियत्किंचित्सबन्धिपरत्वे घटादिसमसत्ताककल्पितधर्मवत्त्वेन सिद्धसाधनम् । ब्रह्मपरत्वे साध्याप्रसिद्धिः । घटादिधर्मे ब्रह्मसमानसत्ताकत्वादेरप्रसिद्धेः । न च दृष्टान्ते साध्यनिरूपणवेलायां तदेव धर्मि पक्षे तन्निरूपणवेलायां ब्रह्मैव धर्मि, धर्मिपदस्वपदादीनां समभिव्याहृतपरत्वादिति वाच्यम् । शब्दस्वभावोपन्यासस्यानुमाने प्रत्यप्रयोजकत्वात् । पर्वतोऽरुणवह्निमान्धूमात्, यो यो धूमवान्स शुक्लवह्निमानित्यादिवाक्यस्यानुमानानुपयोगात् । येन रूपेण साध्यं प्रतिज्ञातं तेनैव हेतुव्यापकत्वस्योदाहरणादौ प्रदर्शनीयतया प्रतिज्ञावाक्ये पक्षरूपधर्म्यादिपदार्थघटितरूपेणोदाहरणादौ दृष्टान्तरूपधर्म्यादिपदार्थघटितरूपेण साध्यबोधकतेति शब्दस्वभावस्यानुमानोपयोगित्वाभावात् ।

यत्त्वेवं सति प्रमाणज्ञानं स्वप्रागभावातिरिक्तस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वादन्धकारे प्रथमोत्पन्नप्रदीपप्रभावादिति विवरणोक्तानुमानासंगतिः । तत्रापि स्वपदस्य पक्षपरत्व दृष्टान्ते तद्घटितसाध्याप्रसिद्धि । दृष्टान्तपरत्वे पक्षे तद्घटितसाध्यबाध इति परेणोक्तम् । तदसत् । तत्रानुमाने स्वपदस्य पक्षदृष्टान्तान्यतरपरत्वस्य विवरणसम्मततया जिज्ञासाधिकरण एव तादृशानुमाने परोक्तदूषणनिराकरणप्रसङ्गे स्पष्टतयोक्तत्वेनोक्तदूषणानवकाशात् । प्रकृते धर्म्यादिपदस्य पक्षदृष्टान्तान्यतरपरत्व घटादिसमानसत्ताककल्पितधर्मवत्त्वमादाय सिद्धसाधनापत्तेर्दुर्वारत्वात् ।

'अशरीरं शरीरेषु अनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥

सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' इति श्रुत्या निराकारमपि ब्रह्म । स्नाविरा नाड्य । अत्र भौतिकशरीरत्वव्यापकव्रणस्नाविरादिमत्त्वनिषेधेनैव शरीरनिषेधे सिद्धे 'अकायम्' इति व्रणस्नाविरादिशून्यलीलाविग्रहाणामपि मिथ्यात्वेन परमार्थतस्तन्निषेधायेति बोध्यम् । अत एव ।

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं नैव मा द्रष्टुमर्हसि ॥

इति नारदं प्रति भगवद्वाक्यम् ।

ननु 'आदित्यवर्णं तमस परस्तात्' (पु० सू० १६) 'यदा पश्य. पश्यते रुक्मवर्णम्' (आ० उ० ३ । १ । ३) 'ऋतꣳ सत्यं पर ब्रह्म पुरुषं कृष्णपिङ्गलम्' (ना० उ० २३) 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्' (तै० सं० ४।६।२) 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' (पु० सू० १)

'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः' (गी० ११।५)
'सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्' (गी० १३।१३)

इत्यादिश्रुतिस्मृतिभ्यः 'ब्रह्म सविग्रहं स्रष्टृत्वात्पालयितृत्वात्' इत्याद्यनुमानैश्च ब्रह्मणो विग्रहसिद्धिरिति चेत् । न । आदित्यवर्णमित्यस्याविद्याविलक्षणस्वप्रकाशस्वरूपप्रतिपादनपरतयाऽऽरोपितशरीरवत्त्वेनोपासनापरतया चोपपत्तेरुक्तश्रुत्यनुरोधात् । न च तमसः परत्वोक्त्योपासनापरत्वानुपपत्तिः । उपास्यविग्रहोपलक्षितस्यैव तेन तमसः परत्वोक्ते रूपविशिष्टस्य तमसः परत्वानुक्तत्वात् ।

यत्तु चन्द्रिकायाम्—'एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यत्र वर्तमानापरोक्षज्ञानविषयत्वोक्तेः परमात्मशरीरस्यानारोप्यत्वम् । न हि योषित्यग्नित्व दृश्यत इत्युच्यत इत्युक्तम् । तदपि न सत् । हिरण्मयशरीरविशिष्टस्य दृश्यतोक्त्या

हिरण्मयशरीरस्यापि दृश्यत्वलाभादविद्यमानस्येन्द्रियसंनिकर्षे साक्षिसबन्धाद्यभावेन वर्तमानापरोक्षज्ञानविषयत्वाभावात्तत्र दृश्यत्वस्य श्रुत्युक्तस्यानुपपत्त्या दृश्यत्वेनोक्त शरीरमनारोप्यमिति वक्तव्यम् । तच्च न सभवति । नामादिप्रतीके ब्रह्मोपासन उपास्यसाक्षात्कारनियमाभावेऽपि ‘ यस्य स्यादद्धा न विचिकित्सा ’ इति श्रुत्या यस्योपास्यमद्धा साक्षात्कृतं भवति, उपासनाफलं मया प्राप्तं न वेति विचिकित्सा नास्ति, तस्योपास्य प्राप्तिद्वारकमुक्तिरूपफलप्राप्तिरिति बोधनेनाहंग्रहेण सगुणब्रह्मोपासनायामुपास्यसाक्षात्कारनियमात्तद्गुणशरीरविशिष्टस्य ब्रह्मण इन्द्रियसाक्ष्ययोग्यत्वेऽप्यविद्यमानस्यापि तस्य हिरण्मयशरीरविशिष्टत्वादित्यवर्णत्वादिनाऽऽविर्भावेनातिशयेन साक्षात्कारसंभवादुपासनाकालीनसाक्षात्कारमादाय ‘दृश्यते’ इति श्रुत्युपपत्तेः । योषिदादावग्नित्वाद्युपासनाया प्रतीकोपासनात्वेनोपास्यसाक्षात्कारनियमाभावाद्योषिदादावग्नित्व दृश्यत इति न प्रयोग । अथवा—उपासनाया ज्ञानत्वाभावेऽपीच्छाविषयत्वेनेव तद्विषयत्वेनाऽऽरोप्यस्यास्याविद्यमानस्यापि साक्षिभास्यत्वादादित्यवर्णत्वाहिरण्मयत्वादेरारोप्यस्य वर्तमानदर्शनविषयत्वबोधिका ‘ दृश्यते ’ इति श्रुतिरुपपन्ना । न चोपासनाविषयत्वेन दृश्यत्वोपपादनेऽपि स्वरूपेणाविद्यमानस्य दृश्यत्वं नोपपादितमिति वाच्यम् । दृश्यत इत्यनेन स्वरूपेण दृश्यत्वस्याबोधनात् । एतेन हिरण्मयवाक्ये ‘य एव वेद’ इति क्रियापदश्रवणादेकवाक्योपात्तवर्तमानत्वार्थकाख्यातानामेककालीननानाक्रियाबोधकत्वाद्यदा यदोपासना तदा तदा दर्शनमिति लाभादुपासनासाध्यदर्शनमादाय न ‘दृश्यते’ इति श्रुत्युपपत्तिरिति परोक्तकुचोद्यमपास्तम् । उक्ताख्यातानामेककालीननानाक्रियाबोधकत्वेऽपि क्रियाणां परस्पर व्याप्यव्यापकभावबोधकत्वमप्रामाणिकम् । न हि पचति पठतीत्युक्ते यदा यदा पाठस्तदा तदा पाक इति बुध्यते । तथा चाप्यग्रे साक्षात्कृतेऽपि ‘ आ प्रायणात्तत्रापि हि दृष्टम् ’ ( ब्र० सू० ४ । १ । १२ ) इति न्यायेनाऽऽमरणान्तमुपासनाया एवोपासनावाक्येन बोधनादुपासनाकाले कदाचिद्दर्श-

नसत्त्वेन तदादाय 'दृश्यते' इतिश्रुत्युपपत्तेः प्रथमपक्षेऽपि सम्भवाच्च ।

यदपि 'एतमितः प्रेत्याभिसम्भवितास्मि' इत्यादिश्रुत्योपास्यरूपप्राप्तेरुपासनाफलत्वेनोक्तत्वादुपास्यशरीरमावश्यकमिति परोक्तम् । तदपि न । तावताऽप्यनारोपितशरीरस्यासिद्धेः । आरोपितशरीरस्यास्माभिरप्यङ्गीकारात् । 'ब्रह्मणा सह ते सर्वे' इतिस्मृत्यनुसारेणोक्तश्रुतेरारोपितसगुणब्रह्मप्राप्तिपरत्वस्याऽऽवश्यकत्वात् । 'विश्वतश्चक्षुः' इत्यादिश्रुतिस्मृतीनां ब्रह्मणः सर्वात्मकतया सर्वान्तर्यामितया च यावज्जीवात्मयमयति तदीयशरीरचक्षुःपाणिशिरआदिभिरेव शरीरचक्षुरादिमत्त्वमित्यनुवादितयापपत्तेः । पाणेः सर्वदेशवृत्तित्वे पादादेस्तदसम्भवः । पादादेः सर्वदेशवृत्तित्वे पाण्यादेस्तदसंभवः । मूर्तयोः समानदेशताया विरोधात् । भगवतः सर्वत पाणिपादत्वादेरसम्भवात् । त्वयाऽप्येवमेव वाच्यम् । अन्यथा भगवच्छरीरं यदि सर्वदेशवृत्ति पाण्यादियुक्तं तर्हि 'वैकुण्ठादिदेशविशेषावच्छेदेनेशशरीरप्राप्तिर्मुक्तिः शरीरिणः, ईशस्यान्तर्यामिरूपेण सर्वकार्येषु प्रवेशः' इति त्वदुक्तिरनुपपन्नैव स्यात् । न च सर्वदेशव्यापकं शरीरम् 'पश्य मे पार्थ रूपाणि' इत्यादिस्मृतिसिद्धं वैकुण्ठस्थशरीरप्राप्तिरपि 'एतमितः प्रेत्याभिसम्भवितास्मि' इत्यादिशास्त्रसिद्धैवेति वाच्यम् । सर्वत पाणिपादादियुक्तोपासकस्यापि त्वन्मते वैकुण्ठप्राप्त्या 'पश्य मे पार्थ रूपाणि' इत्यादेरारोपितशरीरबोधकत्वेऽपि तत्सत्यत्वबोधकत्वस्य 'माया ह्येषा मया सृष्टा' इत्यादिस्मृतिविरोधेनासम्भवात् । त्वन्मतेऽपि मुक्तप्राप्यशरीरस्यैव सत्यत्वौचित्यात् । उक्तानुमानेऽप्यारोपितशरीरमादाय सिद्धसाधनम् । न च सृष्टिपूर्वकालावच्छिन्नेशत्वेन पक्षत्वात्तत्कालावच्छेदेन सविग्रहत्वसिद्धेरुद्देश्यत्वान्न सिद्धसाधनमिति वाच्यम् । तथाऽप्यनादिमिथ्याशरीरमादायार्थान्तरस्य दुर्वारत्वात्त्वदुद्देश्यासिद्धेः । अपाणिपादत्वेऽपि जवनत्वग्रहीतृत्ववदचक्षुष्कत्वाश्रोत्रत्वादिमत्त्वेऽपि दर्शनश्रवणादिवदशरीरित्वेऽपि स्रष्टृत्वाद्युपपत्तेरुक्तानुमानस्याप्र

योजकत्वाच्च । चक्षुराद्यभावेऽपि तत्कार्यकारित्वेन तत्स्थानीयाविद्यापरिणामात्मकेक्षणादेः सृष्ट्यादिप्रयोजकस्य स्वीकारेणोपपत्तेश्च ।

यत्तु 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुत्युक्तं प्रवेष्टृत्वम् 'ब्रह्मविदाप्नोति परम्' इतिश्रुत्युक्तं गम्यत्वं च भगवतो विग्रहमन्तरेणानुपपन्नमिति तत्सिद्धिरिति परोक्तम् । तन्न । स्वसृष्टमनआदिकार्येषु जीवादिविशिष्टरूपेण स्फुरणस्यैव तत्रानुप्रवेशशब्दार्थत्वाद्व्यापकस्य तस्य मुख्यप्रवेशासंभवात्स्वस्वरूपतः स्वतः प्राप्तस्याप्यविद्यातिरोधाननिवृत्त्यपेक्षया प्राप्यत्वोपचारस्य पूर्वमेवाऽऽवेदितत्वाच्च तत्र विग्रहापेक्षा ।

यत्तु 'तमेव विद्वानमृत इह भवति' ( नृ० पू० उ० ६ ) इति श्रुतौ सविग्रहस्यैव सर्वनाम्ना परामर्शात्तज्ज्ञानस्यैव मोचकत्वे न विग्रहासिद्धिरिति । तदपि न । सगुणविद्यायाः क्रममुक्त्यर्थत्वेनाऽऽरोपितशरीरबोधकत्वेनान्यथासिद्धेः । साक्षान्मुक्तिजनकत्वबोधकत्वस्वीकारपक्षेऽपि तदुपलक्षितात्मज्ञानस्यैव मोचकत्वबोधनात् । एतेन 'देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः' इति स्मृत्याऽपि न विग्रहसिद्धिः । उक्तदिशा तदुपपत्तेः । किंच भगवद्विग्रहः किं भौतिकोऽभौतिको वा, अभौतिकोऽपि मायिकोऽमायिको वा, अमायिकोऽपि ब्रह्मभिन्नो ब्रह्मणोऽभिन्नो वा, भौतिकमायिकावपि स्वकर्मार्जितौ वा परकर्मार्जितौ वा । स्वकर्मार्जितत्वे संसारित्वापत्तिः । परकर्मार्जितत्व इष्टापत्तिः । भक्तानुग्रहार्थं भक्तकर्मार्जितमायिकदेहस्येच्छया भगवतो मयाऽपि स्वीकारात् । ब्रह्मभिन्नत्वे विग्रहस्य त्वया ब्रह्मभेदास्वीकारात्तवापसिद्धान्तः । 'अपाणिपादः' इतिश्रुतिविरोधश्च । ब्रह्माभिन्नस्य सत्यस्वरूपामायिकत्वस्वीकारे 'अतोऽन्यदार्तं नेति नेति' [ इति ]श्रुतिविरोधः । ब्रह्माभिन्नामायिकभगवद्देहस्वीकारे जीवतद्देहयोरप्यभेदापत्त्या देहात्मवादपर्यवसानाच्चार्वाकमतप्रवेशश्च । अभौतिकब्रह्मविग्रहे प्रमाणाभावः । न च 'नाभ्या आसीदन्तरिक्षम्' इति भूतकारणत्वोक्त्या तस्याभौतिकत्वसिद्धिः शङ्क्या । 'अग्निर्मूर्धा खं वै नाभिश्चन्द्रसूर्यौ च नेत्रे

विद्धि पादौ क्षितिं च ' इत्यादिश्रुतिपर्यालोचनयाऽन्तरिक्षादीनां नाभ्यादितादात्म्यारोपेण विराट्पुरुषदेहप्रतिपादकतया शरीरस्य भूतकारणत्वप्रतिपादकत्वाभावे सिद्धे ' नाभ्या ' इत्यस्य नाभिरित्यर्थकत्वात् । यदपि ' एको ह वै नारायण आसीन्न ब्रह्मा नेशानः ' इति श्रुत्या महाप्रलये नारायणस्थित्युक्त्या नित्यविग्रहसिद्धिः ( इति । तन्न । ) ' सदेव सोम्येदमग्र आसीत् ' ( छा० ६।२।२ ) इतिश्रुत्यनुरोधेन नारं जीवसमूहोऽयनं नियम्य यस्येति व्युत्पत्त्या नारायणशब्देन मायावच्छिन्नचैतन्यस्यैव भूतभौतिकसकलकार्यस्रष्टृत्वविशिष्टस्योक्तिसंभवात् । न च शरीरविशिष्ट एव नारायणशब्दरूढया ' सदेव ' इत्यादिश्रुतिरेव शरीरविशिष्टपरेति वक्तव्यम्, अन्यथा सञ्ज्ञाया विहितणत्वानुपपत्तिरिति वाच्यम् । ' एकमेवाद्वितीयम्' इत्यादि[श्रुति]विरोधेन तथा वक्तुमशक्यत्वात् । श्रुतिविरोधेन णत्वविधायकस्मृतिबाधोपपत्ते । नरायणस्याय नारायण इति व्युत्पत्त्या णत्वोपपत्तेः पूर्वमुक्तत्वाच्च । मायादेस्तु मिथ्यात्वेन तात्त्विकाद्वैतबोधकश्रुतिविरोधाभावात् । 'माया तु प्रकृतिं विद्यात्' ' जीवेशावाभासेन करोति' ' माया चाविद्या च स्वयमेव भवति' इति श्रुत्या मायादेरनादित्वे सिद्धेऽप्यनादिशरीरे मानाभावाच्च । न चाद्वितीयमित्यस्यासहायमित्यर्थकतया न श्रुतिविरोधः । जगत्स्रष्टृत्वादिना शरीरसिद्धिं वदतस्तव शरीरसाहाय्यस्य सृष्टौ सत्त्वेन तादृशार्थबाधात् । न च नारायणशब्दस्य मायोपहितचैतन्यपरत्वे तस्य जीवसाधारण्याद्व्यावर्तकत्वासंभवः शङ्क्यः । मायाशब्देनाखण्डमायाग्रहणेन जीवानां मायाप्रदेशरूपाविद्योपहितत्वेन व्यावर्तकत्वसंभवात् । मायाविद्ययोरभेदपक्षे मायाबिम्बत्वमेव प्रतिबिम्बव्यावर्तकम् ।

यत्त्वेवं सति प्रलये शरीरं विना चेतनसामान्यसत्त्वान्नारायणस्यैव सत्त्वकथनमयुक्तं स्यादिति परेणोक्तम् । तदसदेव । नारायणस्येक्षणादिपूर्वकजगत्स्रष्टृत्वादेर्वाच्यत्वेन तदर्थं तस्यैव प्रलये सत्त्वोक्तेः । एतेनैव ' स एकाकी न रेमे तस्य ध्यानान्तःस्थस्य तस्मिन्पुरुषाश्चतुर्दशाजायन्त, एका कन्या ' इत्या-

दिना भूतेन्द्रियसृष्टिमुक्त्वा 'तस्य ललाटात्त्र्यक्षः शूलपाणिरजायत' इत्युक्तेः शरीरी जगत्कारणं नारायण इत्युक्तमपि समाहितम्। 'एकमेव' इत्यादिश्रुत्यनुरोधेन ललाटपदस्य मायापरत्वात्। तदानीमुत्पन्ननारायणशरीरललाटपरत्वाद्दोषापत्तेः। न च 'पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतम्' इति पुराणाद्युक्त्या महाप्रलये देहस्य साक्षात्स्थित्यवगमाद्भगवतो नित्यशरीरसिद्धिः शङ्क्या। सविकारमूलकारणाविद्याया संस्कारात्मनाऽवस्थानस्य तत्रोदरीकरणशब्दार्थत्वात्। न चोदरपदस्य मुख्यार्थत्याग। संस्कारात्मना कार्यस्य कारणेऽवस्थानं हि प्रलयः। न संस्कारत्वापन्नस्य जगत उदरेऽवस्थानम्। उदरस्याकारणत्वात्। अत उदरपदस्य विनाश्यमानाधारत्वगुणयोगेन मायाया गौणत्वस्य त्वयाऽपि वाच्यत्वात्। मायायास्तु कारणत्वम् 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुतिसिद्धमेव।

यत्तु भगवद्विग्रहस्य नित्यस्यानङ्गीकारे

> सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः।
> परमानन्दसंदोहा ज्ञानमात्राश्च सर्वदा॥

इत्यादिपुराणादिवचनविरोध इति। तदपि न। नित्या प्रलयपर्यन्तं स्थायिनः। 'आभूतसंप्लवं स्थानममृतत्वेन भाष्यते' इति न्यायात्। तस्यैवार्थस्य विवरणं शाश्वता इति। 'योगधारणया दग्ध्वा' इति पुराणवचनेन श्रीकृष्णादिदेहस्य प्रलयपर्यन्तं स्थित्यभावावगतावपि देहस्य नष्टत्वेऽपि तत्सजातीयदेहान्तरं जनयित्वा भक्तवात्सल्येन प्रदर्श्यमानत्वादुपासनातिशयेन तत्तज्जातीया देहा प्रलयपर्यन्तं सर्वदा भक्तैर्द्रष्टुं शक्याः। परमानन्दसंदोहा दुःखभोगानायतना। ज्ञानमात्रा ज्ञानमात्रप्रधानाः। आवरणशून्या इति यावत्। रघुनाथादिदेहे रोदनाद्यावरणकार्यं तु नाऽऽवरणेन किंतु ब्राह्मणशापादेर्यथार्थसूचनायैव लोकदृष्ट्यैवेति तादृशपुराणवचनार्थत्वात्। अत एव भगवद्विग्रहो जडस्ततो भिन्नश्च।

यत्त्वानन्दरूपममृतं यद्विभाति आपणत्वात् । स एवाऽऽनन्दः । मोदो दक्षिणः पक्ष । यदात्मको भगवाँस्तदात्मिका व्यक्ति । किमात्मको भगवाञ्ज्ञानात्मक ऐश्वर्यात्मकः ' इत्यादिश्रुतेर्भेदाभावेऽपि वलयाकाराहे कुण्डलाभेदेऽपि तयोर्विशेषबलाद्यथाऽहिः कुण्डलीति व्यवहारस्तथा ब्रह्मतच्छरीरयोरपि विशेषस्वीकारेण ब्रह्म शरीरीति व्यवहारोपपत्तिरिति परोक्तम् । तन्न । संयोगविशेषविशिष्टस्याहेः केवलाहित्वविशिष्टाद्भेद एव सम्भवति । अत एव भट्टादमते गुणगुण्यादोर्भेदाभेदस्वीकारः । घटत्वनीलत्वादिरूपभेदेन तद्रुपाहतयाभेदसम्भवात्तन्नतीयमानत्वेनाभेदस्यापि सम्भवाच्च । तथा च भेदस्यैव विशेष इति नाममात्रमेवेति विशेषस्यैवासिद्धे । अस्तु वा भेदान्यो(ऽन्यो) विशेषस्तथाऽपि ब्रह्मतच्छरीरयोर्न तत्सम्भव. । स ह्याहकुण्डलन्यायेन विभिन्नधर्मोपहितयोरेव वाच्यः । अन्यथा तद्व्यक्तिस्तद्व्यक्तिमतीत्यादिप्रत्ययव्यवहारयोरपि विशेषकल्पनया प्रमात्वापातात् । न च ब्रह्माभिन्नशरीरवृत्तिब्रह्मत्वान्यच्छरीरत्वादिकमस्ति । मानाभावात् । चेष्टावदन्त्यावयवित्व शरीरत्वमिति हि शरीरलक्षण वृद्धा वदन्ति । तस्य ब्रह्मवृत्तित्वे ' निष्कलं निष्क्रियम् ' ( श्वे० ६ । १९ ) इतिश्रुतिविरोधः । न च प्राकृताशक्रिययोर्निषेधपरा सा श्रुतिरिति वाच्यम् । सकोचे प्रमाणाभावात् । सावयवत्वेन विनाशित्वापत्तेश्च । न च श्रुतिबलात्सावयवोऽपि भगवद्विग्रहो नित्यः । शरीरित्वबोधकश्रुतेर्गौणत्वात् । विग्रहाङ्गीकारे ' अपाणिपादः ' इति श्रुतिविरोधाच्च । न च ' असुखम् ' इति श्रुतौ प्राकृतसुखनिषेधवदत्रापि प्राकृतावयवनिषेधपरता । अन्यथा शृणोति पश्यतीतिवाक्यविरोध इति वाच्यम् । आनन्दादिरूपताबोधकश्रुतिविरोधेन तत्र संकोचवदत्र संकोचे कारणाभावात् । श्रावणत्वादिजातिविशिष्टे शक्तस्यापि शृणोत्यादेः शब्दविषयकत्वरूपशक्यगुणेनेशसाक्षिणि प्रयोगोपपत्ते. । अन्यथा त्वन्मतेऽपि भगवति श्रवणचक्षुरादिसाध्यज्ञानानङ्गीकारेण तद्विरोधस्य दुर्वारतेव । असुखमित्यादौ विषयसंयोगजन्यवृत्त्यभिव्यक्तबिम्बरूपसुखत्वविशिष्टस्यैव निषेधात्सु-

स्वरूपस्य ब्रह्मणः 'नास्ति सुखं यस्मिन्' इति व्युत्पत्त्या सुखशून्यत्वबोधनेन विरोधाच्च संकोचाभावाच्चाक्तश्रुतेः—यदात्मको यत्स्वरूपेणात्यन्ताभिन्नस्वरूपो भगवानीश्वरस्तदात्मिका तत्स्वरूपेणात्यन्ताभिन्नाऽव्यक्तिरभिव्यक्ति, अपरोक्षचिद्रूप आत्मा ज्ञानात्मको ज्ञानस्वरूपात्यन्ताभिन्न ऐश्वर्यात्मको नित्यानिरतिशयानन्दस्वरूपात्यन्ताभिन्नः। तथा च चिदात्माऽप्युक्तस्वरूपाभिन्न इति जीवब्रह्मस्वरूपयोरभेदप्रतिपादनायाऽऽत्मनो ज्ञानानन्दरूपत्वप्रतिपादनपरत्वेन विग्रहाप्रतिपादकत्वात्। 'आप्रणखात्सर्व एवाऽऽनन्दः' इति श्रुतेर्लीलाकल्पितः प्रणखपर्यन्तः सर्वोऽपि देहो दुःखानवच्छेदक इत्यर्थपरत्वात्। अन्यथा प्रणखादिमयदेहस्याऽऽनन्दरूपत्वानुपपत्तेः। नापि 'विचित्रशक्तिः पुरुषः पुराणः' इति वचनं विग्रहनित्यत्वे प्रमाणम्। स्वरूपात्मकविचित्रशक्तेः कार्यस्य सभावितत्वे नियामकत्वेऽपीश्वरस्वरूपाभिन्ननित्यदेहाप्रयोजकत्वात्। तस्य नित्यत्वेन शक्तिनियम्यत्वाभावात्। ननु नित्यत्वादिकं ब्रह्मस्वरूपमेवेति त्वयाऽपि वाच्यम्। अन्यथा ब्रह्मणो नित्यान्यस्वभावापत्तेः। तथा च सति विग्रहस्यापि ब्रह्मस्वरूपतासंभवेन तस्य नित्यसत्यत्वादिसंभवो न विरुध्यत इति चेत्। तर्हि जितं विग्रहस्याऽऽरोपितत्ववादिभिः। सोपादानकद्रव्यस्य चेष्टावदन्त्यावयवित्वेन शरीरपदशक्यतायास्तन्त्रान्तरसिद्धत्वात्तस्य च ब्रह्मण्यसंभवात्तत्र शरीरमिति परिभाषामात्रत्वात्। भगवत्स्वरूपे नित्यानन्दाद्वितीयात्मके शरीरमिति नाम[मा]त्र त्वया कृतं तदिष्टमेवास्माकमिति। 'मोदो दक्षिणः पक्षः' इत्यादेरानन्दमयकोशपरतया ब्रह्मपरत्वाभावस्याऽऽनन्दमयाधिकरण एव प्रतिपादनाच्च ब्रह्मविग्रहपरत्वम्।

किंच भगवद्विग्रहो विनाशी महत्त्वे सति रूपवत्त्वाद्विग्रहत्वाद्वास्मदादिवदित्यनेनानुमानेनाप्यनित्यत्वम्। रूपमात्रं परमाण्वादौ परमते व्यभिचारीति महत्त्वे सतीति। तावन्मात्रमात्मादौ व्यभिचारीति रूपवत्त्वादीति। न च नित्यत्वश्रुतिबाधः। श्रुतेरन्यथासिद्धेरुक्तत्वात्। न चाप्रयोजकत्वम्। कृष्णसमाधिभग-

वद्विग्रहे नवनीरदश्याम इत्यादिना नीलरूपश्रवणात् । नीलत्व पीतत्वरक्तत्वतद्व्याप्यजात्यवच्छिन्नं प्रति पृथिवीत्वेन कारणत्वान्नीलादिरूपसामान्यस्य पृथिवीजन्यत्वेन ब्रह्मविग्रहे नित्यरूपतावन्न संभवति । जन्यं रूपं तु विग्रहे कार्यत्वजन्यत्वसंपादकमेव । तथा हि—तद्विग्रहकारणरूपात्पाकाद्वा वक्तव्यम् । आद्ये विग्रहस्य कारणजन्यत्वसिद्धिः । अन्त्ये पाकात्पूर्वं रूपान्तरं वक्तव्यम् । तथा च कृष्णादिविग्रहस्य नानारूपतापत्तिः । न हि स कदाचिन्नवनीरदश्यामः कदाचिदिन्द्रनीलश्याम इति संभवति । तथा सति तद्ध्यानस्याव्यवस्थितत्वापत्तेः । न च नवनीरदश्यामत्वमेवोपास्यम् । 'नवनीरदश्यामम्' इति गौतमीयतन्त्रादौ तथैवोक्तत्वात्, तथा च श्रीकृष्णादिविग्रह एकैकजातीयमेव रूपमुपास्यमिति प्रतिविग्रहं पाकजनानारूपस्वीकारेऽपि नोपासनाव्यवस्थेति वाच्यम् । एवमपि पूर्वरूपनाशकरूपान्तरोत्पादकतेजःसंयोगविशेषरूपः पाको ब्रह्मणि जायत इत्यत्र नियामकाभावात्सर्गादौ जायत इति वक्तव्यम् । तथा च रूपरसगन्धादीनां चतुर्णामुत्पत्तिनाशकल्पने गौरवादनादिरूपादिविशिष्टं पूर्वदेहं विनाश्य तादृशमुत्तरं देहं पाकेन जनयतीत्येवोच्यताम् । अत एव 'ब्रह्मण्यो देवकीपुत्र' 'चिन्मयेऽस्मिन्महाविष्णौ जाते दशरथे हरौ' इत्यादिश्रुतयः 'तदाऽऽत्मानं सृजाम्यहम्' 'जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः' 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन' ( गी० ४ । ५ ) इति स्मृतयश्च न बाध्यन्ते । एवं रूपसमानाधिकरणमहत्त्वस्यापि जन्यत्वनियमाज्जन्यमहत्त्वे च स्वाश्रयावयवमहत्त्वं बहुत्वप्रचयो वा हेतुः । घटादौ कपालमहत्त्वात्त्र्यसरेणौ द्व्यणुकबहुत्वात्तूलपिण्डादावयवप्रचयान्महत्त्वोत्पत्तेः । तथा च विग्रहे महत्त्वोत्पत्तिं प्रति तावदुक्तकारणान्यतमहेतुत्वावश्यकतया सावयवत्वेन विग्रहे जन्यत्वम् । तेन च विनाशित्वमावश्यकम् । न चोक्तानुमाने सावयवत्वमुपाधिरिति वाच्यम् । तस्य साधनव्यापकत्वात् । पक्षीभूतविग्रहे प्राकृतत्वस्य वादिविप्रतिपत्त्या संदिग्धत्वेऽपि संदिग्धोपाधिना प्रकृतानुमानदुष्टत्वासंभवः । अनुकूलतर्काणां प्रतिपादितत्वात् ।

अनुकूलतर्कविरह एव तस्य दूषकत्वात् । एवं सावयवत्वादपि विग्रहो न नित्यः । न च ।

> द्रोणं बृहस्पतेर्भागं द्रौणिं रुद्रांशसंभवम् ।
> दुर्वासाः शंकरस्यांशः ॥

इत्यादिना जीवानामप्यंशोक्तेः ।

> यस्यायुतायुतांशांशे विश्वशक्तिरवस्थिता ।
> परब्रह्मस्वरूपस्य प्रणमामि तमव्ययम् ।
> विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥

इत्यादिना परमेश्वरस्याप्यंशोक्तेर्जीवेश्वरयोर्व्यभिचार इति वाच्यम् । जीवेश्वरयोरंशस्यौपाधिकतया स्वाभाविकत्वाभावात् । अंशव्यवहारस्य भाक्तत्वात् । प्रदीपवदावेशः । 'तथा च दर्शयात' ( ब्र० सू० २ । ३ । २७ ) इति सूत्रे कायव्यूहस्थल उपासनामाहात्म्येन मनश्चक्षुराद्यन्तरसृष्टेरुक्तत्वात् । द्रोणादिशरीरावच्छिन्न यद्बृहस्पत्यादिशरीरावाच्छिन्नमनोजन्यचक्षुरादिक तदुपाधिक आत्मैव बृहस्पत्यंशः । मायापरिणाममनआद्युपाधिकहिरण्यगर्भादिरूपेणेश्वरस्य बहुभवनस्य श्रुत्युक्तत्वाद्धिरण्यगर्भादयस्तदंशा इति व्यवहारः । एतेन भगवल्लोकादेरपि नित्यत्वमपास्तम् । न च—

> अतो हि वैष्णवा लोका नित्यास्ते चेतनात्मकाः ।
> यत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥

इति प्रमाणविरोध शङ्क्यः । 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' (ऐ० १।१) 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यः' इत्यादिश्रुतिभिः । प्रलये सकलकार्यसंस्कारोपहितमायावच्छिन्नचिन्मात्रसत्तामुक्त्वा 'स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत' ( ऐ० १ । १ ) इत्यादिना सर्वलोकघटितप्रपञ्चसृष्टेरुक्तत्वात् । 'यतो वा इमानि भूतानि' ( तै० २ । १ । १ ) इत्यादिना 'सुषुप्तिकाले सकले विलीने' ( कै० १३ ) 'एत( अ )स्मादात्मनः [ सर्वे प्राणाः ] सर्वे

लोकाः सर्वे वेदाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति ' ( बृ० २ । १ । २० ) इत्यादिश्रुतेर्भूतत्वावच्छेदेन ब्रह्मजयनाश्यत्वकल्पने लाघवाद् भौतिकवैकुण्ठलोके मानाभावात् । अनादित्वेन श्रुतिसिद्धमायादिभिन्नजडत्वावच्छेदेन लाघवाद्ब्रह्मापादानकत्वेन सोपादानकमात्रस्याविद्याकल्पितत्वनाविद्यानाशनाश्यत्वेन च जडमात्रस्य विनाशित्वसिद्धौ पूर्वोक्तवाक्यस्थनित्यादिपदस्यावान्तरप्रलयस्थत्वपरत्वात् ।

यदपि चन्द्रिकायाम्—योषिदादेरग्नित्वाद्यभावेऽपि तथाध्यासवन्निर्विशेषब्रह्मण एव हिरण्यश्मश्रुत्वादिना ध्यानसंभवेन सविशेषब्रह्मण' साधकानुग्रहार्थमैच्छिकरूपपरिग्रहोक्तिरयुक्तेत्युक्तम् । तदसत् । सगुणब्रह्मणो हिरण्यश्मश्रुत्वादिना ध्यानस्य यथार्थस्य विधेयत्वसंभवे निर्विशेषतथाध्यानात्मकवृत्तेरयथार्थाया विधेयत्वासंभवात् । उपपादितं चैतत्प्रागिति दिक् ।

यच्चोक्तं चन्द्रिकायाम्—अस्याधिकरणस्य ' अन्तर उपपत्ते. '( ब्र० सू० १ । २ । १३ ) इति द्वितीयपादीयाधिकरणेन पौनरुक्त्यमिति । तदप्यसत् । 'अन्तर उपपत्ते ' इत्यधिकरणनिर्णये ' य एषोऽक्षिणि पुरुषो दृश्यते ' ( छा० ४ । १५ । १ ) इति विषयवाक्ये ' अक्षिणि पुरुषो दृश्यते ' इति यथाश्रुतं प्रतिबिम्ब एव स्वरसात्मानि प्रतिबिम्बपूर्वपक्षः । अन्तरादित्यवाक्ये तु न प्रतिबिम्बपूर्वपक्षः संभवति । आदित्ये प्रतिबिम्बदर्शनस्याप्रसिद्धत्वात् । तथा च प्रथमोपस्थितप्रतिबिम्बानुसारेणाऽऽत्मादिश्रुतिब्रह्मलिङ्गानि तत्रैव कथंचिद्व्याख्येयानि । नन्वेवमप्यन्तरादित्याधिन्नान्तर्गताक्षिवाक्येऽपि 'य एषोऽक्षिणि पुरुषो दृश्यते सैव ऋक् ' इत्यादावपि प्रतिबिम्बसंभवात्परमेश्वरानिर्णयो न स्यादिति चेत् । माऽस्तु । एतदधिकरणे तस्यापि विषयत्वोपपत्ते. । ननु प्रथमश्रुताया अपि गायत्रीश्रुतेरुत्तरभाविभिरपि सर्वभूतपादत्वादिभिर्ब्रह्मपरता स्थिता । भूयोनुग्रहस्य न्याय्यत्वात् । एवं प्रकृतेऽपि किं न स्यात् । भवे-

देवम् ' य एषोऽक्षिणि पुरुषो दृश्यते सैव ऋक् ' इत्यत्र । तत्रोत्तरत्र ऋगाद्यात्मकत्वादिब्रह्मलिङ्गसमाम्नानात् । प्रकृते न तथा संभवति । अत्राऽऽत्मादिश्रुतयः ' एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ' इतिपदशिरस्काः । तथा च ' नामब्रह्मेत्युपासीत ' इत्यादाविव न स्वार्थे सत्तापेक्षिण्यः । तादृशदृष्टिविधानार्थत्वात् । यद्यपि चोत्तरत्र ' एष उ एव वामनी ' ' एष उ एव भामनी ' इत्यादावितिशब्दो न श्रूयते तथाऽपि पूर्वत्र श्रुतस्य तत्राप्यनुषङ्गो भविष्यति । दृष्टिविधानप्रायपाठात्तेषामपि तादृशविधानार्थत्वेनोपक्षेपोपपत्तेरित्यधिकशङ्कानिराकरणार्थत्वेनाऽस्पष्टब्रह्मलिङ्गवाक्यसमन्वयार्थत्वेन च ' अन्तर उपपत्तेः ' इत्यस्य प्रवृत्तत्वात् । अस्य च स्पष्टब्रह्मलिङ्गवाक्यसमन्वयार्थतायाः पूर्वमेवोपपादितत्वाच्च न पौनरुक्त्यम् । अन्तर उपपत्तेः ' इत्यत्र ' अक्षिणि पुरुषो दृश्यते ' इत्यस्य प्रतिबिम्ब एव स्वारस्ये कथं तत्र जीवदेवतादिपूर्वपक्षो भाष्ये दर्शित इति चेत् । तादृशपूर्वपक्षस्य वैभवमात्रप्रदर्शनार्थताया भाष्यटीकायां दर्शितत्वात् ।

आनन्दतीर्थीयास्तु—'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने ' ( तै०२ ७ ) इत्यानन्दमयस्यादृश्यत्वमुक्तम् । तच्च ' अन्तः प्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तं सह वै सन्तं न विजानन्ति देवाः, इन्द्रो राजा जगतो य ईशे सप्त युञ्जन्ति रथमेकचक्रम्, इत्यादावन्तःस्थस्य श्रूयते । च चान्तःस्थ इन्द्रादिश्रुतिभिः सप्ताश्वत्वादिलिङ्गैश्च विष्णोरन्य एवेत्यानन्दमयोऽपि न विष्णुरित्यानन्दमयाक्षेपेणास्याधिकरणस्य संगतिः । अत्रान्तःस्थः किमिन्द्रादिः किंवा विष्णुरिति चिन्ता । तदर्थं किमिन्द्रादिश्रुत्यनुसारेण समुद्रशायित्वादिलिङ्गमन्यथा नेयमुत विपरीतम् । तदर्थं किं श्रुतिर्निरवकाशा लिङ्गं तु सावकाशमुत विपरीतम् । तथा लिङ्गस्य निरवकाशत्वेऽपि किं श्रुतित्वप्रयुक्तप्राबल्यं बलवत्किंवा निरवकाशत्वप्रयुक्तं प्राबल्यं बलवदिति चिन्तायाम्—'इन्द्र एवान्तःस्थः । इन्द्रो राजा ब्रह्मेन्द्रमग्निम् ' इत्यादीन्द्रश्रुत्यभ्यासेन ' अपां नेतारम् ' इत्यादिवरुणलि

ङ्गानां बृहस्पत्यादिश्रुतीनां बाधादित्येकः पूर्वपक्षः । सूर्य एवान्तःस्थः । सप्त युञ्जन्ति रथचक्रमेकम्, इति निरवकाशलि ङ्गसहितया 'सवितारं बृहस्पतिम्' इत्यादिसावितृश्रु येन्द्रादिश्रुतीनां स्वोचितैश्वर्यादिमति सूर्ये सम्भवादित्यपरः । वरुण एवान्तःस्थः । वरुणलिङ्गस्यान्ते श्रवणात्पूर्वदौर्बल्यन्यायेन तेनेतरबाधादित्यपर इति । सिद्धान्तस्तु—

लिङ्गादिभ्यो बलवती श्रुतिर्यद्यपि च स्वतः ।
अवकाशोज्झितैर्लिङ्गैः सावकाशा तु बाध्यते ॥

यद्यपि 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादौ श्रुत्या लिङ्गबाधेन श्रुतेरुत्सर्गतो बलवत्त्वं तथाऽपि 'यथा श्येनेनाभिचरन्यजेत' इत्यादौ श्येनशब्दोऽन्यत्र रूढोऽपि 'यथा वै श्येनो निपत्याऽऽदत्ते' इति वाक्यशेषोक्तस्य श्येनसादृश्यस्य श्येनेऽनुपपत्त्या यागपरस्तथा समुद्रान्तःस्थत्वादीनामन्यत्रासम्भवादिन्द्रादिशब्दा विष्णुपरा एव ।

लोके श्रुतौ स्मृतौ चैव विष्णुलिङ्गतया स्थितम् ।
समुद्रान्तरवस्थानपूर्वकं कथमन्यगम् ॥

एवं च, '× आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन निरवकाशलिङ्गेन वैदिकतया सर्वथा बाधायोगेन

---

× आनर्थक्यप्रतिहतेति । तथा हि—विनियोगविधेः सहकारिभूतानि यानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट् प्रमाणानि तत्र स्थानरूपं यत्प्रमाणं तदेव क्रमशब्देन व्यवह्रियते । तत्स्वरूपं च समानदेशत्वम् । तच्च द्विविधम्—पाठकृतमर्थकृतं च । तत्र पाठकृतमपि द्विविधम्—यथासंख्यं सन्निधिश्चेति । अर्थकृतं नाम—अनुष्ठानकृतमित्यर्थः । तदुदाहरणं तु पशुधर्माणामग्नीषोमीयाङ्गत्वमिति । तथा हि—औपवसथ्येऽह्नि, अग्नीषोमीयपशुरनुष्ठीयते । तस्मिन्नेव दिने ते धर्मा पठ्यन्ते । अतस्तेषां क्रमस्थाकाङ्क्षाया मनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन सम्बध्यते । अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषाम् । यद्यपि स्थानापेक्षया प्रकरणस्य प्राबल्येन पशुधर्माणां च ज्योतिष्टोमप्रकरणपाठाज्ज्योतिष्टोमार्थत्वमेवोचितं तथाऽपि ज्योतिष्टोमस्य सोमयागत्वेन पशुधर्मग्रहणेऽयोग्यत्वेन प्रकरणस्याऽऽनर्थक्यप्रतिहतत्वात्स्थाना-

सावकाशश्रुतिबाध इति रीत्यैतदधिकरणरचनामाहुः । तत्रो च्यते—आनन्दमयाक्षेपेण संगतिस्तावदयुक्ता । उक्तविषय-वाक्येऽदृश्यत्वमिव 'अन्तः प्रविष्टं कर्तारम्' इति कर्तृत्वम् । 'सर्वे वेदा यत्रैकं भवन्ति' इति शास्त्रयोनित्वम् । 'अन्तः प्रविष्टः शास्ता जनानाम्' इत्यन्तर्यामित्वं प्रशास्तृत्वं चेत्या-द्यन्यनिष्ठमवगम्यत इत्यतो जन्माधिकरणशास्त्रयोनित्वाधिकर-णान्तर्याम्यधिकरणाद्यनेकाक्षेपकस्य कथमेकमात्राक्षेपकत्वोक्तिः। तदनाक्षेपे च तैरेव धर्मैः परमात्मासाधारणतयोक्तैर्वक्ष्यमाणैश्च परमात्मपरत्वनिश्चयात्पूर्वपक्षानुत्थितिः स्यात् ।

यद्यानन्दमयशब्दे क्वचिदन्यत्रानिरूढे युक्ता ब्रह्मपरता । इन्द्रशब्दस्त्वन्यत्रार्थविशेषे निरूढो न शक्यो ब्रह्मपरो विज्ञातु-मिति प्रत्यवस्थानात्संगतिरिति चन्द्रिकायामुक्तम् । तदपि न सत् । तथा सत्यानन्दमयशब्दस्यान्यत्र प्रसिद्धनामसमन्वयपर प्रथमपादासंगतिप्रसङ्गात् । अन्नप्राणादिशब्दानामप्यानन्दमया-धिकरणे ब्रह्मपरताप्रतिपादनेन तेषां चान्यत्र निरूढतया तस्या न्यत्र निरूढमात्रविषयत्वौचित्याच्च ।

यत्तु—अन्यत्रासंभावितत्वात् । 'अद्यतेऽत्ति च भूतानि तस्मा दन्नं तदुच्यते' इति योगबलात्तत्र तन्निर्णयेऽपीहेन्द्रादिशब्दे श्रुतौ योगानुक्तेः पूर्वाधिकरणवैषम्येण पूर्वपक्षोत्थानात्संगति-रिति चन्द्रिकायामुक्तम् । तदपि प्राणशब्देऽन्यत्र निरूढे श्रुतौ योगानुक्तेर्व्यभिचारादयुक्तम् । आनन्दमयशब्दस्य नामलिङ्गो-भयात्मकतयाऽन्यत्र संगतत्वेऽपि प्रथमातिक्रमे कारणाभावात्प्र थमतो निरूपणमित्यानन्दमयशब्दस्य नामलिङ्गोभयात्मकत्व-माश्रित्य पादद्वयसंगतिपरग्रन्थविरोधाच्च ।

यदपि यदि ब्रह्मशब्दादानन्दमयो ब्रह्म तर्हीन्द्रादिशब्दा

---

पेक्षया दौर्बल्यात्स्थानेनैव पशुधर्माणामग्नीषोमीयार्थत्वं सिध्यति । एवं च तद्वदेव प्रकृतेऽपि वस्तुतो लिङ्गापेक्षया श्रुते प्राबल्येऽपि लिङ्गस्य निरवकाशत्वेन श्रुत्यपेक्षयाऽपि प्राबल्यं भवतीति बोध्यम् ।

दन्तःस्थ इन्द्रादि', न तु ब्रह्म, तच्छब्दाभावादिति पूर्वसिद्धान्तन्यायेन पूर्वपक्षिते पूर्वाधिकरणोक्तं श्रुत्या निर्णयमपोह्य लिङ्गेन निर्णय उच्यत इति संगतिरिति चन्द्रिकायामुक्तम् । तदपि न सत् । तथा सत्यानन्दमयवाक्ये ब्रह्मशब्दाभ्यासेनेव प्रकृत इन्द्रसवितृशब्दाभ्यासस्त्वेनेन्द्रसवितृपूर्वपक्षसंभवेऽपि वरुणश्रुत्याद्यभ्यासाभावेन वरुणपूर्वपक्षानुत्थितिप्रसङ्गात् । अन्तःस्थे विष्णुनिष्ठयज्ञशब्दाभ्यासेन ब्रह्मपरत्वस्यापि संभवेनेन्द्र एवेति पूर्वपक्षानिर्णायकत्वाच्च ।

यदपि मान्त्रवर्णिकसूत्रे 'यो वेद निहितं गुहायाम्' (तै० २।१।१) इत्यानन्दमयस्यान्तःस्थत्वमुक्तं तदिहाऽऽक्षिप्य समाधीयत इति संगतिरिति चन्द्रिकायामुक्तम् । तदपि न सत् । गुहानिहितत्वान्तःस्थत्वयोर्भिन्नत्वेनान्तःस्थत्वमात्रे गुहानिहितत्वाप्रत्यभिज्ञानात् । अन्तःस्थवाक्यशेषे 'देवानां बन्धु निहितं गुहासु' इति श्रवणं तत्प्रत्यभिज्ञापकमिति चन्द्रिकोक्तं तु न सत् । तत्रानन्तशब्दसमानार्थकेन 'यज्ञो वै विष्णुः' इति श्रुतिसिद्धेन यज्ञशब्देन 'अमृतस्य प्राणं यज्ञमेतम्' इति पूर्वाधिकरणनिर्णीतब्रह्मपरताकप्राणशब्दप्रमाभिव्यात्दृतेनाविरुद्धत्वात् । एकवचनान्तबहुवचनान्तयोः प्रत्यभिज्ञानुपपत्तेश्च । साक्षाद्गुहानिहितत्वाक्षेपेणैवोत्थानसंभवे भाष्योक्तादृश्यत्वद्वारकतदाक्षेपप्रकारासांगत्यप्रसङ्गाच्च । न च साक्षात्तदभिधानेऽदृश्यत्वेन विष्णुपरत्वशङ्का स्यादिति तद्वारणाय तदाक्षेप इति कल्पनमपि युक्तम् । तथा सति प्रागुक्तकर्तृत्वादिनाऽपि विष्णुपरत्वशङ्का निवारणाय तद्द्वारकत्वस्यापि वक्तव्यत्वे तदनुक्तौ बीजाभावात् । वस्तुतस्तु—अन्तःस्थे 'सहैव सन्तं न विजानन्ति देवाः' इति देवादृश्यत्वोक्तेस्तस्य सर्वादृश्यत्वानियततया 'देवान्वविन्दद्गुहाहितम्' इति तस्मिन्देवदृश्यत्वोक्त्या विरोधेन च तन्मुखेन नोक्ताक्षेपसंभव इति नामसमन्वयपरे चास्मिन्पादेऽन्तःस्थत्वसमन्वयोऽपि न सम्यक् ।

यत्तु तत्समन्वयस्येन्द्राद्यनेकनामसमन्वयार्थत्वात्फलतो नामसमन्वयकत्वात्पादसंगतिरिति । तदपि न सत् । तथा सति

'सर्वत्र प्रसिद्धोपदेशात् ( ब्र० सू० १ । २ । १ ) इत्यत्र सर्वगतत्वसमन्वयस्याप्यादित्यादिनामसमन्वयफलकतया प्रथमपादीयत्वापत्ते । इन्द्रादिनामसमन्वयस्यापि द्युत्वलिङ्गसमर्थनार्थतया फलतो नामसमन्वयानुपपत्तश्चेति । 'इन्द्रो राजा ब्रह्मेन्द्रमग्निम्' इत्यादीन्द्रश्रुत्यभ्यासेनेन्द्र एवान्तःस्थ इति निर्धारणया पूर्वपक्षोऽप्यनुपपन्न । 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठा दिव आत्मान सवितार बृहस्पतिं चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्दत्' इति, तथा 'इन्द्र राजान सवितारमत वायोरात्मानं कवयो निचिक्युः' इति च, तथा 'अग्निं जगतः प्रतिष्ठामग्निस्ताꣳ अग्ने प्रमुमोक्तु देवाः' इत्यादिषु मन्त्रेषु सवित्रादिपदानामप्यभ्यासदर्शनात् । 'सप्त युञ्जन्ति रथमेकचक्रम्' इति निरवकाशसवितृलिङ्गसाहित्येन सवितृश्रुतेरिन्द्रश्रुतितोऽपि प्राबल्याद्यान्तःस्थः सूर्य एवेति द्वितीयपूर्वपक्षस्यापि दर्शितत्वात् । अस्तु तथेति चेत् । एवमपि 'अपां नेतारम्' इति वरुणलिङ्गमात्रात्कथं वरुणपूर्वपक्षोत्थितिः ।

वरुणलिङ्गस्यान्ते श्रवणात्पूर्वदौर्बल्यन्यायेन तेनेतरबाधात्तदुत्थितिरिति चन्द्रिकोक्तं तु न सत् । सुवर्णघर्मानुवाक्ये दशहोतृहृदयाख्यमन्त्रेषु 'इन्द्रस्याऽऽत्मान दशधा चरन्तम् । अन्तःसमुद्रे मनसा चरन्तम् । ब्रह्माऽन्वविन्दद्दशहोतारमर्णे । अन्तःप्रविष्टः शास्ता जनानाम् । एकः स बहुधा विचारः । शतꣳ शुक्राणि यत्रैकं भवन्ति । सर्वे वेदा यत्रैकं भवन्ति । सर्वे होतारो यत्रैकं भवन्ति । स मानसीन आत्मा जनानाम् । अन्तःप्रविष्टः शास्ता जनानाꣳ सर्वात्मा सर्वाः प्रजा यत्रैकं भवन्ति चतुर्होतारो यत्र सपदं गच्छन्ति देवैः । स मानसीन आत्मा जनानाम्' (चि० उ० अ० ११ ) इति बहूनां समुद्रशायित्वादिविष्णुलिङ्गानामुपलम्भात् । तथा चतुर्होतृहृदयाख्यमन्त्रेषु प्रथमायामृचि 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम्' ( चि० उ० अ० ११ ) इति जगत्प्रतिष्ठात्वादिरूपविष्णुलिङ्गोपलम्भात् । द्वितीयायामृचि तृतीयायां च ऋचि 'अन्तःप्रविष्टं कर्तारमेतम् । त्वष्टारꣳ रूपाणि विकुर्वन्त विपश्चिम् । अमृतस्य प्राण यज्ञमेतम् । चतुर्होतृणामा-

त्मानं कवयो निचिक्युः । अन्तःप्रविष्टं कर्तारमेतम् । = देवानां बन्धुं निहितं गुहासु । अमृतेन क्लृप्तं यज्ञमेतम् । चतुर्होतॄणामात्मानं कवयो निचिक्युः ( चि० उ० अ० ११ ) इति कर्तृत्वादिरूपाणां विष्णुलिङ्गानां यज्ञश्रुत्यभ्यासस्य चोपलम्भाद्विष्णुपरत्वस्यैव संभवेन तद्बाधेन 'अपां नेतारम्' इत्येकलिङ्गमात्रेण वरुण एवेति पूर्वपक्षे नियामकाभावात् । न च वरुणलिङ्गस्यान्ते श्रवणं गमकम् । षड्ढोतृहृदयमन्त्रेषु सप्तदश्यामृचि 'पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा मनीषिणः । समुद्रे अन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः' ( चि०उ०अ० ११ ) इति 'अपां नेतारम्' ( चि०उ०अ०११ ) इत्यस्योत्तरं 'अन्तः समुद्रे' इति विष्णुलिङ्गस्य श्रवणाद्विष्णुलिङ्गस्य ततोऽप्यन्त्यत्वात् । 'सहैव सन्तं न विजानन्ति देवाः' इत्यनेनोक्तस्य देवादृश्यत्वस्येन्द्रादिष्वसंभवाच्च । उक्तमन्त्रेषु 'भद्रं पश्यन्त उपसेदुरग्रे तपो दीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च जातम् । तदस्मै देवा अभिसंनमन्तु' ( चि० उ० अ० ११ ) इति द्वादश्यामृच्यादित्यसकाशात्क्षत्रादिजातमित्यभिधाय 'श्वेतं रश्मिं बोभुज्यमानम् । अपां नेतारं भुवनस्य गोपाम् । इन्द्रं निचिक्युः परमे व्योमन्' ( चि० उ० अ० ११ ) इति त्रयोदश्यामृच्यादित्यस्यैवापां नेतृत्वस्य वृष्ट्यादिकर्तृत्वरूपस्योक्तत्वाच्च तेन सावित्रश्रुतिबाधः संभवति । सर्वनियन्तरि विष्णावपां नेतृत्वस्य संभवाच्च ।

उक्तमन्त्रेष्वयमर्थः—दशहोतृहृदयं परमात्मतत्त्वमुच्यते—सुवर्णघर्ममित्यादिना । अहं मन्त्रद्रष्टा, इन्द्रस्य परमेश्वरस्याऽऽत्मानं निजस्वरूपं परिवेद परितः सर्वत्रावस्थितं जानामि । कीदृशमात्मानं, सुवर्णं सुवर्णसदृशं स्वत एव भा-

---

=देवानां बन्धुमिति— ग्रन्थकृद्भिः शुद्धिपत्रके 'बन्धुम्' इति बुद्धिपूर्वं दत्तम् । मद्रभाष्यपुस्तकेऽप्येवमेव । इदानींतनवैदिकानां पाठस्तु निरनुस्वारः प्रचलति तथैवाग्रे 'अपां नेतारं भुवनस्य गोपा' इति ग्रन्थकृद्भिरुपनिबद्धम् । वैदिकपाठस्तु 'गोपाम्' इति सानुस्वारो वर्तते ।

समानं धर्ममन्यवस्तुनो दीपकं वनं सर्वं तु.स्वराहित्येन कम-
नीयम् । दशधा ' चित्तिः स्रुक् ' ( चि० उ० १ ) इत्यादिदश
होतृमन्त्रप्रतिपादितैराकारैश्चरन्त लोके व्यवहरन्तम् । अन्तः
समुद्रे ब्रह्माण्डसृष्टेः पुरा सर्वत्र व्याप्यावस्थितो योऽयं जल-
संघः सोऽयं समुद्रस्तस्य मध्ये मनसा चरन्तम् ' इदं सर्वं जग
त्सृजेय ' इत्येव रूपेण मनोवृत्तिविशेषरूपेण सकल्पेन सह
प्रवर्तमानम् । ब्रह्मा चतुर्मुख प्रजापतिः, अर्णेऽर्णवे यथोक्त-
समुद्रे दशहोतार दशहोतृमन्त्रप्रतिपाद्यरूपेणाऽऽविर्भूतं परमात्मा-
नमन्वविन्दत्सृष्टिसाधनत्वेनाविष्य लब्धवान् । सोऽयमेवंविध-
परमात्मा जनानां सर्वेषां शास्ताऽन्तर्यामिरूपेण नियामकः सन्हृ
दये प्रविश्यावस्थितः । स चान्तर्यामी स्वकीयेनेश्वररूपेणैक एव
सन्पुनर्जीवरूपेण बहुधा भूत्वा विचारी विविधाचरणवान्भवति ।
यत शुक्राणि शतसङ्ख्योपलक्षितान्यनन्तानि सूर्यचन्द्र(न्द्रादि)
नक्षत्राणि ज्योतींषि यत्र यस्मिन्परमात्मन्येकी भवन्त्येकत्वं
प्राप्नुवन्ति । सर्वे ऋग्वेदप्रभृतयो वेदाश्चत्वारो नानाविधशाखो
पेता यत्रैकी भवन्ति । होतारश्चतुर्होमकर्तार सर्वे यजमाना
दशहोत्रादिमन्त्रा वा यस्मिन्नेकत्वं प्राप्नुवन्ति । यथा बुद्
बुदा जलमध्ये समुत्पद्य किं( कं )चित्कालमवस्थाय विलीय-
माना जल एवैक्य प्राप्नुवन्ति तथा सर्वे भावाः परब्रह्मण
एवोत्पद्य तत्रैव स्थित्वा विलीयमानास्तेनैकतां गच्छन्ति । स
तादृश ईश्वरः सर्वेषां जनानामात्मा स्वरूपभूतः सन्मानसीनो
योगयुक्तेन मनसोपलभ्यो भवति । सर्वे जीवा योगेन निरुद्ध-
चित्ताः सन्तो जगदीश्वरं स्वस्वरूपत्वेन साक्षात्कुर्वन्ति, न तु
भेदेन।ऽपूर्वोक्तः सर्वोऽप्यर्थ उपपन्न इत्युपसंह्रियते—सर्वाः
प्रजा देवमनुष्यादयो यत्र यस्मिन्योगिप्रत्यक्षगम्ये चैतन्यैकरसे
परमात्मन्येकी भवन्ति चतुर्होतृमन्त्राश्च सर्वेऽपि स्वप्रतिपाद्यैर्देवैः
सह यस्मिन्ब्रह्मणि सपदं सम्यगेकीभावं प्राप्नुवन्ति । स तादृ-
शो मानसीनो मानसप्रत्यक्षगम्यो जनानामात्मा । ऋचां भेदा
दपुनरुक्तिः । ब्रह्मा चतुर्मुखः, इन्द्रं परमैश्वर्ययुक्तं परमात्मान
तपसाऽन्वविन्ददन्विष्य लब्धवान् । कीदृशमिन्द्र, जगतः प्रतिष्ठा-
मग्निं सर्वस्य जगत आधाररूपो योऽयं चतुर्होत्रीयचित्तिरूपोऽ

प्रिस्तरस्वरूपम् । 'दिव आत्मानं सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तम् । वाचो वीर्यं तपसाऽन्वविन्दत् ' इति मन्त्रशेषः । दिवो द्युलोकस्य प्रकाशकत्वेनाऽऽत्मवत्स्थितो यः सविता तद्रूपं तथा बृहस्पतिर्यो देवगुरुस्तद्रूपेणावस्थितं सर्वेषु प्रदेशेषु च स्थिरं चतुर्होतारम् ' पृथिवी होता ' इत्यादिमन्त्रस्वरूपं वाचो वीर्यं सर्वस्या वेदवाचः सारभूतं कवयो विद्वांसो वेदशास्त्रपारगताश्चतुर्होतॄणा चतुर्होतृशब्देनाभिधीयमानानां सर्वेषां होतृमन्त्राणामात्मानं स्वरूपभूतं परमेश्वरं निचिक्युर्निश्चितवन्त । कीदृशमात्मानम्, अन्तःप्रविष्टं जीवरूपेण शरीरेषु प्रविश्यावस्थितं कर्तारमेतं लौकिकवैदिकसर्वक्रियानिष्पादकं गर्भेषु देवतिर्यङ्मनुष्यादिरूपाणि विविधानि निष्पादयन्तं त्वष्टृस्वरूपं विपश्चिं तत्तद्रूपनिर्माणप्रकाराभिज्ञममृतस्य प्राणं मरणरहितस्य परमात्मनो व्यवहारहेतुभूतप्राणोपाधिस्वरूपं यज्ञमेतं सर्वैरनुष्ठीयमानत्वेन दृश्यमानं दर्शपूर्णमासादियज्ञस्वरूपम् । चतुर्होतृमन्त्रस्य यज्ञसृष्टिसाधनत्वात् । तच्च ब्राह्मणे समाम्नातम्— ' स एतं चतुर्होतारमपश्यत्तं मनसाऽनुद्रुत्याऽऽहवनीयेऽजुहोत्, ततो वै स दर्शपूर्णमासावसृजत ' इति । योऽयं परमात्मा सोऽयं देवानां बन्धुवत्प्रियस्तादृशं स्वेषु पक्षपातित्वेन विजयहेतुम् । तदुक्तम् ' ब्रह्म देवेभ्यो विजिग्ये ' इति तलवकारैः । गुहासु बुद्धिषु निहितं साक्षित्वेन स्थितममृतेन स्वर्गफलाभिप्रायेण क्लृप्तं संपादितमेतं यज्ञं यज्ञ इत्येवंनामानं सुवर्विदः स्वर्गमार्गाभिज्ञा ऋषयो भद्रं कल्याणं सप्तहोतृरूपमादित्यं पश्यन्तः प्राप्तत्वेन निश्चित्य तपोऽनशनादिरूपं दीक्षां नियमविशेषं चोपसेदुरनुष्ठितवन्तः । तत आदित्यसकाशात्क्षत्रं क्षतात्त्राणमनिष्टनिवारणं बलं शरीरशक्ति, ओजः कान्तिश्चेत्येतत्सर्वं जातं संपन्नम् । तच्च क्षत्रादि त्रयमस्मै यजमानायाभिसंनमन्तु, आभितः संपादयन्तु । परमे व्योमन्नुत्कृष्टे हृदयाकाशे, इन्द्रं परमैश्वर्ययुक्तं सप्तहोतृदेवमादित्यं निचिक्युर्ध्यातवन्तः । कीदृशं, श्वेतं प्रकाशरूपत्वेन शुक्लवर्णं रश्मिं रश्मियुक्तं बोभुज्यमानं सर्वैः प्राणिभिर्दृष्टिद्वारेण पुनः पुनर्भुज्यमानम् । एतदेव स्पष्टी क्रियते—

अपां नेतारम् । आदित्याज्जायते वृष्टिरिति स्मृतेः । सूर्यं भुवनस्य गोपां पालकम् ।

यदपि यथा सिद्धान्तप्रापकसद्भावेऽपि तदज्ञानेन पूर्वपक्षः । तथा सूर्यादिप्रापकसद्भावेऽपि तदाच्छादनेनेन्द्राग्न्येकैकावधारणेनानेके पूर्वपक्षा इति चन्द्रिकायामुक्तम् । तदपि न सत् । अनाच्छादनेनास्मद्रीत्या पूर्वपक्षसंभव उक्तवाक्यमालम्ब्य पूर्वपक्षसिद्धान्तरचनयोक्तसूत्रव्याख्याने स्वारस्याभावात् ।

यत्त्वस्मद्रीतौ 'आदित्यमन्तरो यमयति' इति श्रुत्यन्तरे 'भेदव्यपदेशात्' (ब्र० सू० १ । ३ । ५) इतिसूत्रव्याख्यानं न स्वरसम् । स्वप्रकरणस्थभेदव्यपदेशवतो वाक्यस्योदाहरणत्वसंभवे तद्रहितस्य तदयोगादिति दूषणं चन्द्रिकायामुक्तम् । तदसत् । इन्द्रस्याऽऽत्मानमित्यत्राऽऽत्मशब्दस्य स्वरूपपरतया त्वदुक्तविषयवाक्येऽपि सूत्रोक्तभेदासिद्धेः ।

यदपि 'सहैव सन्तं न विजानन्ति देवाः' इति साहित्यकर्तृकर्मभावादिना भेदोक्तिरिति चन्द्रिकायामुक्तम् । तदप्यसत् । षड्ढोतृहृदयमन्त्रेषु 'अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्याऽऽत्मानं शतधा चरन्तम्' (चि० उ० अ० ११) इति तृतीयायामृचि स्वकीये हृदये स्वेन जीवात्मना सहैवावस्थितमिन्द्रस्याऽऽत्मानं स्वरूपं न विजानन्तीत्यन्तःस्थ इन्द्रे देवजीवसाहित्यस्य देवकर्तृकदर्शनकर्मत्वाभावस्यैवोक्तेरन्तःस्थ इन्द्रेऽस्मदभिमतरीतौ 'य आदित्ये तिष्ठन्नादित्यमन्तरो यमयति । यमादित्यो न वेद' इत्यादित्यान्तःस्थ आदित्यभेदस्य स्पष्टभेदव्यपदेश इव तव रीताविन्द्रभेदव्यपदेशासिद्धेः । देवशब्दस्य त्रयस्त्रिंशद्देववाचितायाः प्रसिद्धत्वात् ।

जनानामात्मेत्यत्रान्तर्यामिण्यस्मिन्प्रकरण आत्मशब्दो स्वरूपपर एव । अस्मिन्प्रकरणे 'शास्ता जनानाम्' इति भेदव्यपदेशाभावेऽयुक्तः स्यादिति चन्द्रिकोक्तं तु न सत् । 'इन्द्रो राजा जगतो ईशे' इत्यस्मिन्प्रकरण इन्द्रस्य जगच्छासितृत्वोक्तेस्तस्यान्तःस्थ इन्द्रभेदव्यपदेशासाधकत्वात् । सर्वात्मेत्यत्र

सर्वेषां प्राणिनामात्मा पारमार्थिकस्वरूपभूत इत्यस्यैवार्थस्य 'अन्त प्रविष्ट शास्ता जनानाम् । स मानसीन आत्मा जनानाम्' इत्युपक्रमानुरोधेन वक्तव्यतया 'अत्रैव प्रकरणे सर्वात्मेति चात्यन्तमयुक्त स्यात् । ज्ञानादिरूपस्य ब्रह्मणस्तद्विरुद्धजडरूपतायाः केनाप्यनङ्गीकारात्' इति चन्द्रिकोक्त तु निरालम्बनमेव । 'नेतरोऽनुपपत्ते.' इत्यत्र 'तमेव विद्वानमृत इह भवति । नान्य पन्था अयनाय विद्यते' इति प्रकरणान्तरस्थवाक्येन पूर्वपक्षनिराकरणपरतया सूत्र योजयत ईक्षत्यधिकरणे पूर्वपक्षनिराकरणायानेकप्रकरणस्थानेकवाक्यान्युदाहृत्य सूत्राणि योजयतस्तवात्र स्वप्रकरणस्थभेदश्रुत्यभावरूपदूषणोद्भावनस्याद्वैतवादविद्वेषमात्रमूलत्वमेवेति स्पष्ट विदुषाम् । न चानन्यगतिकत्वमपि । अस्मद्रीत्या गत्यन्तरस्य तत्र तत्रोक्तत्वात् ।

यदपि चन्द्रिकायाम्—इन्द्राद्यनेकप्रापकश्रुतिलिङ्गादिसत्त्वेनेन्द्रादिषु निर्धारित एक एवान्तःस्थ इति पूर्वपक्षमाक्षिप्योक्तरीत्यात पक्ष समर्थ्यानिर्धारितो यः कश्चिदिति पूर्वपक्षो वाऽस्तु । न च संदेहादविशेषः । अन्त.स्थो विष्णुरन्यो वेति संदेहेऽन्य एवेत्येवकारेण प्रवृत्तपूर्वपक्षे संदेहाद्विशेषसद्भावादित्युक्तम् । तदप्यसत् । वरुणादिप्रापकलिङ्गादिवद्विष्णुलिङ्गानामपि सत्त्वेनान्य एवेत्यवधारणे गमकाभावात् । विष्णुलिङ्गाना भूयस्त्वेन यन्नश्रुत्यभ्यासेन च विष्णुरेवेति निर्धारणापत्तेश्च । न चेन्द्रादिश्रुत्यादिषु लोकप्रसिद्धया प्राबल्यम् । वैदिकशब्दार्थनिर्णये वेदिकप्रसिद्धेरेव प्राबल्यमित्यस्य पूर्वतन्त्रसिद्धत्वात् । विष्णौ 'नरेन्द्रः, सुरेन्द्रः' इत्यादिप्रयोगप्राचुर्येणेन्द्रादिशब्दानामपि तन्मात्रप्रसिद्धेश्च । पूर्वोत्तरविष्णुलिङ्गसदर्शनेन्द्रादिश्रुतेरेवान्यथासिद्धयौचित्याच्च । एतेन विष्णुलिङ्गाना बहुत्वेऽपि बहुत्वप्रयुक्तप्राबल्यस्य स्वभावप्रयुक्तप्राबल्याद्दुर्बलत्वमिति चन्द्रिकोक्त निरस्तम् । विष्णुलिङ्गसदृष्टश्रुतेस्तद्योगात् । निरवकाशेन विष्णुलिङ्गेनेन्द्रादिश्रुतेर्यौगिकत्वलाक्षणिकत्वादिना सावकाशाया बाधौचित्याच्च । उक्तं हि त्वयैवात्राधिकरणपूर्वपक्षे— अदितिशब्दस्य विष्णौ लक्षणादिना वृत्तिसभवेऽपि ना-

त्वं तस्मिन्संभवति । न हि गङ्गापदमिव गङ्गात्वमपि तीरे संभवतीति वदता । यच्च चन्द्रिकायाम्—न च विष्णुलिङ्गानां निरवकाशत्वम् । समुद्रस्थत्वादेर्वरुणेऽपि संभवादित्युक्तपूर्वपक्षोपपादनायोक्तम् । तदपि न सत् । वरुणस्य समुद्रपतित्वेऽपि समुद्रस्थत्वासिद्धेः । 'न विजानन्ति देवाः, जगतो य ईशे' इति देवादृश्यत्वजगदीशितृत्वादीनां वरुणादावसंभवेन तेषां निरवकाशत्वाच्च । 'इन्द्रो राजा जगतो य ईशे' इत्यत्रेशपदसामानाधिकरण्यादन्यत्र जगदीशितृत्वेन प्रसिद्धिमभिदधान इन्द्रशब्दो विष्णुपर एव युक्तः । इन्द्रादौ देवादृश्यत्वासंभवश्चेति नोक्तपूर्वपक्षसंभव ।

यदपि चन्द्रिकायाम्—लिङ्गस्य निरवकाशत्वेऽपि प्रबलया श्रुत्या बाधोऽस्तु । न हि निरवकाशः शशशावको मृगेन्द्रेण न बाध्येत । न च निरवकाशमिदं रूप्यमिति ज्ञानं नेदं रूप्यमिति ज्ञानेन न बाध्यत इत्युक्तपूर्वपक्षसमर्थनायोक्तम् । तदविचाररमणीयम् । श्रुतिलिङ्गादीनां प्रमाणानां प्राबल्यप्रयोजकं निरवकाशत्वं ह्यनन्यथासिद्धप्रामाण्यकत्वम् । श्रुत्या लिङ्गबाधे हि बाधितं लिङ्गमप्रमाणमेव भवति । विषयाभावात् । श्रुतिस्तु लिङ्गेन मुख्यार्थे बाधिताऽपि यौगिकलाक्षणिकाद्यर्थरूपविषयसद्भावात्प्रामाण्यमश्नुत इति न त्वेतादृशं निरवकाशत्वं शशशावकादेरस्ति । न वा विषयान्तराधीनमनन्यथासिद्धप्रामाण्यकत्वरूपं श्रुत्यादिनिष्ठं सावकाशत्वं वा मृगेन्द्रस्यास्ति । तयोरप्रमाणत्वात् । येन शशशावकादेर्नाश्यत्वरूपंमृगेन्द्रबाध्यत्वं न स्यात् । श्रुतिलिङ्गादिप्रमाणगतबाध्यबाधकभावादुक्तरूपस्य प्रमाणबहिर्भूतशशशावकमृगेन्द्रगतनाश्यनाशकभावरूपस्य बाध्यबाधकभावस्यान्यत्वात् । इदं रूप्यमिति ज्ञानस्य प्रवृत्तिप्रयोजकप्रतीतिविषयसद्भावात्प्रामाण्याभावाच्चोक्तरूपं निरवकाशत्वमेवासिद्धमिति तस्य नेदं रजतमिति ज्ञानेन बाधो युक्त एव । अप्रमत्वनिश्चयस्यैव नेदं रजतमिति प्रमात्मकज्ञानविषयाबाधितरजताभावप्रयुक्तस्य तत्र बाधत्वात् । तस्य चोक्तरूपप्रमाणगतनिरवकाशत्वप्रयुक्ताप्रमाणगतसावकाशत्वप्रयुक्तोक्तबाधादन्यत्वान्न किंचिदेतत् ।

यदपि—इन्द्रः सविता वरुण एते सर्वे वाऽन्तःस्थास्तद्विषये श्रुतिलिङ्गादीनां सत्त्वादिति तृतीयो वाऽस्तु पूर्वपक्षः । न चैव सति ' अन्तःप्रविष्टः शास्ता जनानाम् ' इति सर्वात्मनामन्तःप्रविष्टे शास्तृत्वादेः श्रवणेनानेकेश्वरापात इति श ङ्क्यम् । विष्णुलिङ्गानां निरवकाशत्वेनाबाध्यत्वादिन्द्रादिश्रुतीनां च श्रुतित्वादेव लिङ्गाबाध्यत्वादुभयानुग्रहार्थं विष्णुरेव तत्तदुपाधिवशादिन्द्रादिसंज्ञा लभत इति पूर्वपक्षिणेन्द्रादीनां विष्ण्वैक्याङ्गीकारेणानेकेश्वरापत्त्यभावात् । तथा च श्रुतिः—'स ब्रह्म(ह्मा) स शिवः सेन्द्रः सोऽक्षरः' इत्यादिका । स्मृतिरपि ' अहं भवो भवन्तश्च सर्वं नारायणात्मकम् ' इत्यादिका । न चैवं विष्णोरेवान्तःस्थत्वं स्यादिति वाच्यम् । कल्पितभेदस्योपहितस्य प्रसिद्धेन्द्रादेरेवान्तःस्थ इति पूर्वपक्षाद्विष्णुलिङ्गानां चानुपहितरूपाभिप्रायेणोपपत्तेरिति चन्द्रिकायामुक्तम् । तदपि पूर्वोत्तरविष्णुलिङ्गसंदष्टश्रुतेः स्वरूपप्राबल्यनिरासकोक्तरीत्या निरस्तम् । वस्तुतस्तु न तैत्तिरीयकवाक्यमुदाहरणार्हम् । संदेहाभावात्तद्बीजाभावाच्च । न हीन्द्रादिश्रुतिः संदेहबीजम् । ' इद्रस्याऽऽत्मानम् ' इत्युपक्रमेण 'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' इति 'मानसीन आत्मा जनानाम्' इति बहुवारं मध्ये चाभ्यासेन सर्वात्मताप्रतिपादन एव सुवर्णघर्मानुवाक्यतात्पर्यावधारणात् । तदुपष्टम्भकतयैव ' सर्वे वेदा यत्रैकं भवन्ति । चतुर्होतारो यत्रैकं भवन्ति । सर्वाः प्रजा यत्रैकं भवन्ति । चतुर्होतारो यत्र संपदं गच्छन्ति देवैः ' इत्याद्युच्यते । ' चतुर्होतॄणामात्मानं कवयो निचिक्युः । तदेवानुपरमुच्यते । अमृतं देवानामायुः प्रजानाम् ' इति तदेवोपपाद्यते । अत एव ' इन्द्रं राजानं सवितारमेतम् । ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिव आत्मानं सवितारं बृहस्पतिम् ' इति सर्वैः शब्दैरभिधानं सार्वात्म्यप्रयुक्तमिति निर्णीयते । अतो नेन्द्रादिश्रुतीनामन्यपरत्वशङ्केति तदनुरोधेन पूर्वपक्षस्तल्लिङ्गानुरोधेन वा सिद्धान्तो वा युक्त इत्यस्मद्भाष्यकारोक्तमुदाहरणमेव युक्तम् । छान्दोग्येऽन्तरादित्यवा-

कयाकाशवाक्यप्राणवाक्यज्योतिर्वाक्यानां क्रमिकाणां क्रमिकाधिकरणचतुष्टयोदाहरणत्वसंभवादित्यलं विस्तरेण ।

सिद्धान्तोऽप्ययुक्तः । यद्यस्मिन्नधिकरणे निरवकाशलिङ्गबलादेतद्वाक्यस्यान्तःस्थविष्णुपरता तर्हि तादृशेन सप्ताश्वयाजनलिङ्गेन सूर्यादिपरताऽपि प्रसज्येत । अन्यथासिद्धिसहत्वं च समुद्रस्थत्वस्यापि । प्रसिद्धिरप्युभयोस्तुल्या । न च भूयस्त्वाद्विष्णुलिङ्गानां प्राबल्यं शङ्क्यम् । श्रुतिसाहित्येनान्येषामपि प्राबल्यात् । न च विष्णुलिङ्गैः श्रुतिबाधः । स्वरूपतो दुर्बलानामुपसंहारगतानामुपक्रमगतनिरवकाशलिङ्गसहकृतप्रबलानेकश्रुत्यभ्यासबाधनासामर्थ्यात् । यन्नश्रुतिसाहित्यनिरवकाशत्वबाहुल्यादिभिः प्राबल्ये च पूर्वपक्षानुत्थितिः । तदाच्छादनं च गतिसंभवेन युक्तमिति पूर्वमेवोक्तम् ।

यदपि श्येनादिशब्दानां लोकेऽन्यत्र निरूढानामपि 'यथा वै श्येनो निपत्यादत्ते' इति वाक्यशेषबोधितसादृश्यस्य श्येनेऽनुपपत्त्या श्येनसदृशयागपरत्ववदिहापीन्द्रादिपदानाम् 'यमन्त० कवयो विचक्षते' इति वाक्यशेषबोधितसमुद्रान्तःस्थत्वादीनामन्यत्रासंभवाद्विष्णुपरत्वमिति चन्द्रिकायामुक्तम् । तदपि न । 'श्येनेनाभिचरन्यजेत' इति प्रतीतयागसामानाधिकरण्यनिर्वाहाय श्येनादिपदानां वाक्यशेषबलाद्गौणत्वाश्रयणेऽपीह तथाविधोपक्रमगतरूढिभङ्गनिमित्तादर्शनेन वैषम्यात् । अत एव श्रुतिसंदेहेऽन्यथासिद्धलिङ्गेन निर्णयः' इति न्यायविवरणोपष्टम्भकवर्णनमपि निरस्तम् । इन्द्रादिश्रुतिरिन्द्रादौ रूढत्वेनासंदिग्धत्वात् ।

यदपि—इन्द्रादिशब्दानामन्यत्र प्रसिद्धानामपि विद्वद्रूढ्या विष्णुपरत्वाच्छ्रुत्याश्च प्राबल्याद्विष्णुपरत्वमिति चन्द्रिकायामुक्तम् । तदसत् । विद्वद्रूढ्यैव सिद्धान्तकरणे 'धर्मोपदेशात्' इति हेत्वन्तरस्यासंगतेः । न च विद्वद्रूढ्युपष्टम्भनायैव धर्मोक्तिरिति वाच्यम् । तथा सति धर्मोपदेशाद्विद्वद्रूढत्वाच्छ्रुत्याश्च विष्णुपरत्वमिति साध्यान्तरहेत्वन्तराध्याहारप्रसङ्गात् । एतेन 'इन्द्रं मित्रं वरुणमग्निमाहुः'

इति श्रुत्या सामानाधिकरण्येन विष्णौ विद्वद्रूढिनिश्चयाच्छ्रुतेर-
विरोधाद्धर्मोपदेशाद्विष्णुपरता स्यादिति चन्द्रिकोक्तं निरस्तम् ।
स्वरूपचैतन्यात्मनाऽभेदमादाय 'आयुर्घृतम्' इतिवद्गौणाभे-
दमादाय वा 'इदं सर्वं यदयमात्मा' 'यद्रजतमभात्सा शुक्तिः'
इतिवदधिष्ठानसत्तातिरेकेण प्रतीतेन्द्रादिस्वरूपानुवादेन तस्या-
धिष्ठानसत्तातिरिक्तसत्ताशून्यत्वरूपाभेदमादाय बाधायां वा
सामानाधिकरण्योपपत्तेश्च न सामानाधिकरण्यमात्रेणेन्द्रादिश-
ब्दानां ब्रह्मणि विद्वद्रूढिसिद्धिः । नन्वत एव 'भेदव्यपदेशाच्च'
इत्यनेनाभेदपक्षो निरस्यत इति चेत् । तर्हि साध्यभेदेन समुच्च-
यानुपपत्तेः । एतेनैवेन्द्रादिपदप्रवृत्तिनिमित्तैश्वर्यादेरनन्याधीनत्व-
निरवधिकत्वाभ्यां परमात्मैव तन्मुख्यार्थ इति न श्रुतिविरोध
इत्यपि चान्द्रिकोक्तं निरस्तम् । तथा सति शब्दादेवेति वक्तुमु-
चितत्वेन धर्मोपदेशादिति हेतूक्तेरस्वारस्यात् । अत एव विद्वद्यो
गान्निर्णयोऽपि निरस्त । रूढेः प्रबलत्वात् । आश्रयप्राबल्याद्यो-
गप्राबल्यं तु शिष्टाकोपाधिकरणादयुक्तमिति जन्माधिकरणे
तन्न्यायस्वरूपप्रपञ्चेन निरूपितम् ।

यदप्युक्तरीत्याऽभेदमादाय सामानाधिकरण्यनिर्वाहे कार-
णत्वलिङ्गाकाशश्रुत्योरनुग्रहाय ब्रह्माकाशयोरप्यभेद कल्प्येत ।
तथा 'कदाचन स्तरीरसि नेन्द्रसश्चसि दाशुषे' इति मन्त्रस्येन्द्र-
प्रकाशनसामर्थ्यरूपलिङ्गस्य 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते'
इति द्वितीयाश्रुतेश्चाविरोधायेन्द्रगार्हपत्ययोस्तथा व्रीहियवशास्त्र-
योः षोडशिग्रहणाग्रहणशास्त्रयोश्चाविरोधाय व्रीहियवयोर्ग्रहणा-
ग्रहणयोर्विरुद्धाशत्यागेनैक्यं च स्यादिति चन्द्रिकायामुक्तम् ।
तदप्यसत् । अभेदेन सामानाधिकरण्यस्येव कारणत्वादे-
रनिर्वाहात् । न ह्याकाशतत्प्राचीनकृत्स्नकारणत्वमाकाशाभेदेन
निर्वोढुं शक्यम् । इन्द्रगार्हपत्ययोस्तु नाभेदः कल्पयितुं शक्यः ।
विनियोगवैयर्थ्यापत्तेः । न च विनियोग एव सामानाधिकरण्य-
स्येव तत्कल्पकः । लक्षणयाऽपि तदुपपत्तेः । व्रीहियवयोर्ग्रहणा-
ग्रहणयोश्च भेदग्राहिप्रत्यक्षबाधितत्वान्नाभेदः कल्पयितुं शक्यः ।

न च जीवपरमात्मनोर्विरुद्धांशत्यागेनैव प्रकृतेऽभेदापादनं चतुरस्रम्। अश्माकाशयोर्व्रीहियवयोर्वा विरुद्धाकारपरित्यागेन जीवब्रह्मणोरनुस्यूतचैतन्याकारस्येवाऽऽकाराभावात्। किंच विरुद्धाकारत्यागो व्यक्तिद्वयानुस्यूतैकवस्तुबोधाविषयत्वमेव न स्वपायः। तन्माशङ्काभावात्। तच्च 'तत्त्वमसि' 'सोऽयम्' इत्यादौ विरुद्धांशयोरिव न प्रकृते संभवति। तत्त्वमसीत्यादावुपक्रमोपसंहारैक्यरूपतात्पर्यनिर्णायकलिङ्गावगतजीवब्रह्मैक्यरूपप्रधानप्रमेयनिर्वाहकविरुद्धाकाराविवक्षारूपतत्कारणस्येव प्रकृते तादृशकारणानुपलम्भात्। व्रीहियवयोर्विरुद्धाकारपरित्यागेनोभयानुस्यूतैकव्यक्तेरभावेन तद्बोधाविषयत्वरूपत्यागस्य तद्विरुद्धाकारेऽसंभवाच्च।

यदपि चन्द्रिकायाम्—'इन्द्रं मित्रम्' इत्यादिवाक्यस्योक्तरूपाभेदपरत्वमाशङ्क्याऽऽहुरिति तत्तच्छब्दवाच्यत्वस्यैवोक्तेः। 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' (ऋ० सं० १।१६४।३६) इति वाक्यशेषे भेदोक्तेश्च। 'सोऽन्तकः स रुद्रः स प्राणभृत्प्राणनायकः स ईशो यो हरिः' इति श्रुत्यन्तरेऽभेदविवक्षायाम् 'स रुद्रः' इत्यनेन 'स ईशः' इत्यस्य पौनरुक्त्यापत्त्या तत्तच्छब्दवाच्यताया एव विवक्षणीयत्वाच्चेत्यादि नेन्द्रादिशब्दानां परमात्मनि विष्णौ विद्वद्रूढिव्यवस्थापनम्। तदपि न सत्। निर्धर्मके निर्विशेषे निष्क्रिये च परमात्मनि शब्दप्रवृत्तिनिमित्तगुणक्रियाजात्याद्यभावेन 'अशब्दमस्पर्शमरूपमव्ययम्' 'यतो वाचो निवर्तन्ते' इत्यादिश्रुत्या शब्दवाच्यतायास्तस्मिन्निषेधाच्च परमात्मनीन्द्रादिशब्दवाच्यताया असंभवेन तत्त्वतः स्वरूपैक्येऽपि व्यावहारिकेन्द्रादिस्वरूपभेदानुवादित्वेनाऽऽहुरित्यस्योपपत्तेः। लौकिकदृष्ट्येन्द्रत्वादिस्वरूपभेदभिन्नमपि शास्त्रदृष्ट्या तं परमात्मस्वरूपाभेदेन निश्चित्य 'इन्द्रं मित्रं वरुणम्' इत्यादिशब्दैर्लक्षणया व्यवहरन्तीत्येतत्परतया वा प्रतर्दनं प्रति 'मामेव विजानीहि प्राणोऽस्मि प्रज्ञात्मा' इतीन्द्रवाक्यवत् 'ब्रह्म वा इदमग्र आसीत्' 'तदाऽऽत्मानमेवावेदहं ब्रह्मास्मि' इतिवदुपपत्तेः।

यस्त्वहंशब्दो जीवान्तर्यामिणि मुख्यः । 'अहं मनुरभवं सूर्यश्च' इत्यन्तर्यामिण्यहंशब्दप्रयोगात् ।

सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
एषोऽहं त्वमसौ चाति न तु सर्वस्वरूपतः ॥

इति स्मृतेश्चेति परोक्तम् । तदपि न साधु । 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' ( ब्र० सू० १।१।३० ) इति न्यायेन वामदेवजीवचैतन्यस्य वस्तुतो ब्रह्माभेदेन सूर्यादिभावस्योक्ततयाऽन्तर्यामिपरत्वाभावात् । 'तद्यो यो देवानाम्' इति पूर्वतनवाक्ये तत्त्वबोधनिमित्तकब्रह्मभावस्य प्रकृततया 'पश्यन्प्रतिपेदे' इत्यादेरपि बोधनिमित्तकब्रह्मभावपरतयाऽन्तर्यामिपरत्वाभावात् । अन्यथा 'तस्मात्सर्वमभवत्' इति वाक्यशेषे बोधनिमित्तकसार्वात्म्यलक्षणफलकीर्तनस्यायुक्ततापत्तेः । न चैव सति 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षि(र्षी)णां तथा मनुष्याणाम्' इति भेदपरत्वं वाक्यशेषस्य विरुध्येतेति वाच्यम् । तत्र देवादिषु प्रबुद्धं पुरुषं निर्धार्य स एव तदभवादिति ब्रह्माभेदपरत्वेन भेदपरत्वाभावात् । न चात्र वाक्ये 'ब्रह्म वा' इति ब्रह्मण एव प्रकृतत्वान्नानेन जीवब्रह्मैक्यसिद्धिरिति शङ्क्यम् । 'यो यो देवानाम्' इति जीवपरामर्शिवाक्यशेषानुसारेण ब्रह्मपदस्य कार्यब्रह्मपरत्वात् । शुद्धब्रह्मपरत्वे तस्य बोधनिमित्तस्य 'तस्मात्सर्वमभवत्' इति सार्वात्म्यावाप्तिरूपफलकीर्तनस्यायुक्ततापत्तेः । न च नामब्रह्मेत्युपासीतेत्यादावितिशब्दशिरस्कतया नामाद्यभेदाभाववदत्रापीतिशब्दशिरस्कतया ब्रह्माभेदाभाव इति शङ्क्यम् । नामब्रह्मेत्यादाविवानुपासनाप्रकरणेऽस्मिन्वाक्येऽभेदाविवक्षाया वक्तुमशक्यत्वात् । न च तर्हीतिपदवैयर्थ्यं शङ्क्यम् । आत्मेत्येवोपासीतेत्यादाविव शब्दज्ञानयोः स्वाभाविकसकर्मकत्वप्राप्तौ तन्निराकरणपरत्वेनोपयोगात् । न चैवमुक्तस्मृतिविरोधः शङ्क्यः । इन्द्राहमादिशब्दानामसाधारणतत्तदात्मनि शक्तेरावश्यकतया तत्साहचर्येणान्तर्यामिण्येषोऽहमित्यादिप्रयोगः । अग्निरधीतेऽनुवाकमिति माणवकेऽग्निसाहचर्येणाग्निरितिप्रयोग-

यदन्तर्यामित्वाहंत्वाद्युपाहितयोरैक्यासंभवादन्तर्यामिणोऽहंत्वेन्द्र-त्वाद्युपाहितसर्वस्वरूपत्वानिबन्धन सर्वनामभिरभिधानं नेति तद र्थत्वात् । किंचान्तःकतारमिति वाक्ये समुद्रान्तःस्थत्वमिव 'अन्तश्चन्द्रमसि मनसा चरन्तम्' इत्यष्टमूर्तेः शिवस्याप्यस्ति लिङ्गम् ।

पृथिव्यां तिष्ठति विभुः पृथिवी वेत्ति नैव तम् ।
रूप च पृथिवी यस्य तस्मै भूतात्मने नमः ॥

इत्यादित्यपुराणादिषु शिवस्य पृथिव्यादिमूर्त्यष्टकोक्तिषु 'यः पृथिव्यां तिष्ठन्पृथिवीमन्तरो यमयति । य पृथिवी न वेद । यस्य पृथिवी शरीरम्' इत्याद्यन्तर्यामिब्राह्मणार्थप्रत्यभिज्ञानदर्श-नात् । विष्णुत्वपरिपन्थिनो 'प्रजापतिश्चरति गर्भे अन्त' इति प्रजापतिश्रुतिश्चास्ति । न च सा समुद्रान्तःस्थत्वरूपलिङ्गानुसा-राद्योगादिना विष्णुपरेति शङ्क्यम् । अष्टमूर्तिलिङ्गानुसारेण 'पाति यस्मात्प्रजाः सर्वाः प्रजापतिरिति स्मृतः' इति लैङ्गे दर्शितयोगेन शिवपरेति वक्तुं शक्यत्वात् । न च

लोके श्रुतौ स्मृतौ चैव विष्णुलिङ्गतया स्थितम् ।
समुद्रान्तरवस्थानपूर्वकं कथमन्यगम् ॥

इत्यादिना समुद्रान्तःस्थत्वस्य निरवकाशत्वेन प्राबल्य त्वदुक्त साधु । 'मध्ये लिङ्गं महाघोर महाब्धेरम्भसि स्थितम्' इत्या दित्यपुराणोक्तेः समुद्रान्तःस्थत्वस्य शिवसाधारण्यात् । न च पञ्चहोतृहृदयाख्यमन्त्रेषु तृतीयायामृचि 'य आण्डकोशे भुवन बिभर्ति । अनिर्भिण्ण सन्नथ लोकान्विचष्टे । यस्याऽऽण्डको-शं शुष्ममाहुः प्राणमुल्बम् । तेन क्लृप्तोऽमृतेनाहमस्मि' इति ब्रह्माण्डवीर्यत्व विष्णुलिङ्गं निरवकाशं वक्तुं शक्यम् । यः पञ्चहोतृदेवो ब्रह्माण्डमध्येऽभेदेनावस्थितः सन्कृत्स्नं भुवनं भूत-जातं धारयति । अथ ब्रह्माण्डभेदानन्तर तदन्तःस्थितान्भूरादि लोकान्विशेषेण प्रख्यापयति । यस्य परमात्मन आण्डकोशं शुष्मं प्रबलं ब्रह्माण्डावकाशस्थगुप्तात्मरूपप्राणवायुविशेषमुल्ब

गर्भावेष्टनस्थानीयमाहु । तेन परमात्मनाऽमृतरूपेणाहं मन्त्रद्रष्टा क्लृप्तो व्यवहारसमर्थत्वेनोत्पादितोऽस्मीत्यर्थके परमात्मनो ब्रह्माण्डवीर्यत्वप्रतिपादके य इत्यनुवादस्य प्रतीतेरस्य पुरोवादापेक्षाया सामान्येन प्रतीतस्य विशेषाकाङ्क्षाया वा ' अण्डं हिरण्मयं मध्येसमुद्रं रुद्रस्य वीर्यात्प्रथम बभूव, तत्र ब्रह्मा विष्णुर्जातो जातवेदाः ' इति रुद्रप्रतिपादकश्रुत्युपस्थितेः ।

> रुद्रसंज्ञस्य देवस्य रूपे मूर्तिः प्रजापतेः ।
> तेन क्षिप्तं रसे वीर्यं परमूर्त्यभिमानिना ॥
> तदण्डमभवद्वीर्यं सहस्रकिरणप्रभम् ।
> विष्णुस्तत्माविशत्साक्षान्मम शक्तेस्तु वैभवात् ॥
> पुनर्नारायणाख्यां स नियोगात्प्राप्तवानसौ ।

इत्यादिलैङ्गादिषु तदुपबृंहणेषु शिवस्यैव ब्रह्माण्डवीर्यत्वेन तदर्थप्रतिपादनाद्ब्रह्माण्डवीर्यत्वस्य शिवसाधारण्यात् । तथा च हरिहरयोर्द्वयोरपि लिङ्गयोः सतोस्तत्तद्वाक्यमुदाहृत्य पूर्वपक्षोत्तरपक्षग्रन्थनात्मकन्यायेनासति च तद्बलाबलविवेके कथं शिवसाधारणसमुद्रान्तःस्थत्वलिङ्गेनान्तःप्रविष्टशब्दप्रतिपाद्यान्तःस्थस्य विष्णुरेवेति विष्णुत्वनिर्णय ।

यदप्युक्तम्—परमैश्वर्यादेर्भगवति निरवधिकत्वेन भगवति महायोगसम्भवादज्ञरूढितोऽपि विद्वद्रूढेरव प्राबल्यादन्यगतप्रवृत्तिनिमित्तस्यापि भगवदभिधानस्य हराविवेन्द्रादिशब्दानां मुख्यत्वमिति । तदपि न समञ्जसम् । निरवधिकैश्वर्यस्यापि शिवसाधारण्यबोधकश्रुतिसद्भावात् । तथा ह्यथर्वशिखायाम्— 'किं तद्ध्यानं को वा ध्याता कश्च ध्येय ' इत्युपक्रान्तप्रश्नानुरोधेन ध्यानध्यातृनिरूपणानन्तरं ध्येयनिरूपणायाऽऽम्नायते— 'ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्राः संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां ध्याता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ' इत्यादि ' शिव एको ध्येयः शिवकरः सर्वमन्यत्परि-

---

१ क 'बद्धैर्न स' इत्यपि पाठान्तरम् ।

त्यस्य समाप्ताऽथर्वशिखा' इत्यन्तम् । अत्र शिवतत्त्वविदः—योग रूढया परमशिवे वर्तमानस्येशानशब्दस्य ताच्छील्यार्थे चानशः शक्ततया योगेन स्वाभाविकनिरतिशयैश्वर्यपरत्वाद्रूढ्या च परमशिववाचित्वात्सर्वोत्कृष्टफलार्थिभिः सर्वातिशयैश्वर्यः परमशिवो ध्यातव्य इति भावेनेशानशब्देन विशेष्यनिर्देशः कृतः । प्रध्यायितव्यमित्याधिक्याद्ध्यानार्हत्वेन स्तुतिः । किमन्ये न तादृशा येनैवमवधारणमिति शङ्कां निराकर्तुं देवमनुष्यादिरूपे सर्वमपञ्चे ब्रह्मादीनां चतुर्णां प्रामुख्यमुक्त्वा तेषामप्यैश्वर्यपरिच्छेदसूचनाय सोपपत्तितया दीपकेन सहोक्त्या च भूतेन्द्रियादितौल्येन तेषामुत्पत्तिमत्त्वं दर्शितम्—सर्वमिदमित्यारभ्य सह भूतैरित्यन्तेन । यत्रेतरशिवस्यापि स्यान्न स्यात्तस्यापि तद्वदेव ध्येयत्वमित्याशङ्कयोक्तम्—न कारणं कारणानां धाता ध्यातेति । संप्रसूयत इति वचनपरिणामेनानुषङ्ग । तथा चायमर्थः—ब्रह्मादीनां प्रसूत्युक्तिसामर्थ्यात्तेषामर्थसिद्धं कारण तद्रूपः । कारणानां ब्रह्मविष्णुरुद्राणां मन्त्रोपनिषदुक्तानां कालादीनां वा ध्याताऽऽदिसर्गसंकल्पकर्ता । एवंभूतेशानः कुतोऽपि न संप्रसूयत इति । यद्यप्यनेन ब्रह्मादीनामर्थलब्धं यत्कारणं तन्न संप्रसूयत इत्येतावदिह प्रतीयते न त्वीशानस्तथाऽपि तस्य ध्येयत्वं विधाय ब्रह्मादीनां परिच्छिन्नैश्वर्यत्वरूपदोषमुद्भाव्य तत्परिजिहीर्षया ध्येयत्वेनोपदिष्टस्येशानस्यापरिच्छिन्नैश्वर्यं प्रति पादयितुं प्रवृत्तं तत्पृथिव्यादिपूज्यानन्तत्वदोषपरिहाराय सामगतिपरम्पराविश्रान्तिभूमेरनन्तत्वप्रतिपादनाय प्रवृत्तम् 'स एषोऽनन्तः' इति वाक्यमनन्यथासिद्धं सदुपक्रमस्थत्वेन बलवतीमपि 'आकाश इति होवाच' इत्याकाशश्रुतिमविगणय्य परमात्मपरमिवेशानपरमेव । अन्यथोक्तदोषपरिहारालाभात् । किंच केवलयौगिकत्वेन प्रयुक्तयोर्धातृध्यातृशब्दयोः कारण शिवस्यत्र तुशब्दस्वारस्येन तत्र वाक्यारम्भप्रतीतेरिहैव वाक्येऽन्वितयोः स्वतो लिङ्गव्यवस्थाशून्यतयाऽन्यलिङ्गग्राहिणोः स्वसमानाधिकृतव्यवस्थितलिङ्गकारणशब्दलिङ्गग्राहित्वे नपुंसकलिङ्गापत्तेः । श्रुतपुंलिङ्गत्वनिर्वाहाय पुंलिङ्गविशेष्याकाङ्क्षायामा-

काङ्क्षितार्थघटनानुकूलसंनिधिश्रुतशब्दानुषङ्गसंभवे सत्येवाद-
शशब्दान्तराध्याहारायोगेनेशानशब्दानुषङ्गस्याऽऽवश्यकत्वेन
शिवस्यैव सामर्थ्यसिद्धं ब्रह्मादिकारणत्वसिद्धवत्कारेण तत्रैव
प्रसूत्यभाव उपन्यस्त इति निश्चीयते । अत एवान्तरवाक्ये
कारणमित्यस्य शंभुपदसामानाधिकरण्यं दृश्यते । तत्राऽऽकाश-
मध्य इत्युपासनस्थानकथनं परमाकाशरूपशिवस्थानाभिप्रायम् ।
सर्वेश्वर इति शिवनामत्वेन प्रयोगः, न तु सर्वैश्वर्यपरत्वेन । प्रा
चीनविशेषणेन पौनरुक्त्यापत्तेः । यद्वा यौगिकत्वे पूर्वपदेन
रूढत्वे उत्तरपदेन योगरूढत्वे पदद्वयेन पौनरुक्त्यापत्तेः । ततश्च
शंभुर्न केवलं प्रसूतिरहितत्वेन ब्रह्मादिकारणत्वादपरिच्छिन्नैश्वर्यः ।
अपि त्वनन्यसाधारणसर्वेश्वरशब्दवाच्यत्वादपीति सर्वेश्वर इत्य-
नेन ब्रह्मादीन्परित्यज्य शिव एव ध्येय इति दर्शितं भवति ।
अमुमेवार्थमादरात्कण्ठोक्त्या स्फुटयति श्रुतिः—शिव एको ध्येय
इति । इममर्थमस्याः श्रुतेरुपबृंहणान्यपि स्पष्टयन्ति । तथा हि
शिवपुराणे शिवस्य सर्वोत्कर्षनिर्धारणप्रकरणे—

> यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् ।
> सह भूतेन्द्रियैः सर्वैः प्रथमं संप्रसूयते ॥
> कारणानां च यो धाता ध्याता परमकारणम् ।
> न संप्रसूयतेऽन्यस्मात्कुतश्चन कदाचन ॥
> स सर्वैश्वर्यसंपूर्णो नाम्ना सर्वेश्वरः स्वयम् ।
> सर्वैर्मुमुक्षुभिर्ध्येयः शंभुराकाशमध्यगः ॥ इति ।

अत्र 'सर्वमिदम्' इत्यारभ्य 'सह भूते' इत्यन्तस्यार्थ
प्रदर्शके प्रथमश्लोके मूलवाक्येऽशब्दगृहीतोऽपि 'शिवादुत्पद्यते'
इत्ययमर्थ उत्तरवाक्यपर्यालोचनया सामर्थ्यात्सिद्ध इति सिद्धं
कृत्वा यस्मादिति निर्दिष्टम् । द्वितीयश्लोकेन 'न कारणं कार-
णानां धाता ध्याता' इत्येतावदेकं वाक्यं वचनविपरिणामेन
क्रियानुषङ्गश्चेति दर्शितम् । तृतीयश्लोकेन नाम्ना सर्वेश्वरः
स्वयमिति सर्वेश्वरशब्दस्य शिवनामत्वोपन्यासेन स्वयं सर्वे-
श्वरशब्दवाच्य इत्यनन्यसामान्यं नामैव तस्य सर्वेश्वरत्वं ख्याप-

पयतीति प्रदर्शनेन पुनरुक्तिः परिहृता । हरिवंशे च कृष्ण-कृतशिवस्तोत्रे—

अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्राः सर्वे ब्रह्मणश्चातिवीराः ।
त्वत्तः सर्वे देवदेव प्रसूताः-त्व सर्वेशः कारणात्मा त्वमीड्यः ॥
इति पठ्यते ।

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञा षडाहुरङ्गानि महेश्वरस्य ॥
ज्ञानं वैराग्यमैश्वर्यं तपः सत्य क्षमा धृतिः ।
स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ॥
अव्ययानि दशैतानि नित्य तिष्ठन्ति शंकरे ।

इति स्मृतयोऽपि शिवस्य निरवधिकपरमैश्वर्यं स्वातन्त्र्यादि लक्षणं वर्णयन्ति । एवं ब्रह्मविष्ण्वाद्यैश्वर्यस्य शिवाधीनत्वमपि गम्यते । तथा हि कौर्मे शिवपूजायाम्—निवेदयीत स्वात्मानं यो ब्रह्माणमितीश्वर इत्यात्मार्पणे विनियोगलिङ्गाच्छिन्नपरत्वे-नावगता ' यो ब्रह्माण विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ' इति श्रुति. । तथा शिव प्रस्तुत्य—

योऽग्रे मां विदधे पुत्र ज्ञान च प्रहिणोति मे ।
यत्प्रसादान्मया प्राप्त प्राजापत्यमिदं पदम् ॥
ब्रह्माणं मुनय पूर्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान्वेदान्विप्रा आत्मनि संस्थितान् ॥

इत्यादिशिवपुराणे तदुपबृंहणानि च ब्रह्मणः प्राजापत्याद्यै-श्वर्यस्य शिवाधीनत्वं ज्ञापयन्ति । एवम् ' ईशान सर्वविद्याना मीश्वर सर्वभूतानाम् ' इति श्रुतिः ।

ईशानः सर्वविद्यानां स एवाऽऽदिगुरुर्बुध ।
तस्य शिष्यो महाविष्णु. सर्वज्ञानमहोदधिः ॥

इति शैवे तदुपबृंहणं च विष्णोर्ज्ञानाद्यैश्वर्यं परमशिवाधीन-मिति ज्ञापयति । एवमारण्यपर्वणि तीर्थयात्राविधौ—

ततो गच्छेत्सुपर्णाक्षं त्रिषु लोकेषु विश्रुतम् ।
यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा ॥
वरांश्च सुबहूँल्लेभे दैवतैरपि दुर्लभान् ।
उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत ॥
अपि चान्यैः प्रियतमो लोके कृष्ण भविष्यसि ।
त्वन्मुखं च जगत्सर्वं भविष्यति न संशयः ॥ इति ।

द्रोणपर्वणि च तपोऽध्याये मैनाके षष्टिवर्षसहस्राणि तपश्चर्यैया लब्धप्रसादाय नारायणाय भगवता शिवेन लोकोत्तरशौर्यादिकं दत्तमिति श्रूयते । हरिवंशे च पारिजातसहितायाम्—

इति संस्तूयमानस्तु भगवान्गोवृषध्वजः ।
प्रसार्य दक्षिणं हस्तं नारायणमथाब्रवीत् ॥
मनीषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम ।
पारिजातापहर्ताऽसि मा भूत्ते मनसो व्यथा ॥
पुरा मैनाकमाश्रित्य तपस्त्वमकरोर्यदा ।
तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि ॥
अवध्यस्त्वमजय्यश्च मत्तः शूरतरस्तथा ।
भवितासीत्यवोचं यत्तत्तथा न तदन्यथा ॥

इत्येवमादीनि प्रमाणानि विष्णोरवतारिणस्तदवताराणां च शिवाधीनमैश्वर्यं प्रमापयन्ति । 'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम्' इति शिवाभिव्यक्तिस्थानं लिङ्गं प्रकृत्य तद्विशेषयन् 'पदं यद्विष्णोरुपमं निधायि' इति मन्त्रोऽपि विष्णोः परमपदप्राप्तिलक्षणमैश्वर्यं शिवाधीनमिति दर्शयति । तन्मन्त्रार्थस्तु पराशरपुराणे विवृतः—

रौद्रं लिङ्गं महाविष्णुर्भक्त्या लिङ्गं शिवात्मकम् ।
चारु चित्रं समभ्यर्च्य लब्धवान्परमं पदम् ॥ इति ।

तथा च ब्रह्मविष्ण्वाद्यैश्वर्यस्यापि शिवाधीनत्वे तदितरदेवतानामैश्वर्यस्य नितरां तदधीनत्वादिन्द्रादिश्रुतीनां प्रवृत्तिनिमित्ततादधीन्यन्यायेन विष्णुपरत्वमेवेति वर्णनमाग्रहमूलमेव । एवं विद्वद्रूढ्याऽपि 'ते देवा रुद्रं ध्यायन्ति । ततो देवा ऊर्ध्व-

बाहवः स्तुन्वन्ति ' इत्युत्तराथर्वशिखायाम् । ' यो वै रुद्र स भगवान् यश्च ब्रह्मा भूर्भुवः सुवस्तस्मै वै नमो नमः । शीर्षे जनर्दो विश्वरूपोऽसि ॐ यश्च विष्णुभू० यश्च महेश्वरो० ॐ या चोमा० ॐ यश्च विनायको० ॐ यश्च स्कन्धो(न्दो०) यश्चेन्द्रो भूर्भुवः सुवस्तस्मै नम. ' इत्यादिना रुद्रेऽपीन्द्रादिशब्दप्रयोगात्त्व ब्रह्मा त्व विष्णुस्त्व रुद्रस्त्वमिन्द्रस्त्वम् ' इत्यन्यत्रापि वैदिकेन्द्रशब्दप्रयोगाच्चेन्द्रादिशब्दानां विष्णावेव विद्वद्रूढिरित्यस्यासिद्धेरिति दिक् ।

इत्यन्तस्तद्धर्माधिकरण समाप्तम् ॥

## अथाऽऽकाशाधिकरणम् ।

वन्दारुवृन्दानतपादपद्मो नन्दात्मजः सुन्दरनीलवर्णः ।
आनन्दकन्दोऽवतु देववन्द्यो मन्दस्मितः कुन्दरदो मुकुन्दः ॥

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

पूर्वाधिकरणे रूपवत्त्वाद्यन्यथासिद्धलिङ्गानां सर्वपाप्मोदितत्वाद्यनन्यथासिद्धलिङ्गानुरोधेन नयन युक्तम् । न तु बलीयस्या आकाशश्रुतेर्लिङ्गानुरोधेनान्यथानयनमिति प्रत्यवस्थानादनन्तरसंगतिः । ' शालावत्यदाल्भ्यजैवलयस्त्रयो होद्गीथे कुशला बभूवुस्ते होचुरुद्गीथे वै कुशला' स्मो हन्तोद्गीथे कथां वदामः ' ( छा० १।८।१ ) इत्युपक्रम्य दाल्भ्य प्रति शालावत्यप्रश्नमवतार्य ' का साम्नो गति स्वरः ' इत्युत्तरिते—गतिः कारणम् । तादृश्येव प्राणाऽन्नाप्स्वर्गपर्यन्ता प्रश्नोत्तरपरम्परा प्रवृत्ता । ततश्च दाल्भ्यनिरूपिता सामगतिविश्रान्तिभूमि स्वर्गलोकरूपा ' अन्तवद्वै किल दाल्भ्य साम ' इति शालावत्येनान्तवत्त्वदोषेण दूषिता । ततश्च शालावत्य प्रति शिष्यभावमुपगतस्य दाल्भ्यस्य प्रश्नः—' अमुष्य लोकस्य का गतिरिति ' ' अयं लोक इति होवाच ' इत्युत्तरम् । ततः शालावत्येन सामगतिविश्रान्तिभूमित्वेन प्रतिष्ठात्वेन च निरूपिते पृथिवीलोके ' अन्तवद्वै किल ते शालावत्य ' इत्यनेन पूर्ववद्दूषिते शिष्यभावमुपगतस्य शाला

वत्यस्य जैवलिं प्रति प्रश्न —'अस्य लोकस्य का गतिरिति' 'आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्त यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' (छा० १।९।१) इत्युत्तरमाम्नायते । तत्रस्थमाकाशपदं किं भूताकाशपरमुत परमात्मपरमिति पूर्वोत्तरपक्षयुक्तिभ्यां संशये पूर्वपक्षः—इदमाकाशपदं भूताकाशपरमेव । तत्र तस्य रूढत्वेन मुख्यत्वात् । क्वाचित्को ब्रह्मणि तत्प्रयोगश्च व्यापकत्वादिगुणयोगाद्गौणः । अन्यथाऽनेकार्थकत्वप्रसङ्गात् । कोशादेर्विनिगमकस्य च भूताकाश एव सत्त्वात् । न चास्य लोकस्य का गतिरिति सर्वकारणे पृष्टे भूताकाशविषयोत्तरासंगतिः शङ्क्या । अस्येति सर्वनाम्नोऽव्यवहितपृथिवीमात्रपरामर्शकत्वात् । न च 'सर्वाणि ह वा इमानि भूतानि' इति वाक्यशेषानुपपत्तिः शङ्क्या । अभ्यस्यमानानुपसजातविरोधिश्रुत्यनुसारेण तस्य वाय्वादिकारणतामात्रपरत्वेन नेयत्वात् । एवं ज्यायस्त्वमनन्तत्वमपि भूतान्तरापेक्षया नेयम् । न चात्र भूयोनुग्रहन्यायः । तुल्यबलयोर्विरोध एव तत्प्रसक्तेः ।

सिद्धान्तस्तु—इदमाकाशपदं ब्रह्मपरमेव । कुत । तल्लिङ्गात् । तस्य ब्रह्मणोऽसाधारणधर्मरूपलिङ्गान्विनार्थकत्वात् । तथा हि—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति श्रूयमाणमसकुचितसर्वकारणत्वं परस्यैव ब्रह्मणो लिङ्गम् । न चेदं भूताकाशे संभवति । एवमनवधिकज्यायस्त्वपरायणत्वे अपि । न चाभ्यस्तासजातविरोध्याकाशश्रुतिविरोधेन सर्वाणीत्यादेः संकोचो युक्त इति पूर्वपक्ष्युक्तं युक्तम् । 'अन्तवद्वै किल ते शालावत्य साम' इति निन्दया गतित्वेन वक्तव्यस्याऽऽनन्त्यावगमात् । तस्य चोपक्रमोपसंहारानुगतस्य श्रुतितो बलवत्तरत्वात् । तथा चानन्तस्यैव गतित्वेन वक्तव्यतया प्राधान्यमिति तदनुरोधेन चरमश्रुताकाशपदमेवान्यथा नेयम् । न ह्यनुपसंजातविरोधिन आनन्त्यस्योपक्रमोपसंहारस्पर्शिनः संकोचो युक्तः । अत एव प्रश्नोऽपि सर्वकारणविषय एव । अन्यथाऽऽनन्त्यानुपपत्तेः । एवं च प्रश्नप्रतिवचनयोरेकार्थ-

बोधजननसामर्थ्याल्लिङ्गादप्याकाशपदस्य ब्रह्मपरत्वं सिध्यति। तदुक्तमाचार्यवाचस्पतिभि —यद्यप्याकाशपदं प्रधानार्थं तथाऽपि यत्पृष्टं तदेव वक्तव्यम्। न खल्वनुन्मत्त आम्रान्पृष्टः कोविदाराना्चष्टे। तदिह ‘अस्य लोकस्य का गतिः’ इति प्रश्नः प्रपञ्चमात्रगतिविषय इति तदनुरोधाय एव सर्वलोकस्य गतिः स एवाऽऽकाशशब्देन प्रतिवक्तव्य इति। एवम् ‘आकाशादेव समुत्पद्यन्ते’ इत्येवकारानुरोधादप्याकाशपदस्य न भूताकाशपरता। एवकारो ह्याकाशातिरिक्तं कारणं व्यवच्छिनत्ति। न चैतद्भूताकाशपरिग्रहे युज्यते। वाय्वादिकं प्रति कालादृष्टादीनामपि कारणत्वात्। न चैतद्ब्रह्मपक्षेऽपि तुल्यमिति शङ्क्यम्। ब्रह्मणः सर्वात्मकतयाऽऽकाशकालादीनां ततोऽत्यन्तभिन्नत्वाभावादितरव्यवच्छेदोपपत्तेः। अत्र भूतल एक एव घटोऽस्तीत्यादौ शुद्धघटव्यक्तिव्यतिरिक्तानां तत्तत्क्षणविशिष्टानां घटत्वोपहिताद्भिन्नस्य द्रव्यत्वोपहितस्य च सत्त्वेनेतरसामान्यव्यवच्छेदायोगेनोक्तवाक्यस्याप्रामाण्यापत्त्यैकादिपदानामत्यन्तभिन्नार्थव्यवच्छेदबोधकताया अवश्यमाश्रयणीयत्वात्। अत्यन्तभेदश्च तत्तादात्म्यासमानाधिकरणभेद एव। स च नाऽऽकाशकालादौ। तत्र ब्रह्मतादात्म्यसत्त्वात्। स्पष्टं चेदमाकरे। विशिष्टकेवलभेदादिकं चाऽऽकरे स्पष्टमुपपादितम्।

अथानन्तत्वमापेक्षिकमेव। तथा हि—शालावत्येन ‘अप्रतिष्ठितं वै ते किल दाल्भ्य साम’ इत्यप्रतिष्ठितत्वदोषोद्भावनेन दाल्भ्यपक्षं दूषितवताऽपि स्वयं पृथिवीलोक आपेक्षिकप्रतिष्ठाशाल्येव निरूपितः। न हि पृथिवीलोको निरङ्कुशप्रतिष्ठाशाली। तत्प्रतिष्ठाभूतानामन्येषां जलादीनामपि सत्त्वात्। तद्वदाकाशगतमनन्तत्वमपि वाय्वाद्यपेक्ष भविष्यति। तदपेक्षयाऽपि तस्य चिरस्थायित्वात्। मैवम्। ‘उद्गीथे कुशला बभूवुरुद्गीथे कथां वदामः’ इत्युपक्रम्य स्वरादिपृथिव्यन्तं तेन तेन दोषेण निराकृत्यानन्तं वस्तूपक्षिप्य ‘स एष परोवरीयानुद्गीथ स एषोऽनन्तः’ इति पर्यवसानकरणाच्च। कृत्स्नोऽप्ययं संदर्भ उद्गीथेऽनन्तवस्तुध्याननिरूपणपर इत्यवगम्यते। पृथिव्यन्तव-

स्तुपरम्परा तत्र दोषश्च 'नहि निन्दा' न्यायेनानन्तवस्तुस्तुतिपर एव । ततश्चान्तवत्त्वदोषोद्भावनार्थमुपक्षिप्तस्य पृथिवीप्रतिष्ठात्वस्य यथाकथंचिद्व्याख्यानेऽपि नानन्तत्व यथाकथंचिद्व्याख्यातुं युक्तम् । तत्र दोषानुद्भावनात्कृत्स्नसदर्भस्य तत्रैव पर्यवसानाच्चेत्युपक्रमोपसंहारसंस्पर्शिनो लिङ्गस्य स्थानप्रमाणेनान्यथानयनासंभवात् । अपि च पृथिवीप्रतिष्ठात्व न स्वर्ग प्रत्युपजीव्यत्व येन तदापेक्षिक स्यात् । 'इत प्रदानं देवा उपजीवन्त्यमुत. प्रदान मनुष्याः' इति स्वर्गपृथिव्योः परस्पर तस्य प्रतिपादनात् । किंतु 'न प्रतिष्ठा लोकमतिनयेत्' इति पृथिव्याः प्रतिष्ठात्वोक्त्या निश्चलत्वरूपमेव । तस्मिन्विवक्षिते 'अप्रतिष्ठित वै किल ते दाल्भ्य साम' इति स्वर्गस्याप्रतिष्ठितत्वं चलद्रूपत्व पर्यवस्यति । तच्च ज्योतिश्चक्रान्तर्गतस्य स्वर्गस्योपपद्यते । आर्यभट्टोक्तभूभ्रमणवादः, मत्स्यजिघृक्षुपक्षिवद्भुवो नित्यमध.पतनवादो यवनकल्पित, जलान्तर्गतशुष्कालाबुवज्जैनकल्पितो भूप्लवनवादो बहुप्रमाणविरोधादेतत्प्रतिष्ठात्वोक्तिविरोधाच्च हेय एव । त्रिष्वेतेषु पक्षेष्वूर्ध्वनिक्षिप्तकन्दुकादेर्हस्तप्राप्तिर्न स्यादित्यादिदूषणसद्भावादित्यन्यत्र विस्तर इति पृथिव्याः प्रतिष्ठितत्ववदानन्त्यमापेक्षिकमित्यसंगतमेव । निश्चलत्वरूपस्य तस्य स्वाभाविकत्वेन सार्वकालिकत्वेन चाऽऽपेक्षिकत्वासंभवात् । अपि चोपक्रान्तमानन्त्य त्रिविधपरिच्छेदनिरासेनोत्तरवाक्यैर्व्युत्पाद्यते । तत्र हि 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यनेन वस्तुपरिच्छेदराहित्यस्य निखिलकारणत्वोक्त्या कालपरिच्छेदराहित्यस्य 'आकाशो वै ह्येभ्यो ज्यायान्' इति देशपरिच्छेदराहित्यस्य च व्युत्पादनात् । अतः 'सर्वाणि ह वा इमानि भूतानि' इतिवाक्यप्रतिपाद्यमपि सर्वकारणत्वं निरङ्कुशमेव व्याख्येयम् । आपेक्षिकस्य तस्य ग्रहण उपक्रान्तमानन्त्यमव्युत्पादित स्यात् । 'स एषोऽनन्तः' इति उपसंहार आनन्त्यं श्रूयते । एव चोपक्रमोपसहारैकरूपकारणत्वाद्युपपत्तिरूपतात्पर्यलिङ्गोपेतमानन्त्य नान्यथा नेतु शक्यम् । यद्यप्याकाशश्रुतिरभ्यस्ता तथाऽपि निरूढया ब्रह्मण्यपि व्या-

त्यातुं युक्ता। सा च 'आकाशवत्सर्वगतश्च नित्य.' इतिश्रुतिसिद्धसर्वगतत्वगुणमादाय ब्रह्मपरा सत्युपक्रान्तमानन्त्यमेवोपोद्बलयिष्यतीति न कथंचिदानन्त्य नेतुं शक्यम्। उपक्रान्तानन्तत्वरूपदोषपरिहारालाभात्। न चाऽऽकाशशब्दप्रतिपाद्य यत्तत्प्रधानमिति प्रकृतसदर्भनिर्णये सत्यपि भूताकाशमेव प्रधानमिति प्राङ् निर्णयो भवति। किंत्वाकाशपदस्य भूताकाशे रूढत्वाद्भूताकाश एवोत्सर्गतस्तत्प्रतिपाद्य इति मतिः प्राप्ता यावद्भवति तावदेव भूयसीर्ब्रह्मलिङ्गप्रतिपादिकाः श्रुतीरुपलभ्य सा मतिः कुण्ठिता भवति। तथा च भूयोनुग्रहन्यायानुसरणे न प्रधानविरोध आपादयितुं शक्यः। अपि तु प्रधानप्रतिपादकस्य लक्षणमात्र तत्रानुपपन्नम्। अग्निरधीतेऽनुवाकमिति दर्शनात्। अत आकाशपद ब्रह्मैव प्रतिपादयति। ततश्च तदेवेह प्रधानमिति सिद्धम्। एतेन प्रधानविरोधान्न भूयोनुग्रहन्याय इति कस्यचिदुक्तिः परास्ता। तदेतत्सूचितमाचार्यवाचस्पतिमिश्रैः—न चाऽऽकाशप्राधान्यमुत्तर इति।

यत्तु चन्द्रिकायाम्—अत्रोभयेऽप्याहुः—'आकाश इति होवाच' इत्याकाशे निरूढप्रथमानुपसजातविरोध्याकाशपदानुरोधेन बहून्यपि चरमाणि सर्वकारणत्वज्यायस्त्वानन्तत्वादीनि भूताकाशे कथंचिन्नेयानीति प्राप्ते—यद्यप्याकाशपदम् 'सर्वाणि' इत्यादितः प्रथमं तथाऽपि परिहारवाक्यस्थाकाशपदादपि प्रथमानुपसजातविरोधिप्रश्नानुरोधेन चरमस्योत्तरस्य नेयत्वात्। 'अस्य लोकस्य का गतिः' इति प्रश्नस्य दृश्यमानसर्वप्रपञ्चविषयत्वात्सर्वलोकगतिरेवाऽऽकाशपदेन प्रतिवक्तव्या। न च लोकान्तर्गतो भूताकाशः सर्वभूतगतिः। किंच सर्वलोककारणत्वादिबह्वनुग्रहार्थमेकमाकाशपदमेव जघन्यवृत्त्या ब्रह्मपरम्। '* त्यजेदेकं कुलस्यार्थे' इति न्यायादित्यादिना निरुक्तपूर्वपक्षसिद्धान्तावनूद्य, अत्र ब्रूमः—प्रथमानुसारेण

---

* त्यजेदेकं कुलेति। त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्।

चरमसूत्रस्थे पूर्वाधिकरणेऽपि हिरण्यश्मश्रुत्वाद्यनुसारेण सर्वपाप्मोदितत्वं जीवे कथंचिन्नेयं स्यात् । इहापि प्रश्नानुरोध्यत्वे प्राथम्यमेव हेतुः । प्रश्नोत्तरयोरेकविषयत्वस्योत्तरानुसारेण प्रश्नव्याख्यानेऽपि सिद्धेः । किंच —

प्रकृता पृथिवी वक्ति प्रश्नस्य सर्वनाम यत् ।
तस्मात्तदनुरोधी चेत्समाधिश्च तथा भवेत् ॥

तथा हि—'असौ लोकः' इत्यादिना दाल्भ्योक्तं स्वर्गलोकस्य समाश्रयत्वं शालावत्य 'अप्रतिष्ठितं किल' इत्यादिना दूषयित्वा 'अयं लोकः' इत्यादिना पृथिवीलोकः समाश्रय इत्यूचे । जैवलिस्तु तम् 'अन्तवद्वै किल' इत्यादिनाऽदूषयत् । तर्हि 'अस्य लोकस्य का गतिः' इति शालावत्येन प्रकृतपृथिवीलोकगतिरेव पृष्टा न सर्वगतिः । अस्येति सर्वनाम्नः प्रकृतपरामर्शित्वात् । तथा च प्रश्नानुरोधेन व्याख्याने 'सर्वाणि ह वै' इत्यत्र सर्वशब्दः पृथिवीमात्रपरः स्यात् । न च पृथिवीकारणस्याप्रसिद्धत्वेन प्रश्नवैयर्थ्यम् । सर्वलोककारणस्यापि वाक्यान्तरतः प्रसिद्धेः । लोकतस्त्वप्रा पृथिवीकारणत्वस्याप्रसिद्धेः । न च पृथिवीमात्रकारणप्रश्न आप इति वक्तव्यत्वादाकाशपदं सर्वाणीति पदमाकाशादेवेत्यवधारणं चायुक्तं तस्मात्प्रश्नेऽपि सर्वलोकगतिर्विषय इति वाच्यम् । भामत्या प्रश्नानुरोधेनोत्तरस्य व्याख्यानादित्युक्तत्वेनोत्तरानुसारेण प्रश्नव्याख्यानेऽन्योन्याश्रयात् । यच्चोक्तं त्यजेदेकं कुलस्यार्थे इति । तन्न । आकाशश्रुतेः प्रधानत्वात् । अप्रधानानेकलिङ्गबाधस्यापि 'आत्मार्थे पृथिवीं त्यजेत्' इतिन्यायसिद्धत्वात् । किंच—

कारणे कार्यगा यद्वत्तथा कार्येऽपि हेतुगाः ।
व्यपदेष्टुं हि शक्यन्ते धर्मा एकत्वविवक्षयतः ॥

पूर्वाधिकरणे त्वत्पक्षे कार्यगतस्य हिरण्यश्मश्रुत्वादेः कारणे व्यपदेश इवेह कारणब्रह्मधर्माणां सर्वकारणत्वादीनां भूताकाशे व्यपदेशोऽस्तु । तयोरभेदाविशेषात् । किंच—

---

१ क चे । अनाद्यनस्तु ।

विशिष्टविषयत्वं चेत्यनन्तत्वाद्यसंभवः ।
विशुद्धविषयत्वं चेज्ज्यायस्त्वादेरसंभवः ॥

नहि सोपाधिके परिच्छिन्ने ब्रह्मण्यनन्तत्वादिकम् । नापि निर्विशेषे ज्यायस्त्वादिकम् । न च ज्यायस्त्वमपरिच्छिन्नत्वम् । अनन्त इत्यनेन पुनरुक्तेः । किंतु परिमाणाधिक्यं गुणाधिक्यं वा । न च तन्निर्विशेषेऽस्ति । यद्यपि वस्तुतो निर्विशेषे आरोपितविशेषो न विरुद्धस्तथाऽपि त्वदुक्तो निर्विशेषसविशेषविद्ययोरधिकारिभेदः, फलभेद, विद्याभेदेन पादभेदश्च न स्यात् । एवमुत्तराधिकरणविषयवाक्येष्वपि सगुणनिर्गुणलिङ्गयुक्तेषु दोष ऊह्यः । किंच सूत्रोक्तलिङ्गं न तावद्ब्रह्मणि तत्त्वतोऽस्ति ।

यदि चाऽऽरोपितं लिङ्गं तत्साध्या ब्रह्मताऽपि हि ।
आरोपिता स्यादेवं च पूर्वपक्षः स्थिरो भवेत् ॥

इति दूषणमुक्तम् । तदसारमेव । प्रथमचरमयोस्तुल्यबलवत्त्वे प्रथमस्याधिकबलवत्त्वे वा प्रथमानुसारेण चरमं नेयम् । चरमस्याधिकबलवत्त्वे तु चरमानुसारेण प्रथमं नेयमिति हि स्थितिः । एवं च पूर्वाधिकरणे प्रथमश्रुतहिरण्यश्मश्रुत्वादिकमपेक्ष्य 'स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' (छा० १ । ६।७) इति फलवचनरूपतात्पर्यलिङ्गोपेतस्य सर्वपाप्मोदितत्वस्य ब्रह्मधर्मतया 'य आत्माऽपहतपाप्मा' इति श्रुत्यन्तरे प्रसिद्धस्यानन्यथासिद्धतया प्रबलत्वेन तदनुरोधेनोक्तरीत्याऽसंकोचेनैव ब्रह्मणि संभवतो हिरण्यश्मश्रुत्वादेर्नयनं युक्तम् । प्रकृते चोपक्रमोपसंहारैक्यरूपतात्पर्योपपत्तिरूपतात्पर्यलिङ्गोपेतानन्त्यलिङ्गावगतब्रह्मभावेन विषयेण निर्णीतस्वविषयस्य प्रश्नस्यानुपसंजातविरोधिनोऽनुरोधेन चरमाकाशश्रुतिरत्रान्यथा नेयेति प्रथमानुसारेणेत्याद्युक्तिमाथक्यमेव हेतुरित्येवंकारश्चासंगतावेवेति स्पष्टमेव । किंचेत्याद्यप्ययुक्तमेव । 'अन्तवद्वै ते किल शालावत्य' इति निन्दयागतित्वेन वक्तव्यमनन्तमित्यवगनवता शालावत्येन प्रक्रान्तानन्त्योपपादनानुरोधेन सर्वलोकगतेरेव प्रष्टव्यतयाऽस्तीति सर्व-

नाम्नोऽविशेषेणोपस्थितकार्यमात्रपरामर्शकताया एव युक्तत्वा-
त् । अत एवोक्तरीत्या पृथिवीमात्रकारणताबुद्धिर्मा भूदिति
'सर्वाणि ह वै' इति वाक्यशेषे सर्वादिपदं श्रूयते । यदि च
तदपि सर्वपदं प्रश्नानुरोधेन पृथिवीमात्रपरं स्यात्तद्व्यर्थमेव
स्यात् । पृथिवीकारणत्वमात्रस्य 'अस्य लोकस्य [का] गतिः'
इति प्रश्नस्थपदत्रयानुषङ्गमात्रेणैव लाभेन 'सर्वाणि ह वा इमानि
भूतानि' इतिबहुवचनवैयर्थ्याच्चाऽऽनन्त्यबोधनाय सर्वलोकका-
रणताबोधनस्यैव युक्तत्वात् । यस्त्वन्योन्याश्रय उक्तः सोऽप्य
त्यन्तमयुक्त एव । प्रथमावगतानन्त्येनैव प्रश्नविषयनिर्णयस्योक्त-
त्वात् । प्रश्नानुरोधेन निर्णयस्याऽऽकाशपदार्थस्य प्रश्नविषय
निर्णयेऽनपेक्षितत्वेनान्योन्याश्रयत्वोक्तेर्निरालम्बत्वात् । सर्वाणी
त्यस्याऽऽकाशादेवेत्यवधारणस्य चार्थनिर्णये प्रश्नानपेक्षणाच्च ।
आकाशपदानुसारेण प्रश्नव्याख्यानोक्तिस्त्वनुक्तोपालम्भ एव ।
श्रीमद्भाष्यभामत्यादौ तथाऽनुक्ते । प्राधान्यं तु गतित्वेन वक्त
व्यस्याऽऽनन्त्यस्यैव न भूताकाशस्येति प्रागुक्तमेवेति । यच्चो-
क्तमित्यादिनोक्तदूषणमप्ययुक्तमेव । किंच कारणे कार्यगा
यद्वदित्यादिनोक्तमपि दूषणमविचाररमणीयम् । जीवेऽपि
हिरण्यश्मश्रुत्वादेर्यथाश्रुतस्योपपादयितुमशक्यत्वात् । न हि जीवे-
ऽपि हिरण्यश्मश्रुसंबन्धः स्वाश्रयदेहतादात्म्यतत्स्वामित्वाद्यति-
रिक्तः संभवति । तादृशसंबन्धद्वयं च सर्वविकारकारणे सर्वनि-
यन्तरि च परमात्मन्युपपन्नमेवेति परमात्मनि तद्व्यपदेशोक्तिर्यु-
क्तैव । न च स्वकर्मोपार्जितत्वसंबन्ध एव बहुव्रीह्यर्थ इति निय-
न्तुं शक्यम् । 'सर्वकर्मा सर्वगन्धः सर्वरसः' इत्यादौ संबन्धान्तर-
स्यापि बहुव्रीह्यर्थताया दर्शनात् । उपक्रमादिभिः परमेश्वरपर
तया निर्णीतवाक्यान्तर्गते 'त्रिलोचनं नीलकण्ठं प्रशान्तम्'
इत्यादावुक्तसंबन्धातिरिक्तसंबन्धार्थकताया एव बहुव्रीहेरवश्य
वाच्यत्वाच्च । एवं चान्यथासिद्धानां हिरण्यश्मश्रुत्वादीनामुक्त-
दिशा ब्रह्मण्यपि संभवतां तत्र व्यपदेष्टुं शक्यत्वेऽप्यनन्य-
थासिद्धानामानन्त्यादीनां सर्वकारणत्वादीनां भूताकाशेऽसंभ-
वतां पूर्वाधिकरणोक्तरीत्या तत्र व्यपदेशोऽस्त्वित्युक्तिरविचा-

रिणां प्रतारणैवेति स्पष्टमेव । प्रपञ्चितं चैतत्पूर्वाधिकरणे स्वर्णे कटकत्वादेरिव कटकादौ स्वर्णत्वव्यवहारेण ब्रह्मधर्मैः कार्य एव व्यपदेशापातादिति चन्द्रिकोक्तदूषणनिराकरणे विस्तरेण । किंच विशिष्टेत्यादिकमप्ययुक्तमेव । उपहितस्यैवोक्तरूपेणोपास्यतायां बाधकाभावात् । न च तत्रानन्तत्वाद्यसंभवः । उपहितस्य शुद्धाभिन्नतया शुद्धरूपेण तत्र तदुपपत्ते । उपहितब्रह्मणोऽप्यमिथ्यात्वेन देशकालाद्यपरिच्छेदसंभवाच्च । यथा चोपहितब्रह्मणोऽमिथ्यात्वं तथा प्रपञ्चितमीक्षत्यधिकरणेऽस्माभिर्विस्तरेण । यदपि शुद्धस्यैवात्र प्रतिपादने सविशेषनिर्विशेषविषयविद्ययोरधिकार्यादिभेदो न स्यादुक्तविद्याभेदेन पादभेदश्च न स्यादिति दूषणमुक्तम् । तदसत् । आपादकाभावात् । न चैकविषयकत्वमापादकम् । धर्मैक्येऽपि धर्मविवक्षातदभावाभ्यां विद्यावैलक्षण्यात् । तद्वैलक्षण्येन फलवैलक्षण्यस्य चापि निष्प्रत्यूहत्वात् । निर्गुणविद्यायाः प्रपञ्चाधिष्ठानशुद्धब्रह्मविषयकप्रमारूपतया सद्योमुक्तिः फलम् । सगुणविद्यायाश्च गुणप्रकारकब्रह्मधर्मिकध्यानरूपाया ज्ञानानात्मकत्वादविद्याविरोध्यसंकीर्णस्वरूपानवगाहित्वाच्च सद्योमुक्तिजननसामर्थ्यशून्यतया श्रुतं कर्म समृद्ध्यादिक फलमिति स्वरूपफलादिभेदस्य निष्प्रत्यूहतयाऽधिकारिभेदस्य निरपवादत्वाच्च । न च '[ने]दं रजतमिय शुक्तिः' इति बुद्धेरपि 'इदं रजतम्' इति भ्रमानिवर्तकतयाऽविद्यानिवर्तकतायास्तद्विषयान्यूनविषयकत्वमेव तन्त्रं न तु तदनतिरिक्तविषयकत्वमपीति ध्यानस्य शुद्धस्वरूपाविषयकत्वेऽपि कुतो नाविद्यानिवृत्तिरिति वाच्यम् । ज्ञानस्यैवाज्ञाननिवर्तकत्वनियमात् । 'इय जातिमद्व्नी' इति बुद्धेः 'इदं रजतम्' इति भ्रमानिवर्तकत्वेनोक्तविषयकत्वस्याप्यज्ञाननिवर्तकतायामतन्त्रत्वेन जिज्ञासासूत्रोक्तगतेरेवाऽऽश्रयणीयतया दोषगन्धाभावात् । एवमेवोत्तराधिकरणविषयवाक्येष्वपि सगुणनिर्गुणोभयलिङ्गेषु परोक्तदूषणोद्धारप्रकार ऊह्यः । किंच सूत्रोक्तमित्यादिकमपि न युक्तम् । आरोपितस्याप्यसाधारणस्य स्वव्यापकसाधकतायां निष्प्रत्यूहत्वात् । न ह्यारोपितरजततादात्म्येन साध्यो रजतभे-

दोऽध्यारोपित इति शक्य सेचतसा वक्तुम् । प्रपञ्चितश्चायमर्थो विस्तरेण जन्मादिसूत्रे चन्द्रिकोक्तदूषणोद्धारेऽस्माभिराकरे च स्पष्ट इति दिक् ।

आनन्दतीर्थीयास्तु— अ रिदेविके द्रादिनामसमन्वयः पूर्वाधिकरण उक्तः । अत्राऽऽयिर्भौतिकाकाशादिनामसमन्वयः क्रियते । भूतेष्वाकाशप्राधान्यात् । तद्वाचक नामेतरोपलक्षकतया सूत्र उपात्तम् । अनन्तरसगतिस्तु—' को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आन दो न स्यात् '(त० २।७।१)इत्यत्र विष्णोर्लोकचेष्टकत्वमानन्दमयत्वे हेतुरुक्तः । तच्चेहाऽऽकाशस्य श्रूयते । स यदि विष्णोरन्यः स्यादानन्दमयोऽप्यन्य. स्यादित्याशङ्क्याधिकरणाक्षेपादाक्षेपिकी । तत्राऽऽकाशशब्दाऽय रूढ्या भूताकाशे प्रसिद्ध', न योगमात्रेण ब्रह्मणि वर्तयितु शक्य । यद्यप्यवकाशेऽप्ययं रूढस्तथाऽपि पृथिवीलोकगतित्वोपपादकतयोक्तकारणत्वस्य ' आकाशाद्वायुः ' इत्यादौ भूताकाश एव श्रवणात्स एवात्र ग्रहीतु शक्यो नावकाशरूपाकाशः । अतः ' यदेष आकाशः ' इत्युक्तोऽपि स एव स्यात् । न च वैपरीत्य शङ्क्यम् । रूढेर्बलवत्त्वादिति पूर्वपक्षे—परोवरीयस्त्वादिनिरवकाशलिङ्गादाकाशो विष्णुरेव । न चाऽऽकाशश्रुतिर्निरवकाशा । लक्षणया योगेन वा विष्णावपि वृत्तिसभवात् । ' नामानि सर्वाणि यमाविशन्ति तं वै विष्णु परममुदाहरन्ति ' इति सर्वनाम्नां विष्णुपरत्वाच्च । न चामुख्यत्व दोषः । योगविद्वद्रूढ्याम्तत्रैव संभवादिति सिद्धान्तँ इति रीत्याऽधिकरणयोजनामाहु' ।

तत्रेद वक्तव्यम्—रूढ्यनुग्रहरूपपूर्वपक्षहेतोर्निरवकाशलिङ्गबाध्यत्वरूपसिद्धान्तहेतोश्च भौतिकाभौतिकसाधारण्येऽस्याधिकरणस्य भौतिकमात्रविषयकत्वे किं विनिगमकम् । न चाऽऽरिदेविकेन्द्रादिनामसमन्वयानन्तर भौतिकस्यैव बुद्धिस्थत्वात्तन्निरूपणामिति युक्तम् । तर्हि तन्न्यायेनैवास्य गतार्थत्व दुर्वारम् । तत्रापि निरवकाशलिङ्गबलादेव श्रुत्यन्यथाकरणात् । यथोक्तं चन्द्रिकायामन्तस्तद्धर्माधिकरणे सिद्धान्ते ।

लिङ्गादिभ्यो बलवती श्रुतिर्यद्यपि च स्वतः ।
अनवकाशोज्झितेर्लिङ्गैः सावकाशात्तु बाध्यते ॥ इति ।

न च पूर्वन्यायातिदेश एवायमभ्यधिकशङ्कानिरासार्थ इति चन्द्रिकोक्तं साधु । 'अत एव प्राण' इतिवदतिदेशस्यात्यक्षरत्वात् । अभ्यधिकशङ्काया अभावाच्च ।

यत्तु चन्द्रिकायाम्—यद्यपि निरवकाशलिङ्गैर्लोकप्रसिद्धिबाध इह पूर्वत्र चाविशिष्टस्तथाऽप्यधिकाशङ्कानिरासादपौनरुक्त्यमित्युक्त्वा पूर्वत्रेन्द्रादिशब्दानां तत्प्रवृत्तिनिमित्तैश्वर्यादीनां चेतनगतत्वेन भगवदधीनत्वाद्युक्तं विष्णुपरत्वम् । चेतनभृत्यगतजयस्य राजाधीनत्वेन राजा जयतीति प्रयोगदर्शनात् । चेतने जडवाचिशब्दप्रयोगादर्शनेनाचेतनगतप्रवृत्तिनिमित्तस्य चेतनानधीनत्वावधारणात्तत्प्रसादलब्धत्वरूपतदधीनत्वमेव शब्दप्रवृत्तिनिमित्तं वाच्यम् । तथा चाचेतन आकाशे ज्ञानाधीनभगवत्प्रसादस्यासंभवादाकाशपदप्रवृत्तिनिमित्तस्य विवरत्वादेरचेतनगतत्वादचेतनाकाशस्वभावत्वात्तस्यान्याधीनत्वस्वभावत्वहानेर्भगवदनधीनत्वेन नाऽऽकाशश्रुतेः प्रवृत्तिनिमित्ततादधीन्यन्यायेन विष्णुपरत्वं संभवति । विद्वद्रूढिमहायोगौ त्वसिद्धौ । वैदिकप्रयोगबाहुल्यादेरद्याप्यसिद्धेरिति प्रमेयाश्रिताऽऽकाशशब्दस्य ब्रह्मणि मुख्यत्वविरोधिन्यधिका शङ्का । प्रमाणाश्रिता तु पूर्वत्र केवलश्रुतित्वात्प्राबल्ये शङ्किते निरवकाशत्वप्रयुक्तप्राबल्यस्य बलवत्त्वान्निरवकाशलिङ्गेन श्रुतिबाधो युक्तः । अत्र त्वाकाशश्रुते 'आकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवै यो भूतेभ्यो ज्यायानाकाशः परायणम्' ( छा० १ । ९ । १ ) इत्याकाशश्रुतेर्बाहुल्याच्छ्रुतित्वबहुत्वोभयप्रयुक्तप्राबल्यान्निरवकाशत्वमात्रप्रयुक्तप्राबल्यस्य दुर्बलत्वान्निरवकाशस्यापि लिङ्गस्य बाध इति । यद्वा—युक्तमन्यत्र निरूढानामपीन्द्रादिशब्दानां श्येनादिशब्दानां यजिसामानाधिकरण्यवत् 'मत्सीन्द्रमिन्दो पवमान विष्णुम्' ( ऋ० सं० ७ । ३ । २६ ) इत्यादौ विष्णुशब्दसामानाधिकरण्यात् । 'यो देवानां नामधाः' इति विशेषश्रवणादन्यत्रानिरूढानां तःस्थत्वमुखसद्भावाच्च विष्णुपरत्वम् ।

* उत्पत्तिशिष्टसोमावरुद्धेऽपि याग उत्पन्नशिष्टस्य फलचमसस्य भक्षणमुखेनानुप्रवेशवदर्थान्तरावरुद्धेऽपीन्द्रादिशब्देऽन्तःस्थत्वमुखेन ब्रह्मप्रवेशाविरोधात् । आकाशशब्दे तु क्वापि तत्सामानाधिकरण्याभावादन्यत्रानिरूढमुखाभावाच्चाऽऽमिक्षावरुद्धे यागे =वाजिनवद्विरोधान्न विष्णुपरत्वम् । अथवाऽऽकाशशब्दस्योपक्रमस्थत्वेन श्रुतित्वेन च बलवत्त्वादिन्द्रबृहस्पत्यादिशब्दवच्च परस्पर-

---

* उत्पत्तिशिष्टसोमेति । अय भाव —ज्योतिष्टोमे श्रूयते—'यदि राज य वैश्य वा याजयेत्स यदि सोम बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ता सपिष्य दधन्यु मृज्य तमस्मै भक्ष प्रयच्छेन्न सोमम्' इति । स्तिभि यो नाम मुकुलानि । अत्र सोमविकारतया श्रूयमाण फलचमस किं तद्भक्षमात्रे सोम विकुर्यादथवा यागेऽपीति सशय । किं तावत्प्राप्तम् । भक्षमात्रे विकार इति । कुत इति चेत् । बिभक्षयिषेदित्युपक्रमात् ' भक्ष प्रयच्छेत् ' इत्युपसहाराच्चेति प्राप्ते— अभिधीयते—'यदाऽ याश्चमस न्जुहुति, अथैतस्य दर्भतरुणकेनोपहत्य जुहोति ' इत्यत्र फलचमसरूपयथोक्तपिष्टेन यागमङ्गीकृत्य तरुणकगुणो विधीयते । किंच हुतद्रव्यसस्कारो हि भक्ष । स च यागम तरेणानुपपन्न । तस्माद्यागेऽपि विकार इति सिद्धान्त । अत्रोत्पत्तिशिष्टनित्यसोमापेक्षया नैमित्तिकस्योत्पन्नशिष्टस्यापि फलचमसस्य प्राबल्याद्य गसाधनद्रव्यसंस्काररूपभक्षणद्वारा यागसाधनत्वेन यथा यागेऽनुप्रवेशस्तथे द्रादिशब्देऽपि पुरदरादिरूपार्थान्तरवाचिन्यपि वाच्यतया ब्रह्मानुप्रवेश इति ।

= वाजिनवदिति । 'तप्ते पयसि दध्यानयति। सा वैश्वदेव्यामिक्षा । वाजिभ्यो वाजिनम्' इति श्रूयते । घनीभूत पय पिण्ड आमिक्षापदवाच्य । जल तु वाजिन बोध्यम् । तत्राऽऽमिक्षाद्रव्यभाजो ये विश्वेदेवा उक्तास्तान् ' वाजिभ्य ' इत्यनेनानूद्य वाजिनमपि द्रव्य विधेयमाहोस्वित्स्वतन्त्र एव यागो विधेय इति सशये— वाज आमिक्षारूपमन्नमेषामस्ति ते वाजिन इति व्युत्पत्त्या वाजिशब्दस्य विश्वेदेवपरत्वात्तद्देवताककर्मण्येव वाजिन द्रव्य विधेयम् । स्वतन्त्रकर्मविधानापेक्षया गुणमात्रविधाने लघुत्वादिति पूर्वपक्ष । अत्रोच्यते—उत्पत्तिशिष्टेनाऽऽमिक्षाद्रव्येणावरुद्धे वैश्वदेवयागे द्रव्याकाङ्क्षाया अभावादुत्पन्नशिष्टस्य वाजिनद्रव्यस्य तत्र प्रवेशाभावाद्वाजिनरूप द्रव्य वाजिशब्दार्थस्य देवतान्तरत्वमापादयति । ततो द्रव्यदेवतालक्षणस्य यागस्वरूपस्य भिन्नत्वात्कर्मान्तरमिति सिद्धान्तः । तद्वद्विरोधान्न विष्णुपरत्वमिति भावः ।

विरुद्धनानार्थोपस्थापकत्वाभावेनैकवाक्यत्वभङ्गाभावात्। आकाशब्रह्मणोर्विरुद्धाश्रयानैक्याङ्गीकारेऽपि पूर्वत्रेवात्र बाधकस्य भेदव्यपदेशस्याभावाचाऽऽकाशशब्दः प्रसिद्धार्थपर इति प्रबलश्रुत्यनुसारेण चानन्तत्वादिलिङ्गानि कथंचिद्योज्यानीति सविस्तरमुपपादितम्। तदपि न क्षोदक्षमम्। 'तद्धर्मोपदेशात्' (ब्र० सू० १।१।२०) 'तल्लिङ्गात्' (ब्र० सू० १।१।२२) इत्यत्र धर्मोपदेशाल्लिङ्गादित्यनेनैव सिद्धान्तासिद्धेस्तत्पदोपादानं तदसाधारण्यलाभार्थं वक्तव्यम्। तच्च धर्मलिङ्गयोर्निरवकाशत्वरूपं रूढिबाधनार्थम्। नेन वृत्त्यन्तरेण तत्तच्छब्दः परमात्मपर इत्येतावदधिकरणप्रमेयम्। वृत्त्यन्तरं च योगो वा लक्षणा वा गौणी वा पर्यवसानवृत्तिर्वा विद्वद्रूढिर्वेत्यन्यतोऽवसेयम्। यथा 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' 'श्येनेनाभिचरन्यजेत' इत्यादौ धातुसामानाधिकरण्यात्स्तोत्रनामत्वावगमादाज्यादिपदानाम्। 'यदाजिमायुस्तदाज्यानामाज्यत्वम्' 'यथा वै श्येनो निपत्य' इत्यादिवाक्यशेषाद्यथाक्रमं यौगिकत्वलाक्षणिकत्वगौणत्वनिर्णयस्तद्वदिह पूर्वाधिकरणन्यायेनाऽऽकाशपदस्य निरवकाशत्वेन प्रबललिङ्गाद्विष्णुपरत्वनिर्णये आकाशपदप्रवृत्तिनिमित्तविवरत्वादेर्भगवदनधीनत्वेऽप्यासमन्तात्काशते प्रकाशत इत्याकाश इति योगेनापि विष्णुपरत्वसंभवादन्येषामपि योगेन लक्षणया गौण्या वृत्त्या वा तत्संभवादुक्तप्रमेयाश्रिताधिकरणशङ्कया पौनरुक्त्यपरिहाराऽयुक्त एव। न च प्राबल्यश्रुतेः श्रुतित्वबाहुल्यप्रयुक्तप्राबल्याभावे निरवकाशत्वाभावेऽयुक्ताबलस्य दुर्बलतया निरवकाशत्वरूपलिङ्गस्य बाध इति प्रमाणाश्रिताऽधिकाशङ्का युक्ता 'श्रुतिलिङ्गादिसूत्रस्य जैमिनीयस्य नियोगप्रमाणश्रुतिलिङ्गादिनिष्ठबलाबलविचारनिरूपकतामात्रपरत्वेनार्थसामान्यनिर्णायकप्रमाणविचारपरत्वाभावात्। अत एव विनियोगातिरिक्तविषयलिङ्गादिप्रमाणमन्यायविरोधेनैव न तूक्तसूत्रस्थश्रुतिलिङ्गादिरूपमिति मीमांसकव्यवहारः। तथा च श्रुतिलिङ्गाद्यो यत्र विनियोगे परस्परं विरोधः प्रसक्तो भवति तत्र श्रुत्यादिना लिङ्गादिकं बाध्यते न सर्वत्रेति पूर्वाधिकरण एव दर्शितमेव। अत एव 'आनन्दमयोऽभ्यासात्' इत्यधिकरणे विकारार्थ-

मयट्श्रुतेरभ्यस्तताया अपि निरवकाशसर्वान्तरत्वलिङ्गेन बाधो वृत्तिकारैराश्रितः । अस्तु वा श्रुतिलिङ्गादिसूत्रस्यार्थसामान्यनिर्णयोपयोगिप्रमाणविषयता । तथाऽपि श्रुतित्वमात्रप्रयुक्तप्राबल्यशङ्कायाः पूर्वाधिकरण एव निरस्तत्वाच्छ्रुतिभूयस्त्वसत्त्वेऽपि तस्य प्राबल्यप्रयोजकभूयोनुग्रहन्यायस्य विरुद्धयोः प्रमाणयोर्द्वयोः समानबलत्व एव प्रवृत्तेः । प्रकृते श्रुतेर्योगादिना सावकाशत्वालिङ्गस्य निरवकाशत्वेन द्वयोः समानबलत्वाभावान्नोक्ताधिकशङ्कासंभवः । नापि—यद्वेत्यादिनोक्ताऽधिकशङ्का युक्ता । इन्द्रशब्दस्य विष्णुशब्दसामानाधिकरण्यस्येवाऽऽकाशशब्दस्यापि 'यदेष आकाश आनन्दो न स्यादाकाशो ह वै नाम नामरूपयोर्निर्वहिता' इत्यादौ जगत्प्राणनादिहेतुत्वेन नामरूपनिर्वहकत्वादिना विशेषेण निर्णीतपरब्रह्मत्वार्थकेन शब्देन सामानाधिकरण्यदर्शनाविशेषात् । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति विशेषश्रवणस्याप्यविशेषात् । 'ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः' (ऋ० सं० १।१६४।३९) 'सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता' (तै० ३।६) 'कं ब्रह्म खं ब्रह्म' (छा० ४।१०।५) इत्यादौ निर्णीतपरब्रह्मत्वार्थकेन शब्देनाऽऽकाशपर्यायवाचिना व्योमखादिशब्दानां सामानाधिकरण्यदर्शनाच्च । अन्यथाऽनिरुद्धपरोवरीयस्त्वादिगुणस्य संभवाच्च ।

आमिक्षावरुद्धे यागे वाजिनवद्विरोधाभ्र विष्णुपरत्वमित्यादिदृष्टान्तप्रदर्शनमप्ययुक्तम् । 'तप्ते पयसि दध्यानयति । सा वैश्वदेव्यामिक्षा । वाजिभ्यो वाजिनम्' इत्युदाहरणे वैश्वदेव्यामिक्षेत्यनेन द्रव्यदेवताविशिष्टयागविध्युत्तरं वाजिभ्यो वाजिनमिति श्रूयते । तत्र वाजमन्नमामिक्षारूपं येषामस्तीति व्युत्पत्त्या वाजिपदेन विश्वेदेवाः, तेषां वाजिनसंबन्धः । तथा चाऽऽमिक्षया सह वाजिनस्यैकत्र यागे विकल्पः समुच्चयो वा । अथवाऽऽमिक्षानुनिष्पन्नवाजिनसंबन्धाद्वाजिपदस्याऽऽमिक्षायागे गौणत्वात्तदुद्देशेन वाजिदेवताया विकल्पेन समुच्चयेन वा विधिरिति पूर्वपक्षे—वाजि-

पदस्याश्वादौ रूढ्या बलीयस्याऽश्वस्योक्तेर्योगेन विश्वेदेवानुक्तेरुत्पत्तिशिष्टत्वेन प्रबलयाऽऽमिक्षया विश्वदेवदेवतया वा सहोत्पन्नशिष्टस्य वाजिनस्य वाजिना वा विकल्पाद्यसंभवादुद्रव्यदेवताविशिष्टामिक्षायागाद्विजातीययागान्तरं विधीयत इति यस्मिन्कर्मणि यो गुणो न निवेशार्हस्ततो वैजात्येन स्वान्वयितया विधेयकर्मणः स भेदक इति सिद्धान्तः कृतः । प्रकृते तु निरवकाशलिङ्गेन रूढिबाधस्य पूर्वाधिकरणेन सिद्धयाऽऽकाशपदस्य यौगिकत्वस्य वाच्यत्वादुक्तयोगार्थस्य विष्णौ विरोधाभावेन तस्य विष्णुपरत्वसंभवादृष्टान्तवैषम्यात् । किंच पूर्वतन्त्रे शब्दभेदेन कर्मभेदप्रयोजकत्वेन क्लृप्तोक्तोदाहरणदृष्टान्तेनाऽऽकाशादिशब्दार्थभेदशङ्काऽयुक्तैव । अन्यभेदप्रयोजकस्यान्यभेदाप्रयोजकत्वात् । अन्यथा विशिष्टभेदप्रयोजकस्य विशेषणभेदस्यापि विशेष्यभेदकत्वापत्तेः । देवदत्त उत्तिष्ठति शिष्यं बोधयति यजति ददाति जुहोतीत्यादावप्यर्थभेदापत्तेः ।

अथवेत्यादिनोक्ताधिकशङ्काऽपि न युक्ता । पूर्वाधिकरण एवाऽऽकाशस्य जडत्वेन बाध्यस्वरूपत्वेन जीवब्रह्मणोरिव विरुद्धांशत्यागेनोभयानुस्यूतस्वरूपाभावेनाऽऽकाशब्रह्मणोर्विरुद्धांशत्यागेनैक्यासंभवस्योक्तत्वात् । आकाशात्मना श्रुताकाशादिसर्वभूतकारणत्वानुपपत्तिरूपबाधकस्यातिस्पष्टत्वाच्च ।

एवम् 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इति वाक्यशेषश्रुतपरोवरीयस्त्वानन्तत्वादिनिरवकाशलिङ्गेनाऽऽकाशशब्दस्य विष्णुपरत्वनिर्णयाऽप्ययुक्त एव । आनन्दमयाधिकरणे श्वेताश्वतरोपनिषदः कार्त्स्न्येन शिवपरत्वप्रतिपादनेन तदन्तर्गतेन 'यस्मात्परं नापरमस्ति किंचित्' इति शिवपरेण मन्त्रेण हिरण्यगर्भादिसर्वापेक्षया परत्वज्यायस्त्वोक्तेः परोवरीयस्त्वस्य शिवसाधारणतया श्रुतिसिद्धत्वस्य तत्रैव व्यवस्थापितत्वात्तल्लिङ्गस्य 'अस्य लोकस्य का गतिरित्याकाश इति होवाच' (छा० १।९।१ ) इति वाक्यस्य तत्स्थाकाशपदस्य वा विष्णुमात्रपरत्वनिर्णयाशक्तेः । एवम्—

'अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।
तथाऽऽदिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥
उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्' ॥

इति कैवल्योपनिषद्यानन्त्यस्यापि शिवसाधारण्यावगमात्तेनाप्याकाशवाक्यस्य विष्णुपरत्वनिर्णयासंभवः । एवं

चिद्रूतस्येशतन्त्रत्वे स्यादेवाचिद्रूतस्य तत् ।
यतोऽत्यन्तपराधीनं चेतनादप्यचेतनम् ॥

अस्ति च राजा जयतीति प्रयोग इव जडगतस्य मृत्त्वादेराभिमानिदेवताधीनत्वाच्चेतनतायाम् 'मृदब्रवीत्' इत्यादिप्रयोगः । तस्माद्विवरत्वादिकमपीश्वराधीनं तथा विवरस्वभावत्वादिकमपि ।

अस्तु खं छिद्रमिति या हरीच्छा तद्वशात्प्रभः ।
छिद्रात्मकं हि सजातमन्यथा निबिडं भवेत् ॥

आकाशस्योत्पत्त्यनन्तरमपि विवरत्वं निह्नुत्य [निबिडत्वम्] संपादयितुं शक्त ईश्वर*स्तथेच्छाभावान्न संपादयति । =तथेच्छाभावादीषधिवशाल्लोकं ताम्रादेरप्यताम्रतां कुर्वन्ति । ईशस्तु नेति किं छिद्रस्याच्छिद्रताकृतेः । तस्मादन्यथाकरणाभावेऽप्यन्यथा कर्तुं शक्यतया यथेष्टविनियोगार्हताऽस्त्येव । बोधयन्ति च श्रुतिस्मृतयः स्वभावस्यापीश्वराधीनत्वम्—

स्पन्दन्ते शासनादापो भीषाऽस्मात्पवतेऽनिलः ।
नभो ददाति श्वसतां मार्गमित्यादिका इति ॥

[इति,] रीत्याऽऽकाशस्येश्वराधीनत्वेनाऽऽकाशश्रुतेर्विष्णौ मुख्यत्वोक्तिरपि न साधीयसी । कैवल्योपनिषदि शिवं प्रकृत्य—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथिवी(थ्वी) विश्वस्य धारिणी ॥

इत्याकाशस्य शिवाधीनोत्पत्तिवर्णनेनाष्टमूर्तेः शिवस्य शरीरत्वात्पूर्वोक्तरीत्या शिवस्य तदन्तर्यामिभावेनावस्थितेराका-

---

* तथेच्छाभावादिति । तथेच्छाया अभावादिति विग्रहः । = तथेच्छाभावादिति । तथेच्छाया भावात्सत्त्वादित्यर्थः ।

शस्य तत्स्वभावस्य च शिवाधीनत्वेन तदधीनत्वाद्विष्णावेव मुख्यत्वमाकाशश्रुतेरित्यस्यासिद्धेः । एवमेव विद्वद्दूदयाऽऽकाशश्रुतेर्विष्णावेव मुख्यत्वोक्तिर्हेया । शिवसाधारण्याद्विष्ण्वेकानिष्ठाविद्वदूरासिद्धेरिति दिक् ॥ २२ ॥

श्रीमच्छंकरपादाब्जभूषणे परदूषणे ।
रघुनाथकृतिर्भूयादाकाशाधिकृतावियम् ॥
शंकरानन्दतीर्थीयव्याख्ययोस्तत्त्वनिर्णये ।
यदत्र युक्तं विद्वांसस्तद्गृह्णन्तु कृपालवः ॥
इत्याकाशाधिकरणं समाप्तम् ।

---

## अथ प्राणाधिकरणम् ।

### अत एव प्राणः ॥ २३ ॥

अध्यायपादिसंगतयः प्राग्वत् । अनन्तरा त्वातिदेशिकी । यद्वा पूर्वाधिकरण आनन्त्याद्यनन्यथासिद्धं ब्रह्मलिङ्गोपोद्बलितनिर्णीतविषयानुपसंजातविरोधिप्रश्नानुरोधादाकाशश्रुतेरन्यथानयनं युक्तम् । इह च तदभावाच्छ्रुतित्यागोऽनुचित इति प्रत्यवस्थानात्प्रत्युदाहरणरूपा छान्दोग्य उद्गीथाध्याये धनाशया कस्यचिद्राज्ञो यज्ञशालायां प्रविष्टेन चाक्रायणऋषिणा स्वज्ञानख्यापनाय प्रस्तावोद्गीथप्रतीहाररूपसामभक्तिदेवताविज्ञानरहितानां भवतां मम विदुषः संनिधावार्त्विज्यं कुर्वतां मूर्धपातो भविष्यतीति शपतैव तत्तद्देवताविज्ञानं परीक्षितुं प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां ब्रूहीत्येवं पृष्टानां प्रस्तोतोद्गातृप्रतिहर्तॄणां तत्तद्देवताविज्ञानरहितत्वाद्भीतानां त प्रति शिष्यभावमुपगतानां कतमा सा देवतेत्येव त्रयाणामपि प्रश्नमुपसिच्य—' प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता ' इति प्रस्तावदेवता प्राणरूपा प्रतिपादिता । ' आदित्य इति होवाच सर्वाणि ह वा इमानि भूतानि आदित्यमुच्चैः सन्तं गायन्ति ' इत्युद्गीथदेवता । ' अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति ' इति प्रतिहारदेवता च । तत्र प्राणवाक्यं विषयः । तत्रस्थप्राण-

शब्दतात्पर्यविषयः । किं मुख्यः प्राणः, अथवा परं ब्रह्मेति । उभयत्र प्राणशब्दप्रयोगदर्शनात्संशयः । मुख्यप्राणे प्राणशब्द-प्रयोगस्तावत्प्रसिद्धतर । 'प्राणनिबन्धन हि सौम्य मनः' 'प्राणस्य प्राणम्' इत्यादौ च ब्रह्मण्यपि प्रयोगो दृश्यते । तत्र प्राणशब्दतात्पर्यविषयस्तावन्मुख्यप्राण इति युक्तम् । विना बाधकं रूढित्यागायोगात् । न च वाक्यशेषगतानन्यथासिद्ध निखिलजगत्कारणत्वादिलिङ्गात्तत्त्याग आवश्यक इति वाच्यम् । अभ्यस्यमानानुपसञ्जातविरोधिप्राणश्रुत्यनुरोधेन वाक्यशेषस्या-न्यथानेयत्वात् । न च भूयोनुग्रहन्यायेन वाक्यशेषगतानेकलि-ङ्गानुसारेणैकस्या प्राणश्रुतेरन्यथानयन युक्तमिति वाच्यम् । मुख्यप्राणस्यापि भूतसंवेशनोद्गमनाधिकरणत्वस्य श्रुतिप्रत्यक्ष सिद्धत्वात् । श्रुतिस्तावत्—यदा वै पुरुषः स्वपिति प्राण तर्हि वागप्येति प्राणं चक्षु प्राण श्रोत्रं प्राण मन. स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते' ( श० ब्रा० १० । ३ । ३ । ६ ) इत्यादिका । स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्ती नां विपरिलोप प्रबोधकाले प्रादुर्भाव इति = सार्वजनीन प्रत्यक्ष-मिति । इन्द्रियसारत्वाच्च भूतानामविरुद्धो भूतसंवेशनोद्गमनवादी वाक्यशेष इति । एतेन पूर्वाधिकरणनिर्णयाकाशवाक्य इवात्रापि तल्लिङ्गाद्ब्रह्मण एव ग्रहणं युक्तम् । इहापि वाक्यशेषे भूतसंवे-शोद्गमनं पारमेश्वरं कर्म प्रतीयत इति पौनरुक्त्यशङ्कानवकाश । अधिकोक्तशङ्कानिरसनार्थत्वादतिदेशोक्तेः सार्थकत्वात् ।

ननूक्तसवर्गविद्यागतेन वाक्येन वागादीनामेव प्राणे लयो निरूप्यते न सर्वभूतानाम् । सोऽपि न मुख्यः । अपि तु प्राण-वृत्तौ विद्यमानाया वागादिवृत्त्यभावमात्रेणैवौपचारिकः । प्रत्य-क्षसंवादोऽपि तावत्येव । सर्वाणीत्याद्युक्तवाक्ये च प्राणे सर्वभू तलयः प्रतिपाद्यते । तथा च भूतशब्दस्य प्राणिमात्रपरत्व आका-शादिसर्वभूतपरत्वे, भवन्तीति भूतानीति व्युत्पत्त्या कार्यमात्रप-

---

= सार्वजनीनमिति । सर्वश्चासौ जनश्च सर्वजन । तत्र साधु सार्वजनी-नम् । 'प्रतिजनादिभ्य खञ्' इत्यनेन खञ् ।

त्त्वे, वा नात्र वायुविकारप्राणपरिग्रहो युक्तः। एतेन भूतसार-भूतेन्द्रियलयाभिधानेन भूतलयोऽर्थाल्लभ्यत इति भाष्योक्तं निरस्तम्। मुख्यप्रलयसंभवस्योक्तत्वात्। यथाकथंचिद्गौणार्थग्रहणे च प्रमाणाभावात्। न च प्राणश्रुत्यनुसारेण लिङ्गान्यन्यथानयनं युक्तम्। उपक्रमगतचेतनवाचिदेवताश्रुत्यनुसारेण प्राणश्रुतेरेवान्यथानेयत्वात्। न चान्नादित्ययोः प्रस्तावदेवतान्तरमुद्गीथप्रतीहारदेवतयोर्निर्देशात्तयोरब्रह्मत्वात्तत्प्रायपाठानुसारेण प्राणपदस्याप्यब्रह्मपरत्वं भाष्योक्तं युक्तम्। लिङ्गविरोधे प्रायपाठस्यानिर्णायकताया ईक्षत्यधिकरण एवोक्तत्वादिति चेत्।

अयमत्र पूर्वपक्षाभिप्राय—प्रथमश्रुताऽपि देवताश्रुतिरभ्यस्तबलवत्प्राणश्रुत्यनुरोधेनाचेतनपरैव वाच्या। भूयोनुग्रहस्य न्याय्यत्वात्। न चैव तनैव न्यायेन प्राणश्रुतिरप्यन्यथा नेयेति वाच्यम्। प्राणश्रुतीनामपि भूयस्त्वेन 'त्यजेदेकम्' इति न्यायानवतारात्। पूर्वत्र च श्रुतितो लिङ्गानां भूयस्त्वेन लिङ्गानुसारेण श्रुतीनामन्यथानयनमुचितमुक्तम्। अत्र च न तथा। अब्रह्मान्नादित्यप्रायपाठश्चाधिकः। स च बलवत्या प्राणश्रुत्योपोद्बलितः। पूर्वत्र च न बलवती श्रुतिरित्यसकृदावेदितमेव। न च तत्रापि देवताश्रुत्या चेतनवाचिन्या ब्रह्मपरत्वानिर्णय इति युक्तम्। अभ्यस्तान्नादित्यश्रुतेरेव ततोऽपि बलवत्त्वाद्देवताश्रुत्या चेतनत्वावगमेऽपि तत्र ब्रह्मत्वसाधकलिङ्गाभावेनाब्रह्मप्रायपाठस्य निराबाधत्वात्। 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्राचेतनेऽपि तेजोबन्नादौ देवताशब्दप्रयोगाद्देवताशब्दस्य चेतनवाचित्वैकान्त्यासिद्धेः। किंच त्यज्यमानहविरागुद्देश्यत्वलक्षणं देवतात्वम्। न चेतनत्वघटितं तन्नियतं वा। पूर्वकाण्डे जडस्यापि मन्त्रादेर्देवतात्वनिर्णयात्। 'साऽस्य देवता' (पा० सू० ४ २।२४) इति पाणिनिसूत्रेऽपि देवतापदमुक्तलक्षणदेवतात्वपरमेव। अतोऽग्न्यादिशब्दानां देवतात्वेऽप्यग्न्यादिशब्दानामाग्नेयमित्यादिदेवतातद्धितोपपत्तिः। एवं च न तदनुरोधेनान्नादित्यादिश्रुत्यन्यथानयनं युक्तम्। प्रत्युत 'सर्वाणि

ह वा इमानि भूतान्यादित्यमुच्चैः सन्त गायन्ति' (छा० १।११।७) 'सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति' इत्यब्रह्मलिङ्गबोधकवाक्यशेषानुसारेण तन्मुख्यार्थ एव ग्राह्यः । 'सर्वाणि ह वा इमानि भूतान्यादित्यमेवोच्चैः सन्तं गायन्ति' इत्यत्राऽऽदित्यकर्मकं गान प्रतीयते । तत्राऽऽदित्यशब्दोऽचेतनमण्डलपर एव । उच्चैः सन्तामिति तल्लिङ्गात् । श्रुतिभञ्जकब्रह्मलिङ्गाभावाच्च । एवम् 'अन्नमेव प्रतिहरमाणानि जीवन्ति' इत्यत्राप्यन्नशब्द ओदनपर एव । भिस्सा स्त्री भक्तमन्धोन्नमिति कोशात् । एव च प्राणश्रुत्यनुसारेण लिङ्गस्यान्यथानयने स्थिते कीदृग्विधः प्राणाधिकरणक. सवेश कीदृग्विधश्चोद्गमकस्तदन्वयीनि च कानि सर्वाणि भूतानीत्यपेक्षायामुक्ताधिकाशङ्कार्थक सवर्गविद्यागत वाक्य प्रत्यक्ष चोदाहृतं श्रीमद्भाष्यकारैः । न च 'प्राणमेवाभिसविशन्ति' इत्यवधारण प्राणस्याब्रह्मत्वे विरुध्येत, सुषुप्तिदशाया ब्रह्मणोऽपि संवेशाधारत्वादन्ययोगव्यवच्छेदकैवकारानुपपत्तेरिति वाच्यम् । 'अन्नमेव प्रतिहरमाणानि जीवन्ति' इति समभिव्याहृतवाक्यशेषे ह्येवकारस्य नान्ययोगव्यवच्छेदार्थकत्व सम्भवति । उक्तकोशावगतान्नशब्दमुख्यार्थौदनातिरिक्तापूपशाकादेरपि जीवनोपयोगितया प्रतिहरणीयाना सत्त्वात् । अतस्तत्रैवकारस्यायोगव्यवच्छेदार्थकत्वमभ्युपेत्य जीवन्त्येवेत्यन्वयो वाच्यस्तद्वत्प्राणमभिसंविशन्त्येवेत्येवकारस्यायोगव्यवच्छेदार्थकत्वेऽनुपपत्त्यभावात् । एवमन्नादित्यपर्याययोः सर्वपदमपि संकुचितमेव वाच्यम् । वृक्षादिभिः प्राणिभिरन्नस्यानाहरणात्तेषामादित्यगातृत्वाभावाच्च । तथैवात्रापि सर्वपदमिन्द्रियादिषु संकुचद्वृत्त्येव वाच्यमिति वायुविकार एव प्राण इति पूर्वपक्षे । सिद्धान्तः—अत एव प्राण इति । उक्तप्राणशब्दितं ब्रह्मैव सर्वभूतसंवेशनोद्गमनाश्रयत्वब्रह्मलिङ्गात् । न च प्राणश्रुतेरुक्तरीत्या बलवत्त्वम् । देवताश्रुतिद्वयस्य सर्वपदसंकोचस्यैवकारव्यत्ययस्य संविशन्त्यभ्युज्जिहत इत्यनयोरप्रसिद्धार्थलाक्षणिकत्वस्य च कल्पनमपेक्ष्य भूयोनुग्रहन्यायेन श्रुतिलिङ्गानुरोधेन श्रुतेरेवान्यथानेयत्वात् । यच्चोक्तं त्यज्यमानहविर्देवत-

त्वमात्रं देवतात्वमिति न देवताश्रुतिबाध इति । तदसत् । कोशा-दावमरा निर्जरा देवा इति चेतन एव तद्रूढेरुक्ततया क्वचिदचेतने देवताशब्दप्रयोगस्य लाक्षणिकत्वात् । देवशब्दादेव हि स्वार्थे तल्प्रत्यये कृते देवताशब्दो निष्पन्नश्चेतनवाची, न चरमपठितप्राणश्रुत्य-नुसारेण लाक्षणिक इति वक्तुं युक्तम् । उक्तार्थस्य च कथंचि द्योगलभ्यत्वेऽपि योगाद्रूढेर्बलीयस्त्वाद्रूढ्यर्थचेतनाश्रयणमेव युक्तम् । उक्तधर्मस्य रूढ्यवच्छेदकत्वेऽपि प्रयोगप्राचुर्यान्मीमांसकमते पङ्कजादिपदात्पद्मस्यैव, योगाद्धेन्वादिपदाद्दानकर्मार्थ-काच्चेतनगवादेरेव झटित्युपस्थितया त्वन्मत उपस्थितत्यागा-नुपस्थितकल्पनयोर्दुर्वारत्वात् । श्रुतेः प्राबल्येऽपीदमेव तन्त्र यल्लक्षणाश्रयण उपस्थितत्यागेनानुपस्थितकल्पनं तच्छ-क्तिस्थलेऽपि तुल्यम् । शीघ्रमन्दप्रवृत्त्योस्तुल्यत्वात् । अत एव लक्षणात्वाविशेषेऽपि निरूढलक्षणात आधुनिकलक्षणाया दौर्ब-ल्यम् । एतेन प्रधानप्राणश्रुत्यनुरोधेनानेकमप्यप्रधानमन्यथा नेयमिति कस्यचित्कुचोद्यमपास्तम् । देवताश्रुत्यनुरोधेन चेत नस्यैव प्राधान्यावगमात् ।

नन्वन्नादित्यपर्याययोरपि देवताशब्दः पठ्यते । तस्य च न चेतनपरत्वम् । अपि त्वादित्यमण्डलपरत्वमेवौदनपरत्वमेव च वक्तव्यम् । न च तत्रापि प्रथमश्रुतदेवतापदानुसारेणान्नादि-त्यपदयोरेव तदभिमानिदेवतापरत्वं कुतो नावगम्यत इति शङ्क्यम् । सर्वभूतगानस्य प्रसिद्धे मण्डल एव संभवात् । देव-ताया लोकाप्रसिद्धत्वेन सर्वभूतगानकर्मत्वानुपपत्तेः । एवं सर्व-भूताभ्यवहार्यत्वमपि न देवताया संभवति । ततस्तत्र देवता शब्दो लाक्षणिक एव । तत्प्रायपाठात्प्रकृतेऽपि देवताशब्दो लाक्षणिको भविष्यतीति चेत् । न । तत्र वाक्यशेषस्य सर्वात्मना चेतनेऽनुपपत्त्या प्रथमश्रुतदेवतापदस्य लाक्षणिकत्वाभ्युपगमेऽपि देवतापदस्य चेतनब्रह्मपरत्वेऽपि प्रकृते वाक्यशेषस्य स्वारस्ये-नान्वयोपपत्तौ वाक्यशेषविरोधिनः स्थानस्यानादरणीयत्वात् । किंच ' सर्वाणि ह वा इमानि भूतानि ' इत्यत्र भूतपदं भव-न्तीति भूतानीति व्युत्पत्त्या सर्वकार्यमात्रपरम् । आदित्यान्नवाक्य-

शेषे प्राणिनिकायपरतया प्रायपाठानुरोधात्तत्परं वा महाभूतपरं वा । सर्वथा भूतसंवेशनोद्गमनाश्रयत्वं मुख्यप्राणेऽसमञ्जसमेव । आद्यपक्षे तस्य स्पष्टत्वात् । द्वितीयेऽपि सुषुप्तिदशायामेकस्मिन्प्राणे सर्वप्राणिलयस्य गौणस्याप्यभावेन व्यक्तिसाकल्यमादाय तस्य वक्तुमशक्यत्वात् । तत्तत्प्राणे तत्तत्प्राणिसंवेशनविवक्षायां च सर्वपदासामञ्जस्यम् । तस्य सर्वं पटो रक्त इतिवदवयवसाकल्यपरत्वे च रूढित्याग एव । शरीरमारभ्य चेतनपर्यन्तस्य प्राणितया चेतनेन्द्रियसंवेशनस्य यथाकथंचिदुक्तु शक्यत्वेऽपि शरीरांशे वृत्तिलयस्याप्यभावेनावयवसाकल्येन लयासंभवात् । तृतीयेऽपि महाभूतलयासंभवो वायुविकारे प्राणे स्पष्ट एव । 'अथास्मिन्प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति' ( कौ० ३ । ३ ) इत्यत्रापि न मुख्य प्राणशब्दार्थः । अपि तूक्तन्यायेन ब्रह्मैवेति ।

निबन्धे तु—×'प्रस्तोतर्या देवता' ( छा० १ । ११ । ४ ) इत्युपक्रम्य श्रूयते 'कतमा सा देवता प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति' ( छा० १ । ११ । ५ ) इति । तत्र प्राणशब्दः + प्रसिद्धप्राणपर इति प्राप्ते ब्रह्मपर एव सर्वभूतसंवेशनादिब्रह्मलिङ्गादिति

---

× 'प्रस्तोतर्या देवता' इत्युपक्रम्येति । अत्र इत्युपक्रम्य' इति पदम् 'कतमा सा' इत्यत्रत्यतच्छब्दपरामर्शविषय दर्शयितुमुक्तम् । 'प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता' ( छा० १ । ११ । ४, ५ ) इति छान्दोग्यस्थप्रथमाध्यायगतप्राणशब्दो विषय इति भावः ।

+ प्रसिद्धप्राणपर इतीति । वायुवृत्तिपरो ब्रह्मपरो वेति संशये प्राणशब्दस्य प्रसिद्धप्राणे रूढत्वेन प्रथमत्वेनानुपसंजातविरोधित्वेन च प्रबलत्वात्तदनुसारेण चरमस्योपसंजातविरोधित्वेन दुर्बलस्य सर्वभूतसंवेशनादेर्नेतव्यत्वाद्वायुवृत्तिरूपप्राणपर इति प्राप्ते—प्राणशब्दादपि प्रथमत्वेनानुपसंजातविरोधिना 'कतमा सा देवता' इति प्रश्नस्य चेतनवाचिदेवतापदमहिम्ना ब्रह्मविषयत्वात्प्रश्नानुसारेण परिहारस्य व्याख्येयत्वाद्रूढ्या प्राणपरिहारानुरोधेन प्रश्नव्याख्याने च प्राणे सर्वभूतसंवेशनादिलिङ्गानुपपत्तेर्ब्रह्मपर एवेति सिद्धान्त इत्याशयः ।

सिद्धान्तः । * न चैव पूर्वेणेदं गतार्थम् । ' यदा वै पुरुष. स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षु ' इत्यादिश्रुतेः स्वापकाले प्रसिद्धप्राणे सर्वभूतसारेन्द्रियलयाद्युक्तिद्वारा सर्वभूतलयपराया मानान्तरानुगृहीतत्वेन प्रबलत्वात् । ब्रह्मणि भूतलयबोधिकायाश्च 'यतो वा इमानि' इति श्रुतेस्तदननुगृहीतत्वेन दुर्बलत्वात् । प्रस्ताववाक्यमपि प्रबलानुसारेण प्रसिद्धप्राणे सर्वभूतलयादिपरं न तु ब्रह्मणि प्रसिद्धभूतलयपरम् । यद्वा =प्रबलस्वापवाक्यानुसारेण प्रस्तावनवाक्यमपि प्रसिद्धप्राण इन्द्रि

---

ननु आकाशाधिकरण एवास्यार्थस्योक्तत्वान्नेदमारम्भमित्याशङ्कयाभ्याधिकया शङ्कयाऽऽरम्भ इत्याशयेनाऽऽशङ्कच परिहरति—* न चैव पूर्वेणेदमित्यादिना । अयमाशय—' प्रस्तोतर्या देवता ' इत्यादि प्रस्तावववाक्य स्वापवाक्यानुसारात्प्रसिद्धप्राणे भूतलयादिपरम्, ' यतो वै ' इत्यादिकारणवाक्यानुसाराद्ब्रह्मणि वेति चिन्तायाम्—' यदा वै पुरुषः स्वपिति ' इति स्वापवाक्यानुसारात्प्राण एव । न च स्वापवाक्य न प्रसिद्धप्राणपरमिति वाच्यम् । स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्तीना परिलुप्यमानत्वेन प्रबोधकाले प्रादुर्भाववत्त्वेन च प्रत्यक्षेणानुमानेन च सभवात् । ननु स्वापवाक्य इन्द्रियाणा लय उच्यते। प्रस्तावववाक्ये तु भूतानामिति किं केन सगतमिति चेत्। उच्यते—भूतसारत्वादिन्द्रियाणा तद्द्वारा सर्वभूतलयप्रतिपादने तात्पर्यान्नोक्तदोष । न च ' यत्प्रयन्त्यभिसविशन्ति ' इति ब्रह्मणि सर्वभूतलयप्रतिपादककारणवाक्यानुसारेण प्रस्तावववाक्य ब्रह्मणि सर्वभूतलयपरमिति किं न स्यादिति वाच्यम् । स्वापवाक्यस्य प्रत्यक्षादिमानान्तरसवादित्वेन प्रबलत्वात्कारणवाक्यस्य ब्रह्मणि भूतलयस्य प्रत्यक्षाद्यप्रसिद्धतया तद्रहितत्वेन दुर्बलत्वात्प्रस्तावववाक्य स्वापवाक्यानुसारेण प्राण एव सर्वभूतलयादिपर बोध्यमिति ।

पूर्वं स्वापवाक्य इन्द्रियपद भूतपरमुपेत्यैकार्थत्वमुक्तम् । इदानीं प्रस्तावववाक्यगतभूतपदमेव भूतसारेन्द्रियपरम् । स्वापवाक्यस्योक्तादिशा बलवत्त्वादित्याशयेन पक्षान्तरमाह— =यद्वा प्रबलेति । तथा चेन्द्रियलयाद्याधारत्व वायुवृत्तेरेवेति प्रस्तावववाक्य प्रसिद्धप्राणपरमेवेति भावः ।

यमात्रलयादिपरम् । + 'आकाशाद्वायु' इत्यादिवाक्यं तु न मानान्तरानुगृहीतमिति तदनुसारेण 'सर्वाणि भूतान्याकाशादेव' इति वाक्यं न वाय्वादिमात्रकारणभूताकाशपरमिति । तदुक्तं भामत्याम्—

> अर्थे श्रुत्यैकगम्ये हि श्रुतिमेवाऽऽद्रियामहे ।
> मानान्तरावगम्ये हि तद्वशात्तद्व्यवस्थितिः ॥ इति ।

पूर्वस्मादभ्यधिका शङ्का—पुंवाक्ये मानान्तरानुग्रहतदभावाभ्यां प्राबल्यदौर्बल्ये स्तः । अपुंवाक्ये त्वनाशङ्कितदोषे न ताभ्यां ते स्त । तदुक्त भामत्याम्—

> पुंवाक्यस्य बलीयस्त्व मानान्तरसमागमात् ।
> अपौरुषेयवाक्ये तत्सगतिः किं करिष्यति ॥ इति ।

तन्निरासार्थत्वादस्येति रीत्याऽधिकरणरचनोक्ता ।

यत्तु चन्द्रिकायाम्–अन्ये त्वित्यादिनोक्तनिबन्धरीत्या पूर्वपक्षसिद्धान्तावनूद्य तन्न, पूर्वपक्षे प्राणस्य जडवायुत्वे 'कतमा सा देवता' इति प्रश्ने प्रतिवचने च 'सैषा देवता' इति च देवताशब्दायोगात् । तदभिमानिचेतनत्वे च 'वायुविकारस्य पञ्चवृत्तेः प्राणस्योपादानं युक्तम्' इत्यादित्वदीयभाष्यविरोधः। स्वापवाक्ये मानान्तरसंवादस्यैवाभावात्त स्वीकृत्य पूर्वपक्षोत्तरपक्षोक्त्ययोगाच्च । तथा हि—

> न हि स्वापे पृथिव्यादेरक्षाणां वा विनाशधीः ।
> प्रत्यक्षादनुमानाद्वा देवतायां जडेऽथवा ॥

न तावत्स्वापकाले जडे देवताया वा महाभूतानां लयादौ मानान्तरसंवादः । तेषां स्वापकालेऽप्यलीनानामेवानुभवात् ।

---

ननु यथा प्रबलस्वापवाक्यानुरोधेन प्रस्तावत्राक्यं प्रसिद्धप्राणपरमिति शङ्काऽत्रोच्यते तथा पूर्वत्रापि सभूतवाक्यानुरोधेन 'आकाशादेव' इत्यत्राऽऽकाशपदं भूतपरमिति शङ्का स्यादतो नेयमभ्यधिका शङ्केत्याशङ्क्य सभूतवाक्यस्यैतद्बाधने प्राबल्याभावादित्याह— + आकाशाद्वायुरिति ।

+ दृष्टिसृष्टिवादे च तदा वायुविकारादेरप्यभावेन तत्र भूतक्ष याबोगात् । नापि स्वापकाले जडे देवतायां वेन्द्रियाणां लये प्रत्यक्षसंवादः । तेषामतीन्द्रियत्वात् । न च स्वापकाले वायुवृत्तेरलोपादिन्द्रियादिवृत्तीनां च लोपात्तत्र तेषां लयोऽनुमीयत इति वाच्यम् । त्वया जन्मादिसूत्रे ब्रह्मण उपादानत्वेऽपि श्रुतिसवाद्यनुमानानामुक्तत्वात् । यस्मिन्सव्यापारे सति यन्निर्व्यापारं तत्तत्र लीयत इति व्याप्त्यभावाच्च । पूर्वं येनैव दृष्टं तेनैव पश्यामीति प्रत्यभिज्ञाविरोधाच्च । 'स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्त एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते' (प्र० ४ । ७) इति प्रकृत्य 'चक्षुश्च द्रष्टव्यं श्रोत्रं च श्रोतव्यम्' (प्र० ४ । ८) इत्यादिना सुषुप्तौ चक्षुरादीनां मनादावस्यैवोक्तत्वाच्च । किंचाऽऽकाशाद्वायूत्पत्तिरपि मानान्तरसंवादिनी । अवकाशात्पवनस्य, पवनाच्च फूत्काराद्दहनस्य, दहनाच्चोष्मणः स्वेदस्य, वृष्टितः पार्थिवपदार्थानामुत्पत्तिदर्शनाच्चाऽऽकाशवाक्यात्प्राणवाक्येऽभ्यधिका शङ्का । यद्यपि भाष्ये प्रत्यक्षसंवादोऽभ्यधिकाशङ्काप्रयोजकत्वेन कण्ठतो नोक्तस्तथाऽपि प्रत्यक्षं चैतदित्याद्युक्तस्यवैयर्थ्याय तस्याभ्यधिकाशङ्काप्रयोजकत्वे तात्पर्यं वाच्यम् । अत एव टीकायाम् 'अर्थे श्रुत्यैकगम्ये हि' इत्युक्तमिति चन्द्रिकाभिप्रायः । न च 'कतमा सा देवतोद्गीथमन्वायत्ता। आदित्य इति होवाच' (छा० १।११।४) इत्यादिनोद्गीथादावादित्यादेरब्रह्मण एव देवतात्वोक्त्या तत्संनिहिते प्रस्तावेऽप्यब्रह्मण एव देवतात्वमित्यभ्यधिकाशङ्का भाष्योक्ता युक्ता । पूर्वाधिकरणेऽपि 'अपां का गतिरित्यसौ लोक इति होवाच' (छा० १।८।५) इत्यादिकेनाब्रह्मण एव गतित्वेनोक्ततया तत्संनिधानात् 'अस्य लोकस्य का गतिः' इति वाक्येऽप्याकाशस्याब्रह्मत्वं युक्तमिति साम्यात् । यदपि

---

ननु दृष्टिसृष्टिपक्षे सर्जकदृष्टेरभावात्कथमेतदित्याशङ्क्याऽऽह— + दृष्टिसृष्टिवादे चेति । अयमाव —यस्मिन्पक्षे 'यावती दृष्टिस्तावती सृष्टिः' इत्युच्यते स दृष्टिसृष्टिवादः । एवं चास्मिन्पक्षे स्वापकाले वायुविकारादेरप्यभावेन तत्र भूतक्षयस्य सुतरामयोग्यादिति ।

'अर्थे श्रुत्यैकगम्ये' इत्युक्तिनिरासाय 'पुंवाक्यस्य' इत्युक्तं टीकायाम् । तदपि न ।

> अपुंवाक्यद्वयेऽप्येकेनान्यानुसरणे ध्रुवम् ।
> कर्तव्ये सति क्लृप्तत्वात्संवाद्येवानुरुध्यताम् ॥

तथा हि—प्रमाणभूतेषु पुंवाक्येषु प्रत्यक्षादौ च संवादिन एवानुसरणीयत्वं क्लृप्तमितीहापि तथैव युक्तम् । अर्थाबाधरूप प्रामाण्यस्य संवादेन दार्ढ्यात् । अनपेक्षत्वस्य च दैवात्संवादेनाहानेः । सप्रयोजनत्वाय प्रस्तावभाक्यस्यापूर्वार्थत्वे स्वापवाक्येऽपि तत्प्रसङ्गात् । स्वापवाक्यस्याप्यभिमानिदेवतापरत्वेऽपूर्वार्थत्वसंभवाच्च । अनाशङ्कितदोषत्वं तु द्वयोरपि प्रामाण्यप्रयोजकम् । न त्वन्योन्यमननुसरणम् । अन्यथा श्रुत्या श्रुत्यन्तरसंवाद उपक्रमादिकं चाननुसरणीयं स्यात् । मानान्तरविरोधश्च न परिहार्यः स्यात् । उक्तं च भामत्यामपि—यद्यपि श्रुतयः स्वतःप्रमाण तयाऽनपेक्षास्तथाऽपि मानान्तरोपनीतार्थवशेन व्यवस्थाप्यन्त इति । तस्मात्परेषामधिकरणं न युक्तमिति दूषणमुक्तम् । तत्रोच्यते—यदुक्तम् 'चेतनवाचिदेवताशब्दसंनिधानान्न प्राणो वायुविकार इति पूर्वपक्षोदयः' इति तत्पूर्वपक्षेऽचेतनेऽपि देवताशब्दप्रयोगोपपादनेन पूर्वपक्षाभिप्रायवर्णनात्प्रागेव निरस्तम् । अभिमानिचेतनपरं प्राणपदमिति तु नास्मदभिमतपूर्वपक्ष । येन भाष्यं विरुध्येत । अत्रोद्गीथप्रतिहारयोः सामभक्त्योर्ब्रह्मणोऽन्ये आदित्यश्चान्नं च देवते अभिहिते कार्यकारणसंघातरूपे तत्साहचर्यात्प्राणोऽपि कार्यकारणसंघातरूपदेवतात्मा भवितुमर्हतीत्यादिवाचस्पतिकल्पतर्वोस्तदुक्तिस्तूक्तरीत्या वायुविकारपूर्वपक्षे चेतनवाचिदेवताश्रुतित्यागाद्बिभ्यता केनचिद्यद्यादित्यपदयोरपि देवतापरत्वमभ्युपेत्यात्रापि प्राणाभिमानिदेवता प्राणशब्देनोच्यत इत्युच्येत तदाऽपि पूर्वपक्षनिरासायैव, न तु तत्र निर्भरः । अत एव भामत्यां पूर्वपक्षकोटिप्रदर्शनावसर उत वायुविकारवचन इति सिद्धान्तकोट्युल्लेखेऽपि न वायुविकार इति पूर्वपक्षोपसंहारेऽपि तस्माद्वायु विकार एवात्र प्राणशब्दार्थ इति सिद्धान्तोपसंहारेऽपि तस्मात्प्र-

एवावभार्त्कि प्राणशब्दाभिधेयब्रह्मदृष्ट्यैवोपासीत न वायुविकार-दृष्ट्येत्युक्तम् । कल्पतर्वादौ एवंच प्राणाभिमानिदेवता लक्ष्ये-तेत्युक्त्याऽनिर्भर एव सूचितः । परिमले एवाक्षेपसमाधाना-भ्यामयमर्थः स्पष्ट एवोक्तः। अन्यत्रापि तथैवेति न किंचिदेतत् ।

स्वापवाक्य इत्यादिकं च वाचस्पतिकल्पतर्वोरभिप्रायानवबो-धनिबन्धनमेव । तथा हि—'यदा वै पुरुषः स्वपिति प्राण तर्हि वागप्येति' इत्यादावप्यय. सूक्ष्मरूपेणावस्थानरूपो विवक्षितः, न त्वात्यन्तिकलयरूपः । स च नासंभवी । वृत्त्यात्मना परि-णतानां वागादीनां स्वापकाले वृत्तिविगमेन सूक्ष्मरूपेणावस्था-नस्य सर्वसिद्धत्वात् । जले लवण लीनमासीदित्यादौ लवणा-देरात्यन्तिकनाशाभावेऽपि लयव्यवहारदर्शनात् । न च ध्वंस एव तादृशव्यवहारविषयः । सूक्ष्मरूपातिरिक्तस्य ध्वंसस्य तादृशस्थलेऽनभ्युपगमात् । प्रपञ्चितं चैतत्सत्कार्यवादनिरूपणेऽ-द्वैतचन्द्रिकायां ब्रह्मानन्दैः ।'सर्वाणि ह वा इमानि भूतानि प्राणमे-वाभिसंविशन्ति' (छा० १।११।५) तत्राभिसंविशेरप्ययमेवार्थः । यत्प्रयन्त्यभिसंविशन्तीत्यादौ तेन लयाभिधानात् । अस्ति चात्रापि सः। प्राणवाक्ये 'ह वै' इति प्रसिद्धतरवाभिर्देशात्प्रसिद्ध्यातिश-यद्योतनाय भाष्ये श्रुतिप्रत्यक्षरूपप्रमाणद्वयसंवाद उक्त । न चैवं वागादिलयस्य प्रत्यक्षसिद्धत्वेऽपि न भूतलयप्रसिद्धिरिति वाच्यम् ।'यदा वै पुरुषः स्वपिति प्राण तर्हि वागप्येति' इत्यादौ वागाद्यप्ययोक्त्या तदधीनवृत्तिकस्य भूतशब्दाभिधेयचेतनप्राणि वर्गस्य तल्लाभात् । चेतनस्यापि हि वृत्त्यभिव्यक्तिदशायां स्थौ-ल्यमापन्नस्य स्वाप उपाधिलयात्सूक्ष्मता संभवत्येव । 'यदा वै पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति' इति श्रुतेः । तस्यां श्रुता सपत्तिरप्यय एवेति 'स्वाप्ययात्' (ब्र० सू० १ । १ । ९ ) इति सूत्रे सिद्धान्तिनैव वर्णितम् । आदि-त्याप्रस्तावे गानान्नाभ्यवहरणलिङ्गाद्भूतपदस्य चेतनप्राणि-विशेषपरत्वात्तत्साहचर्यात्प्राणवाक्येऽपि भूतपदस्य चेतनप्रा-णिविशेषपरत्वमित्याशयस्य पूर्वमेव वर्णितत्वात् । एवं च भूत शब्दोपात्तचेतनप्राण्यभिसंवेशनमुक्तरूप मुख्यमाण उपपद्यत

एव । श्रुतिप्रत्यक्षसंवादादबाधित चेति सिद्धेऽभ्यस्तप्राणश्रुते-र्मुख्ये प्राणे संभवता 'ह वै' इति प्रसिद्धवत्तया निर्दिष्टेन श्रुतिप्रत्यक्षसंवाददृढीकृतेन च भूताप्ययेन मुख्यार्थोत्सर्गस्यावचन-प्रयुक्तम् । आकाशश्रुतेश्च 'ह वै' इति प्रसिद्धवन्निर्देशेऽपि ब्रह्मणि भूतकारणत्वप्रसिद्धेराकाशे वाय्वादिकारणतातः प्रसि द्ध्यतिशयो न संभवति । द्वयोरपि श्रौतत्वात् । असंदिग्धप्रमा-णान्तरस्याप्रवृत्तेश्चेत्यभ्यधिकशङ्कयाऽऽचार्यवाचस्पतिभिरधिक-रणान्तरारम्भस्योपपादित्वेन तत्र वायुविकारे पृथिव्यादिल-याभावस्याकिंचित्करत्वेन तदुक्तेर्निबन्धार्थानवबोधविजृम्भित-त्वस्य विदुषां स्पष्टत्वात् । यच्च—वाचस्पत्युक्तमर्थं दूषयि-तुमुत्सुकेन दृष्टिसृष्ट्यभिप्रायेण भूताप्ययोपपादनमाशङ्कितम् । तन्न युक्तम् । अज्ञानानेकतामते + दृष्टिसृष्टिपक्षस्यानभ्युपगमा-

---

+दृष्टिसृष्टिपक्षस्यानभ्युपगमादिति । अत्रेदं बोध्यम्—वेदान्तशास्त्रे जीवे-श्वरव्यवस्थाप्रतिपादकाश्चत्वारः पक्षा वर्तन्ते—आभासवादः, प्रतिबिम्बवादः, अवच्छेदवादः, एकजीवाख्यापरपर्यायो दृष्टिसृष्टिवादश्चेति । तत्र स्वरूपतो मिथ्याभूतं प्रतिबिम्बमिति यो वादः स आभासवादः । स्वरूपतः सत्यं प्रति-बिम्बत्वरूपेण मिथ्याभूतं बिम्बरूपेण प्रतिबिम्बमिति यो वादः स प्रतिबिम्बवादः । अवच्छेदोऽन्तःप्रवेशः । तद्युक्तोऽवच्छिन्नः । यथा जलेऽन्तःप्रविष्टमाकाशं जलावच्छिन्नमित्युच्यते । तद्वज्जीवस्वरूपमिति यो वादः सोऽवच्छेदवादः । तथा च श्रुतिः—'घटसंवृतमाकाशं नीयमाने घटे यथा । घटो नीयेत नाऽऽकाशं तद्वज्जीवो नभोपमः' इति । एक एव जीवो न तु नानेति यो वादः स एकजीववादः । अस्मि-न्पक्षे यावती दृष्टिस्तावती सृष्टिरिति पर्यवसानाद्दृष्टिसृष्टिवाद इत्युच्यते । तत्राऽऽभासवादो वार्तिककाराणां संमतः । तथा हि—अज्ञानोपहित आत्माऽ-ज्ञानतादात्म्यापन्नः स्वचिदाभासाविवेकादन्तर्यामी साक्षी जगत्कारणमिति क-थ्यते । बुद्ध्युपहितश्च तत्तादात्म्यापन्नः स्वचिदाभासाविवेकाज्जीवः कर्ता भोक्ता प्रमातेति चोच्यते । प्रतिदेहं च बुद्धीनां भिन्नत्वात्तद्गतचिदाभासभेदेन तद-विविक्तं चैतन्यमपि भिन्नमिव प्रतीयते । अज्ञानस्य तु सर्वत्राभिन्नत्वात्तद्गत चिदाभासभेदाभावात्तदविविक्तसाक्षिचैतन्यस्य न कदाचिदपि भेदभानम् । अ स्मिंश्च पक्षे तत्त्वमादिपदेषु जहल्लक्षणैव । साभासस्योपाधेर्हानात् । आभास-स्यापि जडाजडविलक्षणत्वेनानिर्वचनीयत्वात् । तदुक्तं संक्षेपशारीरके—'सा-

भासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तदाऽहंशब्दोऽहंकारवाची भवति तु जहती लक्षणा तत्र पक्षे ' इति । न चाऽऽभासस्यैव बद्धत्वात्केवलचैतन्यस्य मुक्तत्वाद्बन्धमोक्षयोर्वैयधिकरण्यं स्वनाशार्थं प्रवृत्त्यनुपपत्तिश्चेति वाच्यम् । केवलचैतन्यस्यैवाऽऽभासद्वारा बद्धत्वाभ्युपगमात् । तदुक्तं वार्तिककारैः—'अयमेव हि नोऽनर्थो यत्संसार्यात्मदर्शनम्' इति । तेन शुद्धचैतन्यस्याऽऽभास एव बन्धः । तन्निवृत्तिश्च मोक्ष इति न किंचिदसमञ्जसम् । अथवाऽऽभासाविविक्तचैतन्यमपि तत्त्वमादिपदवाच्यम् । तेन वाच्यैकदेशस्यात्यागादस्मिन्पक्षे जहदजहल्लक्षणैवेति न कोऽपि दोष इति । प्रतिबिम्बवादस्तु विवरणकाराणां संक्षेपशारीरककाराणां च संमतः । तथा हि—तत्राज्ञानोपहितं बिम्बचैतन्यमीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीव इति विवरणकाराः । स्थूलावस्थं मनोऽन्तःकरणम् । सूक्ष्मावस्थं मनस्तत्संस्कारभूतं बोध्यम् । अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः । बुद्धिप्रतिबिम्बितं चैतन्यं जीवः । अज्ञानोपहितं बिम्बचैतन्यं शुद्धमिति संक्षेपशारीरककाराः । अनयोः पक्षयोर्बुद्धिभेदाज्जीवनानात्वम् । प्रतिबिम्बस्य पारमार्थिकत्वाज्जहदजहल्लक्षणैव तत्त्वमादिपदेषु । प्रतिबिम्बस्वरूपचितः प्रतिबिम्बत्वविशिष्टरूपेण कल्पितत्वेऽपि प्रतिबिम्बस्य स्वरूपचैतन्यमकल्पितमिति तस्य पारमार्थिकत्वं बोध्यमिति । अवच्छेदवादस्तु वाचस्पतिमिश्राणां संमतः । तथा हि—अज्ञानविषयीकृतं चैतन्यमीश्वरः । अज्ञानाश्रयीभूतं चैतन्यं जीवः । अयं भावः—ब्रह्म नास्तीत्यादिव्यवहारो यदाश्रितोऽज्ञानमपि तदाश्रितम् । कार्यकारणयोरेकाश्रितत्वस्य युक्तत्वात् । स च व्यवहारो जीवाश्रित इत्यज्ञानमपि तदाश्रितं बोध्यम् । न चाज्ञानाश्रयस्यैव जीवस्वरूपत्वादात्माश्रयो दोष इति वाच्यम् । अज्ञानोपहितस्यैव जीवत्वेन जीवाश्रितस्याज्ञानस्य स्वाश्रितत्वाभावात् । नहि दण्डत्वोपहितस्य घटकारणत्वे दण्डत्वस्य स्वाश्रितत्वं भवति । एवम् 'अज्ञानाश्रयो नास्ति न भाति' इति व्यवहाराभावादज्ञानाश्रयीभूतस्यैवाज्ञानविषयत्वात्तदुपहितचिदेव 'ईश' इतीति । अस्मिंश्च पक्षेऽज्ञाननानात्वाज्जीवनानात्वम् । प्रतिजीवं च प्रपञ्चभेदः । जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वात् । यो घटो मया दृष्टः स एव त्वयाऽपीति प्रत्यभिज्ञा चापि सादृश्याद्बोध्या । जीवो न जगदुपादानं किंत्वीश्वर इत्यादिशास्त्रीयव्यवहारस्त्वीश्वरस्य सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचाराद्बोध्य इति । एकजीववादस्तु वेदान्तसिद्धान्तभूत इत्यद्वैतसिद्धिकारादयो वदन्ति । तथा हि—अज्ञानोप-

द्वाचस्पतिमते चाज्ञानानेकत्वात् । यच्च—इन्द्रियाण्ययो न प्रत्यक्षः । इन्द्रियाणामतीन्द्रियत्वादित्युक्तम् । तन्नथैव । न चैवं सति प्रत्यक्षसंवादालाभः । असंदिग्धप्रत्यक्षावगतकार्यलिङ्गकानुमानसंवादाभिप्रायेण भाष्यटीकादिनयने च ब्रह्मणि जगत्कारणताया अपि, क्षित्यादिकं कार्यं सकर्तृकमिति तार्किकानुमानसंवादिन्या ब्रह्मगतजगत्कारणताया अपि प्रसिद्ध्यतिशालितया तस्या मानान्तरसंवादाभावकथनं विरुध्येतेति वाच्यम् । कार्यं सकर्तृकमित्यनुमानस्य केवलस्य प्रतिपक्षादिपराहततया स्वयमप्रतिष्ठितप्रमाणत्वेन तेन श्रुतेः संवादित्वस्यासम्भवात् । अत एव शास्त्रयोनित्वाधिकरणे ब्रह्मणः शास्त्रैकसमधिगम्यत्वमुक्तं संगच्छते । परमतेऽपि जगत्कारणतायाः शास्त्रैकसमधिगम्यतोक्तिः संगच्छते । प्रकृते च प्रत्यक्षतो निर्णीतेन तत्तत्कार्याभावलिङ्गेन तत्तदूवृत्त्यभावस्य धूमेनेव वह्नेर्निश्चिततया तदव्यभिचारिणुताप्ययस्याप्यवधारणेन प्रतिष्ठितप्रामाण्यकप्रत्यक्षतुल्यप्रत्यक्षमूलकानुमानसंवादितया प्रत्यक्षसंवादित्वोक्तिसामञ्जस्यात् । अत एव ज्ञानकार्यप्रवचनाद्यभावेन मूर्खतायाः अनुमानेऽप्यस्य मूर्खता प्रत्यक्षसिद्धेति लौकिको व्यवहारः । अनुमानेन जगत्कारणतासंभावनैव नावधारणमित्यादिकं जन्मादिसूत्रद्वयभाष्यटीकादौ

---

हित बिम्बचैतन्यमीश्वर । अज्ञानप्रतिबिम्बचैतन्य जीव । अथवाऽज्ञानानुपहित शुद्धचैतन्यमीश्वर, अज्ञानोपहित चैतन्य जीव इति मुख्य. पक्षः । यद्यपीश्वरस्याज्ञानानुपहितत्वपक्षे प्रपञ्चमध्ये तदवस्थान न स्यात्तथा च 'य. पृथिव्यां तिष्ठन्' इति श्रुतिविरोध प्राप्नोति तथाऽप्युपहिते जीवचैतन्येऽधिष्ठानतया केवलचैतन्यस्य तादात्म्यमवश्य वाच्यमिति प्रपञ्चमध्ये तदवस्थाने न कोऽपि दोष । इममेव दृष्टिसृष्टिवादमाचक्षते । अस्मिन्हि पक्षे यावती दृष्टिस्तावती सृष्टिरिति पर्यवसानात् । यद्यपि वाचस्पतिमिश्रमते प्रतिजीव सृष्टेर्भेदाद् दृष्टिसृष्टिवाद एव तात्पर्ये प्राप्नोति तथाऽपि सुप्तपुरुषदृष्टेरभावात्तत्सृष्टेरभावेऽपि पुरुषान्तरदृष्टे. सत्त्वेन तदीयसृष्टे. सत्त्वात् 'यावती दृष्टिस्तावत्येव सृष्टि.' इति नियमस्य वक्तुमशक्यत्वान्न वाचस्पतिमिश्रमते 'दृष्टिसृष्टिवाद.' इति व्यवहार. । एतदेवाभिप्रेत्योक्तम्—दृष्टिसृष्टिपक्षस्यानभ्युपगमादितीति ।

सुप्रसिद्धमेव। परस्यापि प्रत्यक्षश्रुत्याद्यसहायानुमानस्य प्रामाण्य-मनभिमतमेव। यथोक्तम्—श्रुतिसाहित्यरहितमनुमानं न कुत्रचि-दिति। अत्र श्रुतिपदं प्रत्यक्षस्याप्युपलक्षणम्। यदपि—यस्मिन्स-व्यापारे यन्निर्व्यापारं तत्तत्र लीयत इति व्याप्तिर्नास्तीति। तन्नास्माकं क्षतिकरम्। तादृशव्याप्तेरस्मदभिमतानुमानमूलत्वा-भावात्। वागादिकमेतत्क्षणे वृत्तिशून्यमय क्षणो वा वागादि-वृत्तिशून्यस्तत्कार्यानधिकरणक्षणाव्यवहितपूर्वत्वादित्यनुमानस्यै-वास्मदभिमतत्वात्। न चैतावता मुख्ये प्राणे वागाद्यवस्थाना-लाभान्न तत्राप्यये प्रमाणान्तरसंवादासिद्धिरिति वाच्यम्। सर्व-शरीरव्यापिनः प्राणस्य वागादिसंबन्धस्याऽऽवश्यकतया सूक्ष्म-तापन्नवागाद्याधारताया अप्यर्थसिद्धत्वात्।

नन्वेतत्सर्वाधारे परमात्मन्यपि तुल्यमिति चेत्। को नाम ने-त्याह। कथं तर्हि वायुविकार इति निर्णय चेत्। लिङ्गस्यान्यथासि-द्धावपि प्राणश्रुतेर्विनिगमनाहेतोर्जागरूकत्वात्। अत एव भाष्ये मुख्येऽपि प्राणे भूतसंवेशनोद्गमनदर्शनादित्यत्रापिशब्दः प्रयुक्तः। इयांस्तु विशेषः—परमात्मनि भूतसंवेशनोद्गमनादिकं श्रुत्यैकसम-धिगम्यम्। स्यौपनिषदत्वात्। प्राणस्य तु प्रत्यक्षासिद्धमप्यस्तीति मुख्यप्राणे भूतसंवेशनोद्गमनादः प्रसिद्धयतिशय इति।

यत्तु—चक्षुरादिसंवेशाद्यङ्गीकारे पूर्वं येनैव दृष्टं तेनैव पश्यामीति प्रत्यभिज्ञाविरोधाभिधानम्। तदसत्। चक्षुरादीनामतीन्द्रिय-तया प्रात्यक्षिकप्रत्यभिज्ञाया असिद्धेरनुमानस्याप्रयोजकत्वात्। चक्षुरादीनां सूक्ष्मरूपेणावस्थानाभ्युपगमाच्च। एतेन सुप्तौ चक्षु-रादीनामनाशश्रवणमप्यप्रतिकूलमिति स्पष्टमेव। किंचेत्यादिकमपि न युक्तम्। आकाशस्यातीन्द्रियतया प्रत्यक्षेण वायुकारणताया निश्चेतुमशक्यत्वात्। नानुमानेन लिङ्गाभावात्। अप्रयोजक-त्वाच्च। नन्वाकाशः सांनिवेश इति चेत्। आस्तां तावत्। तथाऽपि वायुकारणताया प्रत्यक्षाद्ययोग एव। संनिधेरपि तस्यान्यथासिद्धत्वसंभवात्। सत्यप्याकाशे क्वचित्फूत्कारानु-त्पत्त्याऽतिप्रसङ्गभञ्जककारणान्तरकल्पनाया आवश्यकत्वेन तेनैव निखिलातिप्रसङ्गवारणसंभव आकाशे स्वतन्त्रान्वयव्य-

तिरेकयोरसिद्धेः । न च पाषाणाद्यन्तर्भागावच्छेदेन वायोरनुत्पत्त्याऽवकाशे सत्युत्पत्त्या चान्वयव्यतिरेकाभ्यामाकाशस्य वायुकारणतासिद्धिरिति वाच्यम् । विभोराकाशस्य पाषाणाद्यन्तर्भागसंयुक्तत्वस्याऽऽवश्यकतया तदसत्त्वप्रयुक्तकार्यानुत्पादस्य वक्तुमशक्यत्वात् । अवकाशत्वेनाऽऽकाशस्य कारणतेति चेत् । किमिदमवकाशत्वम् । न तावन्निबिडद्रव्यरूपावरणाभावविशिष्टत्वम् । अन्तश्छिद्रपाषाणान्तर्भागावच्छेदेनोक्तावकाशसत्त्वेऽपि वायोरनुत्पादेन तन्निर्वाहाय कारणान्तरकल्पनापातात् । तत्कल्पने च तेनैवोक्तातिप्रसङ्गभङ्गेनाऽऽकाशकारणतायां मानाभावात् । न चान्यविधमनतिप्रसक्तमवकाशत्वं सुवचम् । किंच स्थूल वायु प्रति सूक्ष्मस्य तस्य हेतुताया आवश्यकतया निबिडद्रव्याभावविशिष्टवायुत्वेनैव हेतुताऽस्तु । क्लृप्तत्वाद्वायोरिति । न च वायुनानात्वाद्गौरवम् । नानात्वेऽपि क्लृप्तत्वेन कारणतायां गौरवानवकाशात् । कथमन्यथा भूतचतुष्टयवादिनां वाय्वाद्युत्पत्तिनिर्वाहः । तस्माद्युक्त्यैकशरणताया प्रत्यक्षेणानुमानेन वा नाऽऽकाशस्य वायुकारणतासिद्धिरिति युक्ताऽभ्यधिकाऽऽशङ्का । अपि चाऽऽकाशस्य वायुकारणत्वे प्रमाणान्तरसिद्धेऽपि नासंकुचितसर्वभूतकारणतायां प्रमाणान्तरसंवादः । तत्र हि भूतपदं भवन्तीति भूतानीति व्युत्पत्त्या कार्यमात्रपरम् । आकाशपृथिव्यादिभूतानामुपस्थिततया तत्संबन्धादुपस्थितमहाभूतपरं वा । उभयथाऽपि साकाशनिखिलभूतकारणत्वमाकाशेऽप्रसिद्धमेव । ब्रह्मणि तु प्रसिद्धमिति युक्तम् । तत्राऽऽकाशपदस्य परमात्मपरत्वम् । 'ह वै' इत्युक्तिश्च तत्परत्व एवोपपन्ना । अत्र चाऽऽदित्यान्नपर्याययोर्भूतपदस्य गातृत्वाभ्यवहर्तृत्वलिङ्गेन प्राणिपरत्वावधारणात्तत्सामान्यादत्र भूतपदस्य प्राणिपरतयाऽसंकोचेनैव प्राणितल्लयाभिधानं वक्तुं शक्यत इति शङ्काविशेषो निराबाधः । एवं च वाक्यशेषस्य वायुविकारसाधारणत्वाद भ्यस्ताया: प्राणश्रुतेश्च बलवत्त्वाद्देवताश्रुतेरपि पूर्वपक्षे प्रदर्शितयुक्त्योपपत्तेश्च विरोध्युन्मेषाभावेन प्रायपाठस्यापि लब्धावसरत्वमस्तीति तस्यापि मुख्यप्राणनिर्णायकतयाऽभ्यधिकाशङ्काप्रद-

शंकभाष्ये प्रदर्शन न विरुध्यते । पूर्वाधिकरणे तु बलवल्लिङ्ग-वाक्यशेषानुरोधात्स्मायपाठोऽकिंचित्कर एवेति युक्ताऽभ्यधिका शङ्केति पूर्वनिरुक्ताभ्यधिकामाशङ्कां भाष्योक्ताम् 'न च' इत्यनेनानूद्य पूर्वाधिकरणेऽपीत्यादि चन्द्रिकोक्तदूषण सुचिन्त्यमेव ।

सैषाऽभ्यधिकाशङ्का टीकायाम्

'पुंवाक्यस्य बलीयस्त्व मानान्तरसमागमात् ।
अपौरुषेयवाक्ये तत्सगति. किं करिष्यति '

इत्यनेन परिहृता ।

यत्तु—अत्र 'अपुवाक्यद्वयेऽपि' इति दूषणमुक्तं चन्द्रिकायाम् । तदसत् । यत्र हि प्रामाण्यतात्पर्ये निर्णीते अपि न दृढे तत्र प्रामाण्यदार्ढ्याय प्रमाणान्तरसंवादस्यापेक्षितत्वेऽपि निर्णीततात्पर्यकस्य यस्याप्रामाण्यव्यावर्तकधर्मवत्त्वमवधृत तत्र न प्रमाणान्तरसवादापेक्षा, न वा तात्पर्यनिर्णये समानविषयकप्रमाणान्तरापेक्षा। तथा सत्यपूर्वताया एव भङ्गप्रसङ्गात् । किंतूपक्रमादीनां श्रुत्यादीनां च । एव च न्यायेन यादृशार्थः श्रुत्या प्रतीयते तादृशोऽर्थः प्रमाणान्तरसवादाभावेऽपि ग्राह्यः । न तु प्रमाणान्तरसवादलोभेन न्यायसिद्धार्थमुल्लङ्घ्य संकोचादिना सवाद्यर्थान्तरपरत्वकल्पना युक्ता । न्यायश्च मुख्यसवेशनोद्गमनयोः सर्वप्राणिनां वायुविकारे क्वाप्यसभवात्परमात्मपक्षपातीति प्रपञ्चितं प्राक् । एतेनान्यथेत्यादिकमप्यपास्तम् । तात्पर्यनिर्णयायोपक्रमादीनां मानान्तराविरोधस्य चाऽऽश्रयणीयत्वात् । तात्पर्यनिर्णयायांशभेदेन श्रुत्यन्तरसंवादस्यापेक्षितत्वाच्च । भामत्यां यद्यपीत्यादेरयमर्थः— अनपेक्षा —प्रमोत्पादनेऽन्यानपेक्षा.। व्यवस्थाप्यन्ते–विषयविशेषोपरक्ततात्पर्यवत्तया निर्णीयन्त इति । तथा च टीकोक्तिरस्मदनुकूलैवेति सर्वं शिवम् ।

यदपि सुधायामुक्तम्—उक्तवाक्ये 'प्रस्तावमन्वायत्ता' इत्यनेनाधिष्ठातृत्वोक्तेस्तस्य देवताश्रुतेश्च चेतन एव संभवेन वायुविकारविषयसशयपूर्वपक्षयोरनुत्थानमेवमपि दुर्वारम् । किंचात्र भूतानां संवेशनमुद्गमनं च पारमेश्वरं कर्म प्रतीयत इति

सङ्ग्रहणमेव युक्तमिति कुतः पूर्वपक्षावकाशः । ' यतो वा इमानि भूतानि ' इति हि सर्वप्राणिनिकायस्य तत्रैव संवेशन तत एवोद्गमनं च श्रावयति । सुप्तिजागरयोरपि ' सता सोम्य तदा संपन्नो भवति ' इत्यादि यदि च सर्वप्राणिसंवेशनोद्गमनाधारत्व मुख्यप्राणस्यापि श्रूयत इति मन्यते तदाऽपि संशय स्यान्न पूर्व पक्षः । समबलत्वात् । किंच ' यदा वै पुरुष स्वपिति ' इत्यादिवाक्यमपि मुख्यप्राणविषयमिति कुतोऽवगतम् । प्रत्यक्षानुगुण्यान्मुख्यप्राणविषयत्व प्राबल्यं चानुमीयत इति चेत् । इन्द्रियाणां मुख्यप्राणे संवेशनोद्गमनयोरप्रत्यक्षत्वात् । अनुमानमस्त्विति चेत् । न । परमात्मनोऽप्यपरिलुप्यमानस्य सद्भावेनावधारणानुपपत्तेः । किंचेन्द्रियाणां मुख्यप्राणसंवेशनोद्गमनयोः श्रुत्यनुमानासिद्धत्वेऽपि किमायातम् । सर्वभूतसंबन्धिनोस्तयोः सर्वेन्द्रियसारत्वाद्भूतानां संगतिरिति चेत् । किमेतदनुमानं संभावना वा । नाऽऽद्यः । व्याप्त्यभावात् । द्वितीये तु श्रुत्यनुमानाभासमूलसंभावनामात्रेण श्रुतिबाधया पूर्वपक्ष इति सुविभावितम् । नन्वादित्याकरूपाब्रह्मप्रायपाठमाश्रित्यायं पूर्वपक्ष इति चेत् । न । लिङ्गविरोधिनः प्रायपाठस्यानिर्णायकत्वात् । स्पष्ट चात्र वाक्यशेषे पारमेश्वरं कर्मेत्युक्तम् । कथं चावधारितमादित्योऽन्नं चाप्नोति । श्रूयते हि तत्रापि ' सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति ' इत्यादि ब्रह्मलिङ्गम् । अन्नमेव प्रतिहरमाणानीति तु प्रायपाठादुपजीवनार्थं ग्राह्यमिति । तदसत् । 'प्रस्तावमन्वायत्ता' इत्यस्य प्रस्तावमनुगतेत्यर्थकतासंभवादभिघ्रातृत्वस्य ततोऽलाभात् । श्रुतिवाक्यशेषयोर्विरोधाद्देवताशब्दस्य गते प्रागेव दर्शितत्वात् । किंचेत्यादिकमप्ययुक्तम् । तस्य मुख्यप्राणसाधारण्यस्योपपादितत्वात् । यच्चोक्तम् ' तदाऽपि संशयः स्यान्न पूर्वपक्षः' इति । तदपि न । प्राणश्रुतिमादाय पूर्वपक्षसंभवात् । " किंच 'यदा वै' इत्यादिकं सुभावितम् " इत्यन्तं तु प्रायो दूषितमेव प्राक् । अवधारणमपि प्रायपाठादन्यथा नेयमित्युक्तमेव प्राक् । श्रुतिबाधया पूर्वपक्ष इत्युक्तिस्तु न युक्ता । देवताश्रुत्यबाधेनैव पूर्वपक्षप्रवृत्तेरुपपादितत्वात् । प्रायपाठेऽपि

लिङ्गाविरोधः पूर्वमुक्त एव। वाक्यशेषस्य कोटिद्वयसाधारण्योपपादनात्। ननु सिद्धान्तयुक्तिभिः पूर्वपक्षयुक्तीनामाभासीकरणार्थायं पूर्वपक्षो युक्त इति चेत् । हन्त सिद्धान्तयुक्तिभिरपरिहार्यं पूर्वपक्षमुपदर्शितुं भवानेव कुशलः श्लाघनीयप्रज्ञोऽसि । कथं चावधारितमित्यादिकं तु हेयम् । आदित्यान्नश्रुतेरुद्वे सत्त्वादिलिङ्गस्य चानेकस्यासामञ्जस्यात् । कथंचिदाभिमानिकदेवतापरत्वेऽपि ब्रह्मप्रतिबद्धलिङ्गाभावेन ब्रह्मपरत्वासिद्धेः। न हि ब्रह्मणोऽप्यसङ्कुचितं सर्वप्राणिगेयत्वादिकं संभवति। 'ह वै' इति शब्दौ च प्रसिद्ध्यतिशयं द्योतयन्तावादित्यश्रुतिमेवोपोद्बलयन्ताविति न किंचिदेतत् ।

आनन्दतीर्थीयास्तु—अत्राऽऽध्यात्मिकप्राणादिसमन्वय उच्यते। प्राणशब्दप्रवृत्तिनिमित्तं जीवनादिहेतुत्वमन्वयव्यतिरेकाभ्यां प्राणशब्दार्थत्वेन प्रसिद्धस्य वायोरेवेति स एव प्राणशब्दवाच्यो न तु विष्णुरित्यभ्यधिकाशङ्कानिरासेन पूर्वन्याय एवाऽऽतिदेशिकयवान्तरसंगतिः। भूताकाशस्य त्ववकाशहेतुत्वेऽन्वयव्यतिरेकौ न स्तः। परिच्छिन्नस्य तस्याभावेऽपि क्वचिदवकाशदर्शनात् । प्रयोजनं तु 'तद्वै त्वं प्राणो अभवः, महान्भोग प्रजापतेः, भुजः करिष्यमाणः, यद्देवान्प्राणयो नव' ( तै० आ० ३ । १४ ) इति वाक्ये यदि प्राणो ब्रह्मान्यः स्याच्चदाऽतिशयितभोगशब्दितानन्दवत्त्वेन प्रतिपन्नोऽसावानन्दमयः स्यादिति प्रागुक्तानन्दमयस्य ब्रह्मत्वं न सिध्येदिति तत्समर्थनम् । पूर्वपक्षस्तु—प्राणशब्दस्तावत्स्वप्रवृत्तिनिमित्तजीवनान्वयव्यतिरेकानुविधायिनि वायावेव युक्तो न ब्रह्मणि। तस्य सर्वगतस्याशरीरस्य स्वतः शरीरद्वारा वाऽस्मदादिशरीरेऽभावादिति । ततो व्यतिरेकाज्जीवनव्यतिरेक इत्यन्वयव्यतिरेकयोरसंभवात्प्राणप्रसिद्धिविरोधाच्च। न च निरवकाशलिङ्गेन तदभावः। तदभावान्महाभोगवत्त्वस्य वायावपि सावकाशत्वात्। अतो वायुरेवायं प्राण आनन्दमयश्चेति । सिद्धान्तस्तु—'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति निरवकाशलिङ्गादयं प्राणो विष्णुरेव। न च योगरूढयोरसंभवः । महायोगविद्द्वद्रूढयोरव्यतिरेकात्प्राणगतजीवन-

कारणत्वस्यापि भगवदधीनत्वेन 'ईशान प्राणदः प्राणः' इति नामपाठेन च तयोरवगमाच्च । तस्मादत्र प्राणो विष्णुरेवेति रीत्यैतदधिकरणरचनामाहुः ।

तत्रेदं चिन्त्यम्–अधिकाऽऽशङ्का तावदसमीचीना । आकाशातिरिक्तस्यावकाशहेतोरप्रसिद्ध्याऽऽकाशेऽप्यन्वयव्यतिरेकतौल्यात् । प्रयोजनमप्ययुक्तम् । अस्य ब्रह्मत्वेऽप्यानन्दमये 'यदेष आकाश आनन्दो न स्यात्' इत्याकाशपदसामानाधिकरण्यवदानन्दमये प्राणपदसामानाधिकरण्याभावेन तस्यैतद्भेदे हेत्वभावात् । न च 'महान्भोगः प्रजापतेर्भुजः करिष्यमाण' इति ब्रह्मभोगकारणत्वेन महाभोगत्वप्रतिपादनादन्यभोगकर्तृत्वेनास्य महानन्दत्वप्रतिपादनादस्याऽऽनन्दमयाभेद इति वक्तु युक्तम् । तथा सति 'तेनैवेष(एष) ह्येवाऽऽनन्दयाति । रसं [ह्येवाय] लब्ध्वाऽऽनन्दी भवति' इत्यादिभिः प्रमाणैर्ब्रह्मासाधारणतयाऽवगतेन निरवकाशलिङ्गेनाऽऽकाशपदस्येव प्राणपदस्यापि प्राणपर्यायस्यश्लोक इव परमात्मपरत्वानिर्णयसंभवे पूर्वपक्षानुत्थितिप्रसङ्गात् । अत एव 'श्रुतिर्निरवकाशा लिङ्गं सावकाशम्' इत्युक्तिर्निरस्ता । द्वयोरप्यानन्दमयाधिकरणे परमात्मपरत्वदर्शनात् । न च तदुभयाक्षेपेणाऽऽरम्भ इति युक्तम् । तदाक्षेपकानुपलम्भात् । नहि प्राणश्रुतिस्तदाक्षेपिका । प्रागानन्दमयाधिकरणे ब्रह्मणि दृष्टप्रयोगत्वात् । ननु सत्य दृष्टः प्रयोगस्तथाऽपि प्राणपदप्रवृत्तिनिमित्तस्य जीवनहेतुत्वस्य ब्रह्मण्यन्वयव्यतिरेकायोगाद्वायौ च तत्सत्त्वात्प्राणशब्दस्तत्रैव मुख्य वृत्तो न ब्रह्मणि, मुख्यार्थग्रहणसंभवेनामुख्यार्थग्रहणं युक्तमिति तदाक्षेपेणैव तदुत्थानमिति चेत् । तर्हि तत्रैवाऽऽक्षेपसंभवे वाक्यान्तरोदाहरणस्य व्यर्थत्वापातात् । ब्रह्मशब्दविरोधान्न तत्र तदाक्षेप इति चेत् । कथमिदानीमपि तदाक्षेपः । अत्राप्युक्तब्रह्मासाधारणलिङ्गविरोधस्य साम्यात् । किंचाचेतनवृत्तिधर्माणामपि परमात्माधीनत्वस्य पूर्वाधिकरणे निर्णीतत्वाद्वायुगतजीवनहेतुत्वस्यापि परमात्माधीनत्वे तत्रैव निश्चिते कुतः पुनरिदानीमाक्षेपः । किंच प्राऽऽस्तां ब्रह्मणि जीवनहेतुत्वान्वयव्यतिरेकौ 'येन जातानि जीवन्ति'

(तै० ३ । १) 'को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' (तै० २ । ७) इति श्रुतिभिरेव ब्रह्मणि जीवनहेतुत्वनिर्णयोऽस्तु । प्राणमयश्लोके च 'प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये' इति तदेवोच्यते । न चैतदपि वायुपरमिति शङ्क्यम् । ब्रह्मासाधारणतया निर्णीतब्रह्माकाशादिश्रुतिविरोधात् । भूयोनुग्रहन्यायादत्रत्यप्राणश्रुतिभङ्गस्यैव न्याय्यत्वाच्च । किंच पूर्वत्राऽऽकाशशब्दप्रवृत्तिनिमित्तावकाशहेतुत्वान्वयव्यतिरेकयोः प्रसिद्धाकाशे भावादाकाशपदेन तदुक्तं स्याचर्हि प्राणपदप्रवृत्तिनिमित्तप्राणनहेतुत्वस्य वायावन्वयव्यतिरेकसद्भावात्प्राणशब्दस्तत्पर एव स्यादिति शङ्का स्यात् । न च तत्र तथा सिद्धान्तस्त्वया सङ्कलितः किंतु निरवकाशलिङ्गेन । तच्चात्राप्यस्तीत्युक्तम् । न च तद्वाक्यं सावकाशम् । अचेतने स्वयमनावन्द आनन्दयितृत्वासंभवात् । श्रुतिस्तु सावकाशा । प्राणमये तत्प्रयोगादित्युक्तम् । वस्तुतस्तु नात्र जडो वायुरिति पूर्वपक्षः । 'तद्वै त्वं प्राणो अभवः' इति चेतनसंबोध्यवाचित्वमिति निर्देशविरोधात् । न चाभिमानिदेवतापरो निर्देश इति युक्तम् । प्राणश्रुतेरमुख्यत्वापत्तेः । मुख्यप्राण एव तस्या मुख्यत्वात् । स च प्राणः प्रसिद्धेर्वायुरित्यापततीति त्वदीयभाष्यविरोधात् । अस्मद्रीत्या पूर्वपक्षं दूषयता त्वया पूर्वपक्षे प्राणस्य जडवायुत्वे प्रश्नप्रतिवचनयोर्देवताशब्दायोगात्तदभिमानिचेतनत्वे च 'वायुविकारस्य' इत्यादिभाष्यविरोध इत्युक्तदूषणविस्मरणेन स्वकीयमते तथापूर्वपक्षकरणानौचित्यात् । अमुख्यत्वे च परमात्मपरत्वस्यैवोचितत्वात् । नापि मुख्यप्राणमाश्रित्य पूर्वपक्षो युक्तः । तस्मिञ्जीवनहेतुत्वान्वयव्यतिरेकानुविधायित्वाज्ञानेनोक्ताधिकशङ्कानुदयात् ।

यत्तु प्रत्यक्षेण जीवनस्य मुख्यप्राणान्वयव्यतिरेकानुविधानाज्ञानेऽपि 'तत्प्राणे प्रपन्न उदतिष्ठत्, तत्प्राण उत्क्रान्तेऽपद्यत' (ऐ० आ० २।१।४) इत्यादिवाक्याचज्ज्ञानमिति चन्द्रिकायामुक्तम् । तदसत् । 'येन जातानि जीवन्ति' इत्यादिश्रुत्या तदनुविधानस्य परमात्मन्यपि संभवात् । नन्वेतत्पूर्व-

पक्षे प्राणपदघटितानां सर्वेषामपि वाक्यानां मुख्यप्राणपरत्वात्परमात्मनि न तत्सम्भव इति चेत् । न । तथाऽपि प्राणपदाघटितानां 'येन जातानि जीवन्ति', इत्यादीनां तद्ग्राहकतासौलभ्यात् । प्राणशब्दवतां सर्वेषामत्रैव विचारे 'प्राणस्तथाऽनुगमात्' (ब्र० सू० १।१।२८) इत्यादेर्वैयर्थ्यापाताच्च । निरवकाशान्यलिङ्गवतामेतदविषयत्वे ब्रह्मासाधारणलिङ्गवतामपि तथैवाविषयत्वसंभवेन तैरेवैतत्सिद्धिरस्तु ।

यदपि चन्द्रिकायाम्—तत्प्राण इत्यत्र 'प्राणस्तथाऽनुगमात्' इति वक्ष्यमाणन्यायेन प्राणो विष्णुरिति 'तत्प्राणे प्रपन्ने' (ऐ० आ० २ । १ । ४ ) इत्यादिश्रुत्युक्त मुख्यप्राणे जीवनान्वयव्यतिरेकानुविधानमाक्षिप्यात्रत्यासिद्धान्तन्यायेन प्राणशब्दप्रवृत्तिनिमित्त जीवनादिहेतुत्वं विष्णोरङ्गीकृत्य निरवकाशान्यलिङ्गेन तत्र पूर्वपक्षोदयेन तद्विचारस्यैतत्सिद्धान्तोत्तरभावितयैतत्पूर्वपक्षदशाया तत्रत्यसिद्धान्तासिद्धेः । एतेन 'प्राणस्तथा' इत्यनेनास्य गतार्थत्वशङ्का निरस्ता । एतदभावे ब्रह्मणो जीवनहेतुत्वाभावेन तत्र प्राणशब्दस्य मुख्यत्वासिद्धेरित्युक्तम् । तदप्यसत् ।

'न प्राणेनापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ'

इति श्रुतौ प्राणशब्दितस्य जीवनहेतुत्वं निषिध्येतरेण तु जीवन्तीति परमात्मन एव जीवनहेतुत्वविधानान्मुख्यप्राण एव तद्धेतुत्वं ब्रह्मणि तदभावो वेति शङ्कितुमशक्यत्वात । तदभावेऽपि परमात्मनि प्राणशब्दस्य मुख्यत्वसिद्धेर्निष्प्रत्यूहत्वात् । न चोक्तश्रुतौ प्राणशब्दो वायुपर इतरशब्दस्तद्भिन्नमुख्यप्राणपर इति चन्द्रिकोक्तं वक्तु युक्तम् । मुख्यार्थत्यागापत्तेः । इतरपदस्य स्वसमभिव्याहृतान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकभेदपरत्वव्युत्पत्तिविरोधाच्च । एतेन यद्वा कुलालशरीरस्य घट प्रतीव मुख्यप्राणशरीरभूतवायोर्जीवनं प्रत्यन्वयव्यतिरेकदर्शनमात्रेण तस्य तत्र हेतुत्वम् । अत एवोक्त सुधायाम्—वायुविकारशरीरत्वान्मुख्यस्येति । ब्रह्मणस्तु सर्वगतत्वादशरीरत्वाच्च । यदु

वा तच्छरीरस्य वा नास्मदादिशरीरेऽभावादिति। ततो व्य-
तिरेकाज्जीवनव्यतिरेकस्तस्मान्न विष्णोर्जीवेनहेतुत्वमन्वयव्यति
रेककल्प्यम्। नापि श्रुतिसिद्धमित्यादिना चन्द्रिकास्थपूर्वपक्षोप-
पादनं निरस्तम्। मुख्यप्राणस्य वायुशरीरकत्वात्। शरीरद्वारा
तस्मिञ्जीवनहेतुत्वस्येव ब्रह्मणोऽपि सर्वशरीरतायाः 'यस्याऽऽ
त्मा शरीरं यस्य पृथिवी शरीरम्' इत्यादिश्रुतिसिद्धत्वेन तद्द्वारा
ब्रह्मण्यपि तत्संभवेन पूर्वपक्षानुत्थानाच्च।

यत्तु--अन्वयव्यतिरेकमात्रगम्यत्व हेतुतायामुपजीव्यैतत्पूर्व-
पक्षप्रवृत्तिः। तच्च न ब्रह्मणीति केनचिदुक्तम्। तन्मुख्यप्राणेऽपि
तदसंभवाद्यागादेः स्वर्गादिहेतुत्वासिद्ध्यापाताच्चेति दूषणेन
चन्द्रिकायामेव दूषितम्। ब्रह्मणो जीवनहेतुतायाः 'न प्राणेन'
इत्यादिश्रुतिसिद्धतया ब्रह्मणि तदभावस्य शङ्कितुमशक्यताया
उक्तत्वाच्च।

यदपि व्यतिरेकगर्भाया हेतुतायाः श्रुत्याऽपि ब्रह्मण्यसंभ-
वाज्जीवनहेतुता न ब्रह्मण इति वर्णनम्। तदपि नित्यविभूनां
न क्वापि कारणत्वमि(म)ति प्रसङ्गादिति दूषणेन चन्द्रिकायामेव
दूषितम्। कारणत्वस्य ब्रह्मणो लक्षणत्वाभावप्रसङ्गाच्चायुक्तम्।
किंच मुख्यवायुरेव प्राण। स एवाऽऽनन्दमय इति पूर्वपक्षे--
आनन्दमये श्रुतब्रह्मशब्दायोग। नहि मुख्यप्राणे तस्य रूढि।
जातिजीवाद्यन्यत्वात्। नापि योगः। गुणपूर्त्यभावात्। ब्रह्म
त्वमात्रस्यातिप्रसक्तत्वात्।

यदपि चन्द्रिकायाम्----भूताकाशश्रुतेरभ्यस्ताया अपि निर-
वकाशलिङ्गेन बाधः। इह तु 'स्व प्राणः' देवान्प्राणयो नव'
'स्व मातरिश्वा' (चि०७०१४) इति श्रुतिबाहुल्य नाऽऽश्वसिमा-
त्रमिति श्रुतिबाहुल्यान्निरवकाशेनापि लिङ्गेन न बाध इति वा
यदि प्राणशब्दो योगेन प्रसिद्धिविरोधेऽपि विष्णुपरः स्यात्तदा
लक्ष्मीशब्दोऽपि तद्वदेव प्रसिद्धप्राणपत्नीपरः स्यादिति वा 'मुख्ये
मुख्यः प्रकीर्तितः' इति वचनात्परमात्मनि प्राणशब्दस्य मुख्यत्वा-
योगात्मुख्यसंभवे चामुख्यग्रहणासंभवान्नात्र प्राणशब्दः परमा-
त्मपर इति वा प्रमेयाश्रिताभ्यधिकाशङ्काया तन्निराकरणाया-

प्रमाविरोध इति प्रतिपादितम् । तदप्यसत् । यतः श्रुतेर्लिङ्ग-बाधकतावच्छेदकं श्रुतित्वमेव न भूयस्त्वम् । लिङ्गस्यापि श्रुतिबाधकतावच्छेदकं निरवकाशत्वमेव न भूयस्त्वम् । भूता-न्यथान्यायेनाप्रयोजकत्वात् । समानबलत्व एव भूयोनुग्रहन्या-यस्य प्रवृत्तेरसकृदावेदितत्वाच्च । पूर्वाधिकरणेऽप्याकाशश्रुतीनां भूयस्त्वेन लिङ्गबाधकात्वचेश्च । न च विजातीयभूयस्त्वं बाध-कतावच्छेदकमिति वाच्यम् । वैजात्यस्यार्थगतत्वेऽत्राप्यभा-वात् । शब्दगतत्वेऽन्तरस्तद्धर्माधिकरणेऽपीन्द्रबृहस्पत्यादिशब्दै-र्लिङ्गबाधापत्तेः । न चार्थसाजात्यविशिष्टशब्दवैजात्यमेव लिङ्गबाधकतावच्छेदकमुपेयते, अन्तरधिकरणे नार्थसाजात्य-माकाशाधिकरणे च न शब्दवैजात्यमिति नातिप्रसङ्ग इति शक्यं वक्तुम् । अप्रयोजकत्वात् । ननु नाप्रयोजकता, एक-स्मिन्नर्थे प्रकृते विजातीयानेकशब्दप्रयोगस्य तत्र तात्पर्यावि-षयसूचनार्थत्वादिति चेत् । न । सजातीयानेकशब्दप्रयोग-स्यैव तात्पर्यग्राहकलिङ्गान्तर्गताभ्यासशब्दार्थत्वेन विजातीया-नेकशब्दप्रयोगस्य तात्पर्यग्राहकत्वायोगात् । तथा चाऽऽकाशा-धिकरण एव लिङ्गबाधप्रसङ्ग । अतो निरवकाशत्वाल्लिङ्ग-स्यैव श्रुतिबाधकता युक्तेति नैषाऽधिकाऽऽशङ्का संभवदुक्ति-का । नापि द्वितीया । तल्लिङ्गसमर्पकपदानां श्रुत्यन्तरेणान्यथा-सिद्धिशङ्कायाः सर्वत्र सौलभ्येन पूर्वोक्तभङ्गप्रसङ्गात् । सर्वाक्षे-पेण शङ्काप्रवृत्तेरत एवेत्याद्यतिदेशविरुद्धत्वात् । एतेन यद्यपि चेयमाशङ्काऽऽकाशादिसाधारणी तत्राप्याकाशपदस्य प्रसि-द्धार्थहानादनन्तत्वादिलिङ्गानामपि तद्धानापत्तेरित्याशङ्क्य तथाऽपि पूर्वाधिकरणेऽनुद्धृतत्वात्स्यादेवाधिकाऽऽशङ्केति चन्द्रि-कायां समाधानमुक्तं तदपि निरस्तम् । तच्छङ्कायाः सूत्रेणा-नुद्धारादतिदेशानुपपत्तेश्च । तृतीयाऽपि न युक्ता । आकाशादिप-दानामपि भूताकाशे मुख्यताग्राहककोशादिसद्भावात् । ' वचसां वाच्यमुत्तमम् ' इति भगवत्स्यपि सत्त्वाच्च । तस्मादधिकाऽऽ-शङ्का तन्निरसनपूर्वपक्षास्तावदनुपपन्ना एवेति सिद्धान्तोऽपि न चतुरस्रः । अत एवेत्यस्य हेतुसमर्पकस्यानुक्तलक्ष्मीपतित्वा-

दिलिङ्गपरत्वे स्वारस्यविरोधात् । तल्लिङ्गत्वरूपसामान्यरूपाव-
च्छिन्नातिदेशपरत्वेन कथंचिद्योजने तु प्रागपि तथा लाघवात्त-
थोक्तिसंभवेनान्यथोक्तेर्विनिगमनानुपन्यासात् । पूर्वानुवाके ल-
क्ष्मीपतित्वादिलिङ्गसमाम्नानेऽपि प्रकृतानुवाके तदश्रवणात् ।
तदेकवाक्यत्वाङ्गीकारेऽपि प्रथमश्रुतप्रसिद्धविष्णवसाधारणलिङ्ग-
विरोधेनासाधारणमहापुरुषादिश्रुतिविरोधेन 'नान्यः पन्थाः'
( तै० आ० ३।१३।१ ) इति कण्ठतोऽन्यज्ञानस्य मुक्तिहेतुत्वनिषेधेन
चात्रान्यपरत्वशङ्कानुदयात् । अत्रानुवाकेऽपि 'तव देवाऽऽहवमा-
यन्ति सर्वे । त्वमेकोऽसि बहूननुप्रविष्टः' ( चि० उ० १४।२ ) इति
सर्वान्तर्यामित्वसर्वशरीरत्वाखिलकर्माराध्यत्वादेरितरासभावि-
तस्य श्रवणादुपक्रम एव 'तमेव मृत्युममृतमाहुस्तं भर्तारं
तमु गोप्तारमाहुः' इत्यादिधारकत्वपोषकत्वयोग्यत्वरूपाणां
ब्रह्मलक्षणान्तर्भूतानां श्रवणेन सर्वान्तरत्वप्रयुक्ततत्तच्छब्दव्यव-
हारविषयत्वस्य स्पष्टत्वेन 'त्व भर्ता मातरिश्वा प्रजानाम्'
इत्यस्य 'त्वं यज्ञस्त्वमु वेवासि सोमः' इत्यादेरिव तत्त-
दात्मकत्वेन समन्वयस्य स्फुटत्वात् । तद्वदेव 'तद्वै त्वं
प्राणः' इत्यादेरपि प्रसिद्धवन्निर्देशस्य संदेहाविषयत्वान्न
निर्णेयोऽर्थ इति न तद्विषयमिदं सूत्रम् । 'श्रीश्च ते लक्ष्मीश्च
पत्न्यौ' इति युष्मच्छब्दस्य भर्ता संभ्रियमाण इत्याद्यनेकपरोक्ष-
निर्देशव्यवहितस्य तद्वै त्वमित्यत्र प्रत्यभिज्ञानोक्तिश्च न युक्ता ।
मातरिश्वशब्दस्य पूर्वपक्षबीजस्यान्तराधिकरणन्यायेन ब्रह्मपरत्वो-
क्तिश्च न युक्ता । प्राणशब्दस्यापि तन्न्यायेन गतार्थताया उपे-
क्षकाभावात् । ०स्मादस्मद्भाष्योक्तच्छान्दोग्यक्रमपठितप्राणवा-
क्योक्तोदाहरणमेव सम्यक् । 'तद्वै त्व प्राणोऽभवः' इत्यादि
वाक्ये प्राणशब्दस्य तत्पूर्वानुवाकश्रुतेन 'श्रीश्च ते लक्ष्मीश्च
पत्न्यौ' इति लक्ष्मीपतित्वलिङ्गेन विष्णौ समन्वय इत्यपि तल्लि-
ङ्गस्याऽऽनन्दमयाधिकरणे प्रदर्शितरीत्या शिवसाधारण्यादनु-
पादेयमिति स्पष्टमेव दूषणम् । 'ईशानः प्राणदः प्राणः' इति
विद्वद्रूढ्या योगेन च प्राणशब्दस्य विष्णौ सावकाशतेत्युक्तिरपि
न समीचीना । सर्वात्मतया स्तोतु प्रवृत्ते 'विश्वं विष्णुः' इत्या-

द्दावन्यदेवतानाम्नामपि परिगणनेन न तस्य शक्तिग्राहकत्व-मित्यस्य पूर्वमेव प्रतिपादितत्वात् । प्राणशब्दस्य विष्णौ रूढ्य-सिद्धेः । अन्यथाऽऽथर्वशिखायां देवकृतशिवस्तोत्रे ' यो वै रुद्रः स भगवान्यश्च प्राणस्तस्मै नमो नमः ' इत्यत्र यश्च प्राणस्तस्मै रुद्रायेत्यर्थके मन्त्रे प्राणेऽपि रुद्रपदप्रयोगात् । कैवल्योपनिषदि 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा' इति प्रक्रम्य ' स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राण स कालोऽग्निः स चन्द्रमा.' (कं० ८) । इति शिवेऽपि प्राणशब्दप्रयोगात् । शिवसहस्रनाममध्येऽपि प्राणशब्दश्रवणाच्च । तत्रापि रूढेर्वक्तु शक्यतया लिङ्गस्य च तत्सा-धारण्याच्च । तद्वाक्ये प्राणो विष्णुरेवेत्यस्यासिद्धिरिति स्पष्टमेव । एतेनैव योगेन प्राणशब्दो विष्णौ सावकाश इत्यपि निरस्त मेवेति ॥ २३ ॥

श्रीमच्छंकरपादाब्जभूषणे परदूषणे ।<br>
मीमांसान्यायपञ्चास्यराघवार्यप्रसादजा ॥<br>
रघुनाथकृतिर्भूयात्स्वपक्षपरपक्षयोः ।<br>
विवेकाय च मोदाय प्राणाधिकरणे सताम् ॥

श्रीरस्तु शुभं भवतु ।

इति प्राणाधिकरणं समाप्तम् ॥

---

## अथ ज्योतिरधिकरणम् ।

---

### ज्योतिश्चरणाभिधानात् ॥ २४ ॥

अत्राध्यायादिसंगतयः पूर्ववदेव । पूर्वाधिकरणे स्ववाक्यग-तब्रह्मलिङ्गानुसारेण प्राणश्रुतेरन्यथानयनं युक्तम् । इह च तदभावान्न ज्योतिःश्रुतेरन्यथानयनमिति प्रत्यवस्थानादनन्त-रेण प्रत्युदाहरणसंगतिः । इदमाम्नायते—'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोके-ष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः ' ( छा० ३ । १३।७) इति । तत्र दिवः परं ज्योतिरादित्यादिरुत पर ब्रह्मेत्यु-

प्रथम ज्योतिःशब्दप्रयोगात्संशयः । तत्राऽऽदित्यादौ ज्योतिः-शब्दः प्रसिद्ध एव । ब्रह्मण्यपि 'तद्देवा ज्योतिषां ज्योतिः परं ज्योतिरुपसंपद्य' इत्यादौ [ज्योतिःशब्दः] प्रयुक्तः । पूर्वपक्षस्तु—इद ज्योतिरादित्यादिकमेव । ज्योतिःशब्दस्य चक्षुरनुग्राहकतेजः-प्रतिपत्तिन्येव प्रचुरप्रयोगात् । दीप्यत इत्यनुभूतभास्वररूपवत्त्व-स्य ज्वलनकर्तृत्वस्य वा श्रवणाच्च । किंच 'इद वाव तद्यदि-दमस्मिन् पुरुषे ज्योतिः' इति कौक्षेयके ज्योतिषि परं ज्योतिर-ध्यस्यमानं दृश्यते । अध्यासाश्च प्रायोऽत्यन्तसादृश्यनिमित्ताः । तच्चाचेतनयोर्ज्योतिषोरतितरामुपपद्यते । न चेदमपि ज्योतिर्ब्रह्मे ति शक्यते वक्तुम् । 'तस्यैषा दृष्टिस्तस्यैषा श्रुति ' ( छा० ३ । १३ । ७ ) इति चौष्ण्यघोषविशिष्टत्वश्रवणाच्च । 'तस्यैषा दृष्टिर्य-त्रैतस्मिञ्शरीरे सस्पर्शेनोष्णिमान विजानाति, तस्यैषा श्रुतिर्यत्रै-तत्कर्णावपिधाय निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुत चेत्युपासीत चक्षुष्यः श्रुतो भवति '(छा०३।१३ ७) इति च दर्शनीयरूपवत्त्वकीर्तिमत्त्वरूपाल्पफलश्रवणाच्च । न हि परमपुरुषोपासनमल्पफलायेति वक्तुं युक्तम् । न चैतादृशश्रु-तिलिङ्गबाधनक्षममस्त्यत्र ब्रह्मलिङ्गम् । येन तदनुरोधाद्ब्रह्मपर-त्वमाश्रयितुमीशमहे । तस्माद्दिवः पर ज्योतिरादित्यादिकमेव । एव सति द्युमर्यादात्वब्रह्माधारत्वश्रुतिरप्यमुमेव पक्षमभ्युज्जि-(द्धि)नोतीति । एव पूर्वपक्षे सिद्धान्तः—ज्योतिश्चरणाभिधानादिति । दिवः पर ज्योतिरिह ब्रह्मैव । पूर्ववाक्ये द्युसबन्धितया ब्रह्मच-रणाभिधानात् । तत्र हि 'पादोऽस्य सर्वा भूतानि त्रिपादस्या-मृत दिवि ' ( छा० ३ । १२ । ६ ) इति त्रिपाद्ब्रह्म द्युसंबन्धि निर्दिष्टम् । तदेवेह द्युसबन्धात्प्रत्यभिज्ञायते । 'तावानस्य महिमा ' इत्युपक्रान्तज्यायस्त्वं व्युत्पादयति—पादोऽस्येति । सर्वाणि भुतान्यस्य ब्रह्मणः पाद एकदेशः । यथा चतुष्पाद युक्तात्पदार्थाच्चदेकदेशपादपरिमित वस्तु तस्मादल्पं तद्वत्प्रपञ्चोऽ-प्यल्प इति द्योतयितुं पादत्वकल्पनम् । अस्य परमात्मनो दिवि सत्यलोकोपरिभागे त्रिपात्—ब्रह्मविष्णुशिवात्मनाऽभिव्यक्तं स्व-रूपममृतात्मकमस्तीति मन्त्रार्थः । अथवा—दिवि द्योतनात्मके

स्वरूप इत्यर्थः । सर्वनामयच्छब्दस्य प्रक्रान्तपरामर्शको गायत्री-
वाक्ये प्रक्रान्तं ब्रह्मैव परामृशति । यद्यपि 'यदाग्नेयोऽष्टाकपा-
लो भवति' इत्यादौ प्रकरिष्यमाणपरामर्शकत्वमपि यच्छब्दस्य
दृष्टं तथाऽप्यौत्सर्गिकं प्रक्रान्तपरामर्शकत्वं प्रसिद्धार्थानुवादकत्वं
च तस्य न विना बलवद्बाधकं त्यागमर्हति । अत एव 'यस्यो
भयं हविरार्तिमार्छेत्' इत्यादौ विधिविभक्तिमध्यपूर्वार्थबोधन
स्वभावात्प्रत्ययाद्य यत्पदोपनीतां प्रसिद्धार्थानुवादकतामेवाऽऽद्रि-
यन्ते तान्त्रिकाः । अत एव लोकेऽपि देवदत्तोऽस्ति तमानय
यज्ञदत्तो गच्छतीत्यादौ सर्वनाम्ना प्रस्तुतदेवदत्त एव परामृ
श्यते । न प्रस्तोष्यमाणयज्ञदत्तः । यत्पदघटितवाक्यस्यानुवाद-
कत्वमपि 'यो ब्राह्मणो वेदवित्तस्मै देयम्' इत्यादौ प्रसिद्धमेव ।
तथा च प्रकृते यत्पदस्य सर्वनामतया प्रकृतवस्त्वपेक्षाया तद्घ-
टितवाक्यस्यानुवादत्वात्पुरोवादाकाङ्क्षाया च पूर्ववाक्ये द्युसं-
बन्धितया निर्दिष्टः पुरुष एव प्रकृतः । स च परमेश्वरः । 'विष्ट
भ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (भ० गी० १०।४२)
इत्यादिस्मृत्युपबृंहितात् 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं
दिवि' (छा० ३।१२।६) इति ।नाखिलपादत्वलिङ्गाच्च । 'गायत्री वा
इदं सर्वम्' (छा० ३।१२।१) इत्युपक्रमस्थसर्वात्मकत्वरूप-
पारमेश्वरलिङ्गाच्च स एवोपक्रान्तपरमेश्वरः सर्वनामाकाङ्क्षा
तद्घटितवाक्यस्य पुरोवादाकाङ्क्षा च स्वप्रतिपादकमन्त्रद्वारा
पूरयतीति द्युसंबन्धात्प्रत्यभिज्ञायमान यच्छब्दोपात्तमपि ज्योतिः
स एवेत्युपक्रमगतबलवच्छ्रुत्यनुरोधेन ज्योतिःश्रुतिरेवान्यथा+
नेतु युक्ता । ननु 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्व-
ज्योतिरेतेन सहस्रदक्षिणेन यजेत' इत्यादावेष इति सर्वनाम्न
उत्सर्गतः प्रस्तुतपरस्यापि प्रकृतज्योतिष्टोमपरत्वं न संभवति ।
ज्योतिर्वाक्यस्यान्यपरत्वे 'तेन व्यवहितस्य गायत्रीवाक्य-
स्थस्य ज्योतिष्टोम इति ज्योतिरिति च नामभेदस्यार्था
न्तरपरत्वस्वारस्यात् । अथेत्यनेनाधिकारार्थेन प्रकरणवि-
च्छेदावगमात्प्रकृतज्योतिष्टोम एवास्य वाक्यस्य सहस्रद-

---

+ अन्यथेति । तदुपलक्षितब्रह्मपरतयेत्यर्थः ।

क्षिणालक्षणगुणविधानार्थतायाम् 'एतेन' इत्यादिमात्रस्यैव पर्याप्ततया 'अथैष ज्योतिः' इत्यनुवादवैयर्थ्याच्च। तस्माज्ज्योतिर्नामकं यागान्तरमेव प्रस्तोष्यमाणम् 'एष' इति सर्वनाम्ना परामृश्यत इति संज्ञाधिकरणे × पूर्वतन्त्रे निर्णीतम्। तद्वदिहापि 'ज्योतिः' 'पुरुषः' इति संज्ञाभेदावगमात्। 'अथ यदतः परो दिवः' इत्यत्राथशब्देन प्रकरणभेदावगमाच्च। यदिति सर्वनाम्नो न प्रकृतब्रह्मपरामर्शकतेति चेत्। मैवम्। ज्योतिःशब्दस्य प्रकाशवाचिनस्त्रिपाद्रूपेण प्रकृते ब्रह्मणि वाचकतयैव वृत्तिसंभवात्। श्रुत्यन्तरे प्राचुर्येण दृष्टप्रयोगत्वात्। संज्ञाभेदेनार्थभेदस्यैव प्रकृतेऽभावात्। अथशब्देन प्रकरणभेदोक्तिस्त्वकिंचित्करी। गायत्रीविद्याप्रकरणभेदेऽपि यदिति सर्वनाम्न औत्सर्गिकप्रक्रान्तपरामर्शस्वभावानपोहनात्। न चैव ज्योतिष्टोमपरामर्शोपपत्तिः। यतस्तत्र ज्योतिष्टोमानुवादेन यागान्तरविधानेऽथशब्दावगतप्रकरणभेदस्यानुपपत्तिर्दुर्वारैव। ज्योतिष्टोमप्रकरणानुवृत्तेः। अत्र च प्राग्विहिताया गायत्रीविद्याया यत्पदस्य त्रिपाद्ब्रह्मपरामर्शकत्वेऽप्यनुवृत्तेरप्रसक्तेरनुपपत्त्यभावात्। अथशब्दस्याऽऽनन्तर्यार्थकत्वे तु कथंचिदप्युक्तदोषानवकाशः।

---

× पूर्वतन्त्रे निर्णीतमिति। अयमाशयः—'अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः, अनेन सहस्रदक्षिणेन यजेत' इति श्रूयते। तत्र संशयः—किमत्र 'एष ज्योतिः' इत्यनेन प्रकृतं ज्योतिष्टोममनूद्य तत्र सहस्रदानलक्षणो गुणो विधीयत आहोस्विज्ज्योतिष्टोमापेक्षया कर्मान्तरमेवेति। किं तावत्प्राप्तम्। ज्योतिष्टोममनूद्य सहस्रदानलक्षणो गुणो विधीयत इति। कर्मान्तरविधानापेक्षया गुणविधाने लाघवादिति प्राप्ते ब्रूमः—प्रकृतस्य ज्योतिष्टोमस्य 'अथ' इत्यनेन विच्छिन्नत्वात्तमनूद्य गुणविधानासंभवः। किंतु कर्मान्तरमेव विधीयते। न चैवं सति 'अथैष ज्योतिः' इत्युक्त एतच्छब्दोऽनुपपन्न इति वाच्यम्। संनिहितवाचिनैतच्छब्देनातीतसंनिहितस्येवाऽऽगामिसंनिहितस्यापि परामर्शसंभवात्। आगामिसंनिहितश्च ज्योतिःशब्दार्थः। स च ज्योतिःशब्दोऽतीतमपरामृशन्नपूर्वसंज्ञारूपत्वान्नूतनं किंचित्कर्माभिधत्ते। तथा चात्र संज्ञया कर्म भिद्यत इति सिद्धम्। विश्वज्योतिःसर्वज्योतिःशब्दविषयेऽप्ययमेव न्यायो द्रष्टव्य इति।

ज्योतिर्विद्यायाः स्वोपयोगिवाक्यार्थनिर्णयाय गायत्रीविद्याविषायकसंदर्भार्थपर्यालोचनापेक्षाद्योतनायाऽऽनन्तर्योपदेशस्य सार्थक्याद्यत्पदस्य प्रकृतब्रह्मपरामर्शकता युक्तैव । ब्रह्मपरवाक्यसंदर्भाचेदं ज्योतिर्ब्रह्मेत्यवगम्यते । गायत्रीविद्यायामितः प्राचीनायामव्यवहितायां ज्योतिर्विद्यातः परस्यां शाण्डिल्यविद्यायामपि 'सर्वं खल्विदं ब्रह्म' (छा० ३ । १४ । १) इति ब्रह्मप्रकरणसद्भावात् । शाण्डिल्यविद्याया ब्रह्मविषयत्वं च 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र० सू० १ । २ । १) इत्यधिकरणे स्पष्टम् । 'छन्दोभिधानात्' (ब्र० सू० १ । १ । २५) इति सूत्रे गायत्रीविद्याया ब्रह्मविषयत्वं च ।

नन्वेवं * संदंशात्मकपाठस्य कथं ज्योतिःश्रुतिबाधकत्वम् । श्रुतिव स्थानस्य दुर्बलत्वात् । न च "दर्शपूर्णमासौ प्रकृत्य प्रयाजसमीपे 'अभिक्रामं जुहोति' इति श्रूयते । तत्राभिक्राममित्यस्याभिक्रम्येत्यर्थकत्वाज्जुहोतिना प्राकरणिकसर्वहोमानुवादात्तदुद्देशेनाभिक्रमणं विधीयते । प्रयाजानां संनिधिसत्त्वेऽपि तदपेक्षया प्रकरणस्य बलवत्त्वात् । अन्यथाऽतिसंनिहितोत्तमप्रयाजाङ्गं स्यात् । न चावान्तरप्रकरणेन प्रयाजाङ्गतेति वाच्यम् । अवान्तरप्रकरणस्य विनियोजकत्वे सर्वेषामङ्गानां तत्सम्भवेन मिथोऽङ्गाङ्गिभावापत्तेरिति प्राप्ते—प्रयाजान्विधाय त्रीन्प्रयाजानिष्ट्वा 'समानयत उपभृतः' इत्यनेनोपभृत्स्थाज्यस्यार्धं जुह्वां स्थाप्यमित्येवंरूपं समानयनं विधाय 'अभिक्रामं जुहोति' इत्युक्त्वा 'यो वै प्रयाजानां मिथुनं वेद समिधो बर्हिरिव यजति तनूनपातमेकमिव' इत्यादिप्रयाजानिष्ट्वा 'हवींष्यभिघारयति' इत्यनेन प्रयाजपरामर्शात्तावत्संदर्भस्य प्रयाजप्रकरणत्वनिश्चयात्तन्मध्ये यच्छ्रुतिहितं तत्तत्प्रयाजाङ्गमिति निश्चयात् । यदीयाङ्गताया तु न संदंशो न तस्यावान्तरप्रकरणम् । तदुक्तम्—

---

* संदंश इति । संदंशो नाम—एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम् ।

न विद्यते तु संदंशो यत्र वाचनिकैर्गुणैः ।
तत्राङ्गानां कथंभावः सम्प्यविनियोजकः ॥
निष्फलत्वेन सर्वेषामविशेषोऽवगम्यते ।
क्व शेषः कस्य शेषित्वमत सर्वं प्रधानगम् ॥

इति प्रयाजाभिक्रमणन्याये स्थितम् । तन्न्यायेनात्रापि ब्रह्मप्रकरणोन्मेषात्तत्प्रकरणे प्राकृतज्योतिःप्रतिपादनवैयर्थ्यपरिहाराय प्रकरणानुरोधेन ज्योतिःश्रुतेर्ब्रह्मपरताऽऽश्रयणीया" इति वाच्यम् । प्रयाजाभिक्रमणे ह्युभयतः प्रयाजाङ्गसंदंशमात्रेण नावान्तरप्रकरणोन्मेषः । किंतु प्रजानामङ्गाकाङ्क्षाया अभिक्रमणस्य च 'अभिक्रामं जुहोति' इति वाक्येन होमान्वयेऽवगतेऽपि कोऽयं विशेषहोम इत्यपेक्षायाश्च सद्भावेनोभयाकाङ्क्षारूपं प्रकरणमस्त्येव । परंतु बलीयस्याः प्रधानाकाङ्क्षाया जुहोतिपदस्य प्रधानहोमपरत्वप्रसक्त्या प्रयाजप्रकरणस्य जुहोतिपदार्थानियामकत्वप्रसक्तौ श्रुत्यादिप्रमाणप्राप्ताङ्गसंदंशेन विद्यमानस्यैव प्रकरणस्योद्भेदः संपाद्यते । अत्र च तिसृणां विद्यानामन्योन्यनिरपेक्षत्वात्सत्यपि प्रकरणे ब्रह्मोपासनाङ्गतया प्राकृतज्योतिरुपासनासंभवाच्च न संदंशेन श्रुतिबाधो न्याय्य इति । मैवम् । 'सर्वं खल्विदं ब्रह्म' ( छा० ३ । १४ । १ ) इति शाण्डिल्यविद्यागते वाक्ये इदंशब्दो न सर्वविशेषणम् । व्यर्थत्वात् । न च 'आत्मैवेदं सर्वम्' इत्यादिवाक्येष्विदंपदं सर्वविशेषणं तेन चेदंपदेन सर्वस्य दृश्यत्वोपक्षेपद्वारा मिथ्यात्वमुपक्षिप्य सर्वपदार्थस्य विवर्ताभिप्रायोपहरणेनाऽऽत्मनो निर्विकारस्य तत्सामानाधिकरण्यं बाधाया व्युत्पाद्यते, एवं प्रकृतेऽप्यस्तु, ऐक्यरूप्यसंभवे वैरूप्यकल्पनाया अन्याय्यत्वादिति वाच्यम् । 'आत्मैवेदं सर्वम्' इत्यादिषु निर्विशेषब्रह्मप्रकरणगतवाक्येष्विदंशब्दस्य सर्वस्य मिथ्यात्वद्योतकत्वेन सर्वपदार्थविशेषणत्वसार्थक्येऽपि सविशेषब्रह्मप्रकरणस्थेऽस्मिन्वाक्ये तद्द्योतनस्य निष्प्रयोजनत्वात् । प्रत्युत श्रद्धाविघातकतया तद्विरोधितैव । तथा चेदंशब्दो ब्रह्मविशेषणमेव । इदंशब्दश्च सर्वनाम तदेव ब्रह्मविशेषणं भवेद्यदि पूर्वं

संदर्भे ब्रह्म प्रस्तुतम् । ततश्च गायत्रीवाक्ये ब्रह्मणः प्रस्तुतत्वेऽपि ज्योतिर्वाक्यस्यान्यपरत्वे तेन व्यवहितस्य गायत्रीवाक्यस्थस्य ब्रह्मणः परामर्शो न सम्भवतीतीदंशब्दो ज्योतिर्वाक्ये ब्रह्मणः प्रस्तुतत्वमपेक्षते । अत इदंशब्दयुक्तसदंशादपि ज्योतिर्वाक्ये ब्रह्म सिध्यति । दीप्यत इत्यनेन च प्रभावत्त्वमुच्यते । तच्च ब्रह्माद्यात्मकदिव्यशरीरस्य ब्रह्मणो नानुपपन्नम् । किंचेत्याद्युक्तमपि न सत् । नामादावपि ब्रह्मदृष्टिदर्शनात् । अल्पफलश्रवणमपि न ब्रह्मताविरोधि । उपाधिविशेषावलम्बनेन ध्यानस्य संसारगोचरोच्चावचफलदातृत्वसंभवात् । यथा हि लोके सार्वभौमोऽपि तत्तत्सेवककृतोपासनभेदेन कस्मैचिदल्पमेव फलं कस्मैचिन्महत्फलं ददातीत्येवमेतद्द्युमर्यादात्वश्रुतिश्चान्तराधिकरण ऐश्वर्यमर्यादाश्रुतिव्याख्यानरीत्या व्याख्येया । पूर्वपक्षे तदभिधान चाभ्युच्चयमात्रम् । तस्मात्सिद्धं ज्योतिर्वाक्य ब्रह्मपरमिति ॥ २४ ॥

नन्वेतदनुपपन्नम् । गायत्रीवाक्यगताया 'त्रिपादस्यामृत दिवि' ( छा० ३।१२।६ ) इति ऋचोऽपि ब्रह्मणि द्युसबन्धप्रतिपादकत्वासिद्धेः । तथा हि—गायत्रीविद्यायामेवं हि श्रूयते- 'गायत्री वा इद९ सर्वं भूतं यदिदं किंच वाग्वै गायत्री वाग्वा इद९ सर्वं भूत गायति च त्रायते च ॥ १॥ या वै सा गायत्रीय वाव सा येय पृथिव्यस्या९ हीद९ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥ या वै सा पृथिवीय वाव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणा प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥ यद्वै तत्पुरुषे शरीरमिद वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥ सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनूक्तम् ॥ ५ ॥ तावानस्य महिमा ततो ज्यायाश्च पूरुष । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥ (छा०३।१२।६ । अस्यार्थः— वागर्थत्वाद्वागात्मकानि सर्वाणि भूतानि गायत्री । सर्वभूताश्रयत्वात् । पृथिव्यपि गायत्री । शरीरहृदययोर्भूतात्मकप्राणाश्रय-

त्वाङ्गायत्रीत्वम्। तथा च भूतपृथिवीशरीरहृदयरूपपादचतुष्टय-युता वाक्प्राणभूतादिचतुष्टयरूपषट्प्रकारा गायत्रीति। चतुरक्षर-णात्मिका षट्प्रकारात्मिकेति यावत्। अत्र यद्यपि मुख्यं सर्वभूता-त्मत्वं मन्त्ररूपाया गायत्र्या न संभवति तथाऽपि गौणं संभव-त्येव। उपासनार्थं च गौणमपि ग्राह्यम्। ग्रामरक्षके पुरुषेऽयमेव सर्वो ग्राम इतिवत्। भूतहिंसां मा कुरुष नरको भूतहिंसकस्य भविष्यतीत्येवंरूपप्रतिपादनरूपेण गानेन सर्वभूतत्राणहेतुत्वाद्वा-मेव सर्वभूतानीति वाचो यथाकथंचित्सर्वभूतात्मत्वोपपादनेन तदभिन्नाया गायत्र्या अपि सर्वभूतत्वं निरूप्यते। अतो वाक्य-शेषानुसारेण सर्वभूतात्मत्वं गायत्र्याः पर्यवस्यति। पृथिव्या-त्मत्वमपि भूतप्रतिष्ठात्वसामान्येनाप्युपपद्यते। शरीरहृदयाद्यात्म-त्वमपि भूतैकदेशप्रतिष्ठात्वसामान्यात्। तत्र गौणभूतात्मत्वेन सर्वभूतप्रतिष्ठात्वमप्यर्थात्सिद्धं तादृशं भवतीत्येदभिप्रायम्। अतो वाक्यशेषानुसारेण भूताद्यात्मत्वस्य गौणस्यैव प्राप्तेर्नेदं गायत्र्या ब्रह्मत्वे लिङ्गम्। सैषा चतुष्पदेति तु ऋग्ग्रहण एव समञ्जसम्। 'टाबृचि' (पा० सू० ४।१।९) इति ऋचि वाच्यायामेव टापो विधा-नात्। न च त्रिपदाया गायत्र्याश्चतुष्पदात्वमनुपपन्नम्। षड्विंशे त्यनेन चतुर्विंशत्यक्षराया: षड्भिः षड्भिरक्षरैश्चतुरोंऽशान्प्रकल्प्य चतुष्पदात्वसमर्थनस्य दर्शितत्वात्। न च 'सैषा' इतिवच-नानुसारेण प्रकृतानामेव भूतानां पादत्वं प्रतीयत इति वाच्यम्। तथा सति वाचा सह पञ्चपदात्वप्रसङ्गात्। एवं चानया सर-ण्या 'एतावान्' इत्यादेर्ऋक्परत्वावसायात्तत्र ब्रह्मणो द्युसं-बन्धितयाऽप्रक्रमात्प्रक्रान्तपरामर्शस्वभावेनापि सर्वनाम्ना कथं तत्परामर्शः। न च पुरुषसूक्ते ब्रह्मपरतयाऽवगतस्य सर्वात्म-कताप्रकाशकस्य कथं छन्दोभिधायकत्वमिति वाच्यम्। उपक्रमेऽ-भ्यस्ताया गायत्रीश्रुतेरन्यथा नेतुमशक्यत्वाच्छन्दःपरत्वे निर्णीते सति पश्चात्पुरुषसूक्ते ब्रह्मपरतया निर्णीतस्यापि 'तदेतदृचाऽ-भ्यनूक्तम्' इति वचनेनैव गायत्रीप्रतिपादकतया विनियुक्तस्या-र्थान्तरपरत्वकल्पनोपपत्तेः। विनियोगभेदेन मन्त्राणामर्थभेदस्य दृष्टत्वात्। मन्त्रप्रतिपाद्यं सर्वभूतात्मत्वमपि पूर्ववदेवोपासनार्थं

भविष्यति । पुरुषत्वं च पूर्णत्वात् । 'त्रिपादस्यामृतं दिवि' इत्येतत्तु बाह्यशरीरहृदयाकाशान्तरत्वाभिप्राय व्याख्येयम् । गायत्र्यामेव ऋगुदाहरणानन्तर हीद वाक्यं पठ्यते—'यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥ अयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशः ।'८॥ अय वाव स योऽयमन्तर्हृदय आकाशो यो वै सोऽन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति' (छा० ३ । १२।९) इति । अत्र हि वाक्ये ब्रह्मशब्दो वेदैकदेशभूतायां गायत्र्यामुपपन्न एव । तस्या एव गायत्र्याः शरीरबाह्यशरीरान्तराकाशहृदयाकाशभेदस्य ध्यानार्थं प्रतिपादनात् । द्युशब्दस्य चाऽऽकाशपरत्वेऽप्युपपत्तेश्च । तदभिप्रायम् 'त्रिपादमृतं दिवि' इत्युपपन्नम् । तस्यामेवोपासनार्थं पूर्णत्वगुणविधानात् । 'पूर्णत्वात्पुरुषः स्मृतः' इतिनिरुक्तानुसारेण पुरुषत्वमुपपन्नम् । न च वाक्यशेषसामञ्जस्याय गायत्रीपदमेव तदुपहितब्रह्मपरमस्त्विति युक्तम् । गायत्र्युपहितस्यापि परिच्छिन्नत्वेन पूर्णत्वभूताधारत्वानुपपत्तेर्लाक्षणिकत्वात् । उपासनार्थं तदुपदेशश्चेद्वरं गायत्रीश्रुत्यनुसारेण च्छन्दस एव पूर्ववाक्ये ग्रहणम् । अन्यथा स्वशब्देन ब्रह्मानभिधाय गायत्र्यादिपदलक्षणया तत्प्रतिपादनस्य निष्फलत्वापत्तेरित्याशङ्कां प्रत्याह—

## छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॥ २५ ॥

त्रिपादिति वाक्ये द्युसंबन्धितया छन्दस एवाभिधानान्न द्युसंबन्धप्रत्यभिज्ञेयतद्वाक्याभिहितब्रह्मणो यच्छब्देन परामर्श इति चेत् । न । तथा गायत्रीद्वारेण तदनुगते तदुपलक्षिते ब्रह्मणि चेतोर्पणस्य चित्तसमाधानस्यानेन ब्राह्मणेन प्रतिपादनात् । यतो विकारद्वारेण तदुपलक्षितेन ब्रह्मणि चेतोर्पणस्यान्यत्रापि दर्शनमस्ति । यथा—'एत ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' (ऐ० आ० ३ । २ । ३ । १२ ) इति । एवं च गायत्र्युपरागेणोपासनार्थं गायत्रीपदेन तदु-

पलक्षितब्रह्मण एवोपलक्षणीयत्वान्न लक्षणानुसरणनैष्फल्यम्। न वा सर्वात्मकत्वाद्यनुपपत्तिरिति भाव ॥ २५ ॥

नन्विद लक्षणाद्याश्रयण तदेवोपपद्यते यदि मुख्यार्थे बाधकम्। न च वाक्यशेषगतसर्वात्मकत्वादिकमेव च्छन्दःपरत्वे बाधकमिति वाच्यम्। वाक्यशेषानुसारेणोपासनार्थमेव सार्वात्म्य प्रतिपाद्यत इत्युक्तत्वादाह—

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

भूतादिपादव्यपदेशस्य ब्रह्मण्येवोपपत्तश्चैवमभ्युपगतव्यम्। न चोक्तयुक्त्या वाचो यथाकथचित्सर्वात्मकत्वमुपपाद्य तदभिमाया गायत्र्यास्तदुपपादनादिद गौणमिति वाच्यम्। 'गायत्री वा इदं सर्वम्' इत्यस्य मुख्यसार्वात्म्यपरत्वेऽपि 'वाग्वै गायत्री' इत्यादिवाक्यशेषस्य गायत्र्यवच्छिन्नब्रह्मस्तावकत्वेन ब्रह्मोपाधिभूताया गायत्र्या वोपासनार्थं वागात्मकत्वप्रतिपादकत्वेनोपपन्नस्य पूर्व वाक्यगतसार्वात्म्ये गौणताप्रतिपादनपरत्वकल्पनाया अयुक्तत्वात्। नन्वेतत्सूत्रस्य 'इदं सर्वं भूतम्' इतिवाक्योक्तसार्वात्म्यसमर्थनपरत्वे 'सर्वात्मत्वव्यपदेशात्' इत्येवं सूत्र स्याल्लाघवादिति चेत्। मैवम्। यद्यप्युक्तसार्वात्म्यसमर्थनपरमिद सूत्रं तथाऽपि त्वदुक्तरीत्या सूत्रविन्यासे सार्वात्म्ये गौणत्वशङ्कायाः परिहारो न लभ्यत इतीत्थं विन्यस्तम्। एव सति भूतादिपादव्यपदेशरूपतावानस्य महिमेत्यादिमन्त्रात्मकोपपत्तेः सद्भावात्। भूताद्यात्मकत्वपर्यवसितं भूताद्यात्मकपादत्व यथाश्रुतमेवानुसरणीयम्। तथा च भूतादिव्यपदेशस्य ब्रह्मण्येव सभवाद्गायत्रीपद ब्रह्मपरमेवेत्यर्थादुक्ताशङ्कापरिहारो लभ्यते। न च प्रकृते भूताद्य एव पादा ग्राह्या इत्यत्र नियामकाभावः शङ्क्य। 'गायत्री वा इद सर्वम्' इति पूर्ववाक्ये सर्वभूताद्यात्मतया निरूपिताया गायत्र्याः 'सैषा' इति पदेन परामर्शाच्चतुष्पदेति पूर्वोक्तप्रकारस्यैव निगमनमित्यवगमात्। न च तथा सति वागात्मतयाऽपि गायत्र्या निरूपितत्वात्पञ्चपदेति वक्तव्यमिति शङ्क्यम्। 'वाग्वा इदं सर्वं भूतम्' इति वाक्यस्य हेतुवन्निगदार्थवाद-

न्यायेन भूतात्मकत्वोपपादकतया 'अस्यां हीदं भूतं प्रतिष्ठितम्' इतिवाक्यत्राद्भिमकक्षारूढत्वेन तदर्थस्य षड्विधेति पदेन सङ्ग्रहोपपत्तेः। षड्विधेत्यनेन हि वागात्मना यद्गानत्राणहेतुत्वरूपं प्रकारद्वयमुक्तं यच्च पृथिव्यात्मना भूतप्रतिष्ठात्वभूतानतिक्रमणीयत्वरूपं प्रकारद्वयमुक्तं तदुच्यते। तथा च गायत्री चतुश्चरणात्मिका षट्प्रकारा च। इत्यतो न चतुष्पदेत्यस्य ब्रह्मणि सर्वात्मत्वनिगमनाभिप्रायकत्वे काचिदनुपपत्तिः। 'टाबृचि' (पा० सू० ४।१।९) इत्यनुशासनविरोधोऽपि नास्त्येव। आध्यासिकेनाभेदेन ऋगुपहिते ब्रह्मणि गायत्रीपदप्रयोगवदृगनुशिष्टाप्पोऽपि प्रयोगेऽनुपपत्त्यभावात्। तथा चायं निर्गलितोऽर्थः—गायत्रीपदं सर्वभूतात्मकत्वरूपाल्लिङ्गानुसारेण नेयमुतेदमेव श्रुत्यनुसारेण नेयमिति विशये—गायत्रीश्रुतिस्तावदनिर्णीतार्थैव। तत्र वाक्यशेषस्यापि न निर्णायकत्वम्। तस्योभयथाऽप्युपपत्तेरुक्तत्वात्। एवं च स्वभावबलवत्तया श्रुत्या निर्णये प्रसक्ते तन्निरासायेदमुक्तं भूतादीत्यादि। तथा च संदिग्धामभ्यस्तामपि श्रुतिमपेक्ष्य निर्णीतार्थकतावानित्यादिमन्त्रसंवाददृढीकृतमभ्यस्तं लिङ्गमेव बलीयः। उपक्रमोपसंहारयोः समबलत्व उपक्रमस्याधिकबलवत्त्वे त्वोपक्रमानुसारेण निर्णयस्योक्तत्वात्। न च मन्त्राद्यभिप्रायेण 'सैषा चतुष्पदा गायत्री' इत्युक्तौ तदर्थकतया मन्त्रोदाहरणमयुक्तम्। मन्त्र एकपादात्मनैव सर्वभूतात्मकत्वाऽमृतात्मकपादत्रयस्य शुद्धब्रह्मनिष्ठतया निर्देशात्। न हि पृथिवीशरीरादीनाममृतत्वसंभव इति वाच्यम्। अत्र चतुष्पदेत्युक्त्या फलितस्य सर्वभूतात्मकत्वस्य 'तावानस्य महिमा पादोऽस्य सर्वा भूतानि' इत्यनेनैवोक्ततया तदंशमादाय मन्त्रसंवादस्याप्रत्यूहत्वात्। 'इदं सर्वं भूतं यदिदं किंच' इति निरवशेषभूतपरिग्रहोक्त्या 'त्रिपादस्यामृतं दिवि' इति कार्यमूर्तिपरिग्रहसंभवाच्च। इयांस्तु विशेषः—मन्त्रोक्तं पादचतुष्टयं प्रकारान्तरेण विभज्य तत्र पादचतुष्टयत्वेनाभिहितमिति। न च तावता संवादविरोधः। फलीभूतसर्वात्मकत्वप्रतिपत्तेरुभयत्र तुल्यत्वात्। अत एव 'पुरुषसूक्ते सहस्रशीर्षत्वादिमहिमा प्रस्तुतः, इह तु

सर्वभूतात्मत्वादेरिति कथं पुरुषसूक्तमन्त्रस्य योऽर्थः स एवेह ग्रहीतुं शक्यते' इति परास्तम्। उभयत्रापि सर्वात्मतानिरूपणस्य ब्रह्मणि तावन्मात्रत्वभ्रमव्युदासायाखिलभूतानां तदेकदेशत्वोक्त्या तत्र ज्यायस्त्वप्रतिपादनस्य च तुल्यत्वात्। किंचात्र यत्पदेन प्रकृतं गायत्रीपदप्रतिपाद्यमाकृष्य ब्रह्मत्वसंबन्धानुवादादवगम्यते—गायत्री ब्रह्मेति। न चात्र ब्रह्मपदस्य वेदपरत्वम्। ब्रह्मण एव प्रयोगप्राचुर्येण झटिति बुद्धावारोहात्। अपि च प्रकृतस्य गायत्रीपदाभिधेयस्य हृदयाकाशाभेदेनोपासनां विधाय हृदयस्य प्रागादिषु चतसृषु दिक्षूर्ध्वं च पञ्च यानि च्छिद्राणि तेषु प्राणापानव्यानोदानसमानानादित्यचन्द्राग्निपर्जन्याकाशदेवताभिश्चक्षुश्श्रोत्रवाङ्मनोवायुसंबन्धिनीभिरधिष्ठिताननुक्रम्य— +
'ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गलोकस्य द्वारपाः स य एतानेवं पञ्च [ब्रह्म]पुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते' (छा० ३।१३।६) इत्याम्नायते। अत्र गायत्रीपदार्थं प्रति वेश्मत्वेन कल्पिते हृदये पञ्चसु च्छिद्रेषु द्वारत्वेन कल्पितेषु विद्यमानान्द्वारपालकत्वेन ध्येयान्प्राणादीन्प्रति ब्रह्मपुरुषत्वाभ्यासोऽपि गायत्र्या ब्रह्मता गमयति। इदं च सौत्रचशब्देन संगृहीतम्॥ २६॥

ननु द्युसंबन्धिप्रत्यभिज्ञानाद्यच्छब्देन 'त्रिपादस्यामृतं दिवि' इति प्रकृत ब्रह्म परामृश्यत इति न युक्तम्। प्रकृत्यर्थप्रत्यभि-

---

+ अनुक्रम्येति। तथा च च्छान्दोग्योपनिषदि श्रूयते—'तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद॥ १॥ अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान्यशस्वी भवति य एवं वेद॥ २॥ अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक्सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्य(स्व्य)न्नादो भवति य एवं वेद॥३॥ अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान्व्युष्टिमान्भवति य एवं वेद॥ ४॥ अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान्भवति य एवं वेद'॥ ५॥ इति

ज्ञानेऽपि प्रत्ययार्थभेदावगमे सत्यप्रधानप्रकृत्यर्थप्रत्यभिज्ञाया अ-प्रयोजकत्वात् । न च सख्येव कारकमपि प्रकृत्यर्थविशेषण-म् । एवं सति गामानयेत्यादौ कर्मत्वादिविशेषितगवादीना-मभेदातिरिक्तसम्बन्धेन धात्वर्थविशेषणत्वापातात् । कारकस्य विभक्त्यर्थत्वे प्रमाणाभावप्रसङ्गाच्चेत्यादिकमन्यत्र विस्तृतम् । एवं च दिवीत्यस्य द्युलोकान्तर्गतस्य दिव इत्यत्र च तदनन्तर्ग-तस्य च प्रत्ययात्कथं प्रत्यभिज्ञोक्तिः सगता स्यादित्या-शङ्कां प्रत्याह—

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

यद्यपि च विभक्त्यर्थः प्रधानं तथाऽपि नोपदेशभेदा*त्प्रत्य-भिज्ञाभावः शङ्कितु युक्तः । उभयस्मिन्सप्तम्यन्ते पञ्चम्यन्ते च निर्देशे कृतेऽपि तदर्थयोरविरुद्धतया प्रत्यभिज्ञाया अविरोधात् । यथा हि वृक्षाग्रे श्येन इति वृक्षाग्रात्परतः श्येन इति निर्देशयोः सप्तम्यादिभेदेऽपि न श्येनाभेदप्रत्ययविरोधस्तथा दिवि दिवः परमित्युक्तावपि नाभेदप्रत्यभिज्ञाविरोधः । सप्तम्युक्ताधिकरण-तायाः पञ्चम्या व्यवस्थापनात् । सप्तमीनिर्देशेन हि वृक्षाग्रगतेषु पल्लवेषु विलीन इव पल्लवानामग्रभागे स्थितस्तेनाऽऽवृतोऽपि पक्षी निर्देष्टुं शक्यः । ततः साधारणः सप्तमीनिर्देशः । पञ्चमी-निर्देशे तु वृक्षाग्रमध्यवर्ती श्येनो न प्रतिपादयितुं शक्यते । =तस्मिन्वृक्षाग्रात्पर इति निर्देशानुपपत्तेः । अतो वृक्षाग्रात्पर इति निर्देशे वृक्षाग्रात्यन्तावयवभूता ये पल्लवास्तदुपरिभावो लभ्यते । तत्र च यद्यपि वृक्षाग्रात्परभावो वृक्षासंलग्नस्यापि संभवति तथाऽपि सप्तमीबलेन वृक्षाग्रसंश्लेषस्यावगमेन पञ्चम्या वृक्षाग्रोपरि संलग्न एव पर्यवसानात् । तथा च यथा केवलसप्त-

---

* प्रत्यभिज्ञाभाव इति । प्रत्यभिज्ञाया अभाव इत्यर्थ । अय भाव — 'प्रकृतिप्रत्ययार्थयो प्रत्ययार्थस्यैव प्राधान्यम् । इति व्युत्पत्त्यनुरोधेन प्रत्य-यार्थस्य प्राधान्ये स्वीक्रियमाणेऽप्रधानभूतप्रकृत्यर्थप्रत्यभिज्ञानेऽपि प्रधानप्रत्यया-र्थभेदावगमे सति अप्रधानप्रकृत्यर्थप्रत्यभिज्ञाया अप्रयोजकत्वेन सप्तम्यन्तपञ्च-म्यन्तोपदेशभेदात्प्रत्यभिज्ञाया अभाव इति शङ्का नोचितेति ।

= तस्मिन्निति । वृक्षाग्रमध्यवर्तिनि श्येन इत्यर्थ. ।

मीनिर्देशे वृक्षाग्रमध्यस्थितेरपि केवलपञ्चमीनिर्देशे वृक्षाग्रासंलग्नतया अपि प्रतीतिर्भवति। उभयनिर्देशे तु मध्यभागाद्यसलग्नस्थितिव्यावर्तनेनाग्रोपरिभागे संलग्न एव श्येनोऽवगम्यत इति सप्तमीपञ्चम्योः परस्परार्थनियामकतया यथा न विरोधस्तथा 'दिवि दिवः' इति निर्देशेऽपि न विरोधः। द्युलोको हि द्वेधा। भूर्भुवः सुवर्महर्जनस्तपः सत्यमिति सप्तलोकीपक्षे--पृथिवी भूलोकः। पृथिव्यादित्ययोर्मध्ये भुवर्लोकः। आदित्यादुपरि ध्रुवलोकान्तस्त्रिदशनिवासो द्युलोक एव स्वरिति व्यवह्रियते। तदुपरि महरादिलोका इति एकः प्रकारः। भूर्भुवः सुवरिति त्रिलोकीपक्षे—आद्यौ पूर्ववदेव। स्वर्लोकस्तु सूर्यमण्डलमारभ्य सत्यलोकान्तो द्युशब्दार्थोऽपि स एव। 'त्रिपादस्यामृतं दिवि' (छा० ३। १२।६) इत्यत्र तु कः पक्षो विवक्षित इति विशये— 'दिवः परः' इत्युत्तरवाक्यपर्यालोचनया लोकत्रयपक्ष एव विवक्षित इति निर्णीयते। सप्तलोकपक्षमादाय द्युलोकग्रहणे 'विश्वतः पृष्ठेषु' इत्याद्यनुपपत्तेः। ततोऽप्युपरि विश्वान्तर्गतानां महरादीनां विद्यमानत्वात्। लोकत्रयपक्षमादाय सत्यलोकान्तद्युलोकविवक्षया तदग्रभागावच्छेदेन विद्यमानताप्रतिपादको 'दिवि' इति निर्देशोऽभ्युपगम्यते चेत् 'विश्वतः पृष्ठेषु' इत्यादि समञ्जसं भवति। तस्माद्युक्तं द्युसंबन्धप्रत्यभिज्ञानात् 'त्रिपादस्यामृतं दिवि' इति वाक्ये प्रक्रान्तब्रह्मैव 'यत्' इति सर्वनाम्ना परामृश्यत इति। सूत्रक्रमस्तु—आद्ये स्वपक्षसाधकोक्तिः। द्वितीयादित्रये बाधकोद्धारः। तत्रापि द्वितीयतृतीययोः प्रत्यभिज्ञासंभवमुपेत्य सिद्धान्ते मुख्यमार्गान्यथासंभवात्त्रिपादित्यादिवाक्यगायत्रीवाक्ययोर्न ब्रह्मपरत्वम्। ततश्च यत्पदस्य ब्रह्मपरामर्शकत्वासिद्धिमाशङ्क्य तदुद्धारः। द्वितीये वाक्यशेषावगतगौणतादात्म्यसंभवादासिद्धिशङ्कायां निरासः। चतुर्थे प्रत्यभिज्ञाया एवासिद्धिर्निराकृतेति।

यत्तु चन्द्रिकायाम्—'चरणाभिधानात्' इत्यस्य पादाभिधानादिति यथार्थविवक्षाया छान्दसार्थं श्रुत्यनुगमार्थं च 'पादाभिधा-

नात् ' इत्येव सूत्रांशः स्यात् । किंचास्मदुक्तरीत्याऽऽनन्दमयाधिकरणाक्षेपेण पूर्वपक्षसंभवे तदनाक्षेपेण ' अथ यदतः ' इति वाक्योदाहरणमयुक्तम् । किं च--

पौनरुक्त्यं च परमते ज्योतिर्भूतादिसूत्रयोः ।
पादोपदेशादन्या हि नैवास्ति चरणाभिधा ॥

' पादोऽस्य सर्वा भूतानि ' इतिपूर्ववाक्यस्थपादाभिधानादन्यस्य ज्योतिर्वाक्ये पादाभिधानस्याभावात्तस्य च भूतादिसूत्रेणैवोक्तत्वात् ' चरणाभिधानात् ' इत्यस्य पौनरुक्त्यम् । अथ ' चरणाभिधानात् ' इत्यनेन ' पादोऽस्य सर्वा भूतानि ' इतिमन्त्रवाक्यस्थं सर्वभूतानामेकपादत्वममृतस्य त्रिपात्त्वं चोच्यते । ' भूतादिपाद ' इत्यनेन ' सैषा चतुष्पदा ' इति * ब्राह्मणवाक्यस्थ भूतपृथिवीशरीरहृदयाना पादत्वमुच्यते । अतो न पौनरुक्त्यमिति चेत् । न । ' चरणाभिधानात् ' इत्यनेनैव × मन्त्रब्राह्मणोभयगतपादाभिधानसंभवे सूत्रद्वयवैयर्थ्यात् । किंच त्वन्मते ब्रह्मणो भूतादिपादत्वं तदात्मत्वम् । तथा च सर्वात्मकत्वम् ' चरणाभिधानात् ' इत्यनेनैवोक्तमिति किं तदेकदेशभूताद्यात्मकत्वप्रतिपादकेन भूतादिसूत्रेण । किंच ' चतु

---

* ब्राह्मणवाक्यस्थमिति । उपनिषद्वाक्यस्थमित्यर्थ । छान्दोग्योपनिषदि हि तृतीयाध्याये द्वादशखण्डे—' इद सर्वं भूतम् ' इति भूतम् ' येय पृथिवी ' इ ति पृथिवीम् । ' यदिदमस्मिन्पुरुषे शरीरम् ' इति शरीरम्, ' यदिदमस्मिन्नन्त पुरुषे हृदयम् ' इति हृदय चोक्त्वा ' सैषा चतुष्पदा षड्विधा गायत्री ' इति भूतादीना चतुर्णां पादत्व व्यपदिश्यते । एतच्च सर्वमिदानींतनचन्द्रिकापुस्तक एवोपनिबद्धमुपलभ्यते ।

× मन्त्रब्राह्मणोभयेति । ' पादोऽस्य सर्वा भूतानि त्रिपादस्यामृत दिवि ' इत्यय म त्र. । ' सैषा चतुष्पदा षड्विधा गायत्री ' इति च्छान्दोग्योपनिषद्वाक्य तु ब्राह्मणवाक्यमत्र बोध्यम् । एव च ' चरणाभिधानात् ' इत्यनेनैवोभयगतपादाभिधाने संभवति सति ' भूतादिपादव्यपदेशोपपत्तेश्चैवम् ' इति सूत्र व्यर्थं स्यात् । तथा च ' एकसत्त्वेऽपि द्वयं नास्ति ' इति लोकव्यवहारानुरोधेन ' ' सूत्रद्वयवैयर्थ्यात् ' इत्यनूदितम् ।

१६।८ ' इत्यत्र चतुःशब्दो न भूतादिपरः। पूर्ववाक्ये × वाक्प्राणयोरप्युक्त्या भूतादीनां षट्त्वेन चतुष्ट्वायोगात्। अत एव श्रुतौ ' षड्विधा ' इत्युक्तम्। न च वाच्यं भूतादीनां वाक्प्राणरहितानां चतुर्णां पादत्वं तत्सहितानां षण्णां तु विधात्वमिति पादशब्देन तदात्मकत्वविवक्षायां वाक्प्राणयोरपि तदात्मकत्वाद्विधाषट्कान्तर्गतस्य भूतादिचतुष्टयस्य पृथक्कृत्य पादत्वोक्तेर्निष्फलत्वात्। उपासनार्थं ब्रह्मणि चरणत्वारोपश्चेत्। गायत्र्याख्यच्छन्दस्येव स स्यादिति गायत्री ब्रह्मेतिसिद्धान्तासिद्धिः। तस्मात् ' सैष ' इत्यत्र न पूर्ववाक्यस्थानां भूतादीनां पादत्वमुच्यते किंतु षाड्विध्यमनूद्य चतुष्पदत्वं विधाय तद्विवरणाय 'पादोऽस्य' इत्यादिऋगुदाहृतेति युक्तम्। अन्यथा मन्त्रब्राह्मणयोर्भिन्नार्थकत्वाद्ब्राह्मणोक्ते ' तदेतदृचाऽभ्यनूक्तम् ' इति मन्त्रसंमतिर्न स्यात्। ' त्रिपादस्यामृतं दिवि ' इति ' पादोऽस्य ' इति पादशब्दनिर्दिष्टे चतुष्टये सति तदनिर्दिष्टस्य भूतपृथिव्यादेः पादचतुष्टयत्वायोगाच्च। ' दिवि ' ' दिवः ' इति विरुद्धविभक्तिद्वयसहितद्युभातिपदिकार्थसंबन्धस्यैक्यं तद्रहितचतुःसंख्यानां तु मन्त्रब्राह्मणस्थपादानां भेद इत्यस्यात्यन्तमयुक्तत्वाच्चास्माकं मते +षाड्विध्यं तु ='गायत्र्या संस्थितो विष्णुः' इति

---

× वाक्प्राणयोरिति। 'वाग्वै गायत्री वाग्वा इदं सर्वम् ' इत्यनेन वाचः ' अस्मिन्हीमे प्राणाः प्रतिष्ठिताः ' इति प्राणानां चोक्तिर्बोध्या।

+ ननु भवन्मतेऽपि भूतानां पादत्वेन निर्देशात्कथं षाड्विध्यम्। यदि विधान्तर्गतानामपि भूतत्वं पृथक्कृत्य पादत्वमुच्यते तर्हि सममेतन्ममापीत्यत आह—अस्माकमिति। = गायत्र्यामिति। गायत्र्यां संस्थितो विष्णुः श्रीरूपः सूर्यसप्रभः। द्वितीयश्चैव मत्स्यादिर्भूतनामाऽवतारगः ॥ १ ॥ तृतीयो वापि सत्यः स श्रीरूपो हयशीर्षकः। चतुर्थः पृथिवीसत्यः श्रीरूपः पीतवर्णकः ॥ २ ॥ जीवस्यान्तर्गतो व्याप्य शारीरमितिनामकः। पञ्चमस्तद्धृदिस्थस्तु षष्ठो हृदयनामकः ॥ ३ ॥ गायत्रीनामको विष्णुरेव षड्विध उच्यते। इत्यादिभाष्यात् ' पादोऽस्य सर्वा भूतानि ' इति भूतशब्दितजीवानां चतुष्पादान्तर्भावेऽपि ' भूतं यदिदं किंच ' इति षड्विधान्तर्भूतं मत्स्याद्यवताररूपमेवेति ज्ञेयमित्यर्थः।

च्छान्दोग्यविवरणाज्ज्ञेयम् तस्मान्मात्रवर्णिकादन्यस्य पादाभिधानभावात्तस्य च चरणाभिधानेनैवोक्तत्वाद्दुर्वारं परमते भूतादिसूत्रवैयर्थ्यम् । =अस्माकं पक्षे तु 'भूतादि' इत्यादिपदेन 'अमृतं दिवि' इत्युक्तामृताख्यपादत्रयपरिग्रहः । न चात्र पादमुद्दिश्य विश्वभूतत्वविधिः । येन पादैकत्वमुद्देश्यविशेषणत्वात् * 'ग्रहं संमार्ष्टि' इत्यत्र ग्रहगतैकत्ववदविवक्षितमिति चतुष्पात्त्व न

---

ननु परमते 'भूतादि' इत्यादिपदेन पृथिवीशरीरहृदयानां ग्रहणेन तस्य सार्थक्यम् । भवन्मते तु 'भूतपादव्यपदेशात्' इत्येतावता 'पादोऽस्य' इत्युक्तभूतपादत्वग्रहसंभवादादिपदं व्यर्थमित्याशङ्क्याऽऽह—

=अस्माकं पक्षे त्विति । अयमाशय—यदि भूतपादत्वमेवात्र विवक्षितं स्यात्तर्हि निरुक्तशङ्का संभवेत् । न चैतदस्ति । किंतु भूतशब्दितविश्वपादत्वमिवामृतशब्दितनारायणवासुदेववैकुण्ठाख्यस्वरूपत्रयपादत्वमपि विवक्षित्वा 'चतुष्पदा' इत्युक्तचतुष्पदत्वस्य वक्तव्यत्वात् 'भूतादिपाद' इत्यत्र 'भूतशब्दो विश्ववाची, आदिशब्दश्च पूर्ववाची, अन्यपदार्थश्च नारायणवासुदेववैकुण्ठाख्यस्वरूपत्रयम्, बहुव्रीहिश्चाऽऽदिशब्दस्य पूर्ववाचित्वादतद्गुणसंविज्ञान' इत्याकारिका विवक्षा कृत्वा भूतमादिर्यस्येति विगृह्य विश्वं निरुक्तस्वरूपत्रयं चेत्यर्थो लभ्यते । तथा च तत्पाद इति व्यपदेशोपपत्तेरित्यर्थसंभवान्न वैयर्थ्यमिति ।

* ग्रहं समार्ष्टीति । 'दशापवित्रेण ग्रहं समार्ष्टि' इति हि सोमे श्रूयते । दशापवित्रं नाम वासःखण्डं । ग्रहो नाम पात्रम् । तत्र संशय —किं ग्रहमित्येकवचनान्तश्रवणादेको ग्रहः शोधनीय आहोस्विदेकत्वमविवक्षित्वा सर्वे ग्रहाः शोधनीया इति । किं तावत्प्राप्तम् । यथा 'पशुना यजेत' इत्यत्रोपादेयपशुगतमेकत्वं विवक्षितं तद्वदुद्देश्यग्रहगतमप्येकत्वं विवक्षितव्यम् । किंच ग्रहशब्दस्य जातिवाचित्वेन जातेः संस्कार्यत्वे सति जातेः संस्कारासंभवात्तदाश्रयभूते यस्मिन्कस्मिन्नपि द्रव्येऽनुष्ठितेन संस्कारेण जातिः संस्कृता भवति । तस्मादेक एव ग्रहः शोधनीय इति । अत्राभिधीयते—'ग्रहम्' इति द्वितीयया ग्रहस्योद्देश्यतया प्रयोजनवत्तया च प्राधान्यं गम्यते । संमार्गश्च ग्रहं प्रति गुणः । 'प्रतिप्रधानं गुण आवर्तनीयः' इति न्यायेन यावन्तो ग्रहाः सन्ति ते समार्जनीयाः । एवं निश्चये सति समार्जयितव्यग्रहेयत्तायाः अनुभूतिसतत्वादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितं भवति । ननु नैतदुद्देश्यगतं किंतु विधेयमिति

सिध्येत् । किंतु विश्वभूतोद्देश्येन पादत्वविधिः । पादानामेव जिज्ञासितत्वात् । यथा च + 'पौर्णमास्यां पौर्णमास्या यजेत'

---

चेत् । न । तथा सति 'ग्रह समृज्यात्' 'त चैकम्' इत्येव विधेयार्थभेदाद्वाक्यभेदापत्ते । 'पशुना यजेत' इति दृष्टान्तोऽपि विषम । तत्र हि याग प्रति गुणभूत पशु । एव च गुणानुरोधेन प्रधानावृत्तेरसभवादियत्ताया बुभुत्सितत्वेन श्रूयमाणस्यैकत्वस्य विवक्षितत्वात । न च जाति सस्कार्या । तस्या अमूर्तत्वात् । ततो जातिद्वारा द्रव्यलक्षको गुणशब्द । तत्र चाऽऽवृत्तिरुक्ता । तस्मात्सर्वे ग्रहा समार्जनीया इति सिद्धान्त । एव च तत्र यथा ग्रहैकत्वमविवक्षित न तथा प्रकृत इत्यर्थ ।

+पौर्णमास्यामिति । अयमर्थ –इष्टौ विद्यमानाना षण्णामाग्नेयादियागानां द्वाववान्तरसघौ—दर्श पूर्णमासश्च । तथा चातुर्मास्येषु चत्वार सघा—वैश्वदेव—वरुणप्रघास-साकमेध-शुनासीरीया । अत्राय सशय –एतादृशे विषये किं साङ्गाना तन्त्रेणानुष्ठानमथवा प्रयाजाद्यङ्गानामावृत्तिरिति । किं तावदत्र युक्तम् । तन्त्रेण साङ्गानामनुष्ठान युक्तमिति । कुत इति चेत् । सघातानेकत्वेऽपि कर्मैक्येण प्रयोगैक्यात् । न च पौर्णमास्यमावास्ययो कालयोर्भेदादङ्गभेद शङ्क्य । पशुवदभेदोपपत्ते । तथा हि–'वपया प्रात सवने प्रचरन्ति, पुरोडाशेन मध्यदिने, अङ्गैस्तृतीयसवने' इति वपापुरोडाशहृदयाद्यङ्गप्रचाराणा कालभेदेऽपि पश्वङ्गभूताना प्रयाजाना यथा नास्त्यावृत्ति । तद्वत्प्रकृतेऽपि नास्त्यावृत्तिरिति प्राप्ते, ब्रूम —नात्राङ्गतन्त्र युक्तम् । कुत इति चेत् । दर्शपूर्णमासकर्मण एकफलसाधनत्वेन स्वरूपत एकत्वेऽपि दर्शप्रयोगात्पूर्णमासप्रयोगस्य पृथक्त्वात् । तच्च पृथक्त्व वाचनिकात्कालभेदादवगम्यते । यश्च पशुदृष्टान्त उक्त स तु विषम । नहि मुख्यस्य पशुयागस्य भेदोऽभिहितोऽस्ति । किंतु वपादिप्रचारस्यैव । तथा च वपादीना प्रयाजाद्यपेक्षया मुख्यत्वेऽपि अस्ति महद्वैषम्यम् । प्रयाजादिभ्यो हि वपादयो मुख्या । तेभ्योऽपि वपाद्यवयवेभ्योऽवयवी पशुर्मुख्य । प्रकृतेऽपि प्रयाजादिभ्य आग्नेयादयो मुख्या । तेभ्योऽपि तेषा सघौ दर्शपूर्णमासौ मुख्यौ । तयोश्च दर्शपूर्णमासयो कालभेदोऽपि विधीयते—'अमावास्यायाममावास्यया यजेत' 'पौर्णमास्या पौर्णमास्या यजेत' इति । न हि पशुयागस्य कालभेदो विधीयते । येन दर्शसाम्य स्यात् । किंतु वपादिप्रचारस्यैव कालभेदो विधीयते । न च प्रचारस्याङ्गभूतस्य मुख्ययागत्वमस्ति । येन प्रयोगभेद आशङ्क्येत । तस्मात्पशु-

इत्यत्र प्रथमः पौर्णमासीशब्दः काले मुख्यः, द्वितीय कर्मणि गौणः, एवं 'त्रिपात्' इत्यत्र पादशब्दः स्वरूपांशे मुख्यः, 'पादोऽस्य' इत्यत्र भिन्नांशे गौण इति न कश्चिद्विरोध इति दूषणमुक्तम् । तदसत् । 'पादाभिधानात्' इत्युक्ते भूतात्मकपादप्रतिपादकत्वप्रतीति स्यात् । तच्च प्रकृतेऽविवक्षितम् । किंतु भूतादिव्यतिरिक्तं यत् 'त्रिपादस्यामृतम्' इत्युक्त तदत्राभिमतमिति सूचनाय शब्दभेदानुसरणसाफल्यात् । अनुसृते च शब्दभेदे श्रुत्यनुगमं परित्यज्य शब्दभेदानुसरण किमर्थमिति फलजिज्ञासायां फलान्तरानुपलम्भात्पादशब्दसमानाधिकरणतया श्रुताद्भूतादतिरिक्त एवार्थो विवक्षित इति बुद्धिरुत्पद्यत इति न कश्चिद्विरोधः । न चैवम् 'त्रिपादभिधानात्' इत्येव सूत्रांशः कुतो न कृत इति वाच्यम् । गायत्र्यास्त्रिपदात्वेनातिप्रसिद्धतया तद्बुद्धिर्माभूदिति चरणपदोक्तिसामञ्जस्यात् । न च चरणाभिधानादित्युक्तेऽपि चरणशब्दस्य 'रमणीयचरणा रमणीयां योनिमापद्यन्ते' इत्यादौ क्रियायामपि प्रयोगदर्शनात्तद्ग्रहणेऽपि पुनरविवक्षितार्थप्रतीत्याऽसामञ्जस्य दुर्वारमेवेति वाच्यम् । अभिधानादित्यनेनैव तच्छङ्कानिरासात् । यच्छब्देनाभिधानं हि प्रक्रान्तस्य प्रकरिष्यमाणस्य वा भवति । भूतादीनां तु पादत्वेन प्रक्रान्ततया यच्छब्देन परामर्शः प्रसज्यत इति तद्वारणाय यत्नः । न च सर्वनाम्ना प्रक्रान्तविशेष्यपरामर्शकतास्वाभाव्येनैव तद्व्युदास इति शक्यते वक्तुम् । 'दृश्येते राजमातङ्गास्तस्यैवामी तुरङ्गमाः' इत्यादौ प्रक्रान्तविशेषणपरामर्शदर्शनात्तादृशस्वभावासिद्धेः । त्रिपादित्यस्यापरामर्शप्रसङ्गाच्च । अवान्तरबोधीयमुख्यविशेष्यता च भूतादावप्यविशिष्टेति दिक् ।

यदपि भूतादिसूत्रस्य पौनरुक्त्यमुक्तम् । तच्चिन्त्यमेव । 'तावा-

---

वैषम्या मुख्यस्यैव दर्शस्य पूर्णमासयागस्य च कालभेदोक्त्या प्रयोगभेदे सति प्रयोगशेषाणां प्रयाजादीनामावृत्तिरिति सिद्धम् । एवमेव वैश्वदेवादिषु द्रष्टव्यम् । एव च यथाऽत्र सप्तम्यन्त पौर्णमास्यादिशब्द काले मुख्य, तृतीयान्तश्च तत्सबन्धिनि गौण, तथा प्रकृतेऽपि मुख्यामुख्ययोर्ग्रहणमिति ।

नस्य ' इति मन्त्रस्य ब्रह्मपरतां * सिद्धवत्कृत्य तत्परामर्शकय च्छन्दस्वारस्येन ज्योतिर्वाक्यस्य ब्रह्मपरताया आद्यसूत्रप्रमेयत्वात् । तादृशवाक्यस्य ब्रह्मपरतैवासिद्धेति शङ्कायां भूतपादत्वादिभिर्गायत्री वाक्यस्यापि ब्रह्मपरत्वमित्यस्य भूतादिसूत्रप्रमेयतयापौनरुक्त्यलेशस्याप्यनवकाशात् । श्रीमद्भाष्यफाक्किकानामुक्तार्थताया अतिस्पष्टतया, एवमपि स्पष्टेऽपि प्रमेयभेदेन पौनरुक्त्योद्भावन व्यामोहमात्रनिबन्धनं द्वेषनिबन्धनं वेति भाष्यदर्शिना स्पष्टमेव ।

किं च चतुष्पदेत्याद्यप्यसत् । वागादेरन्यार्थमुक्तत्वेन भूतादिवदमुख्यत्वात् । तथाहि—भूतमिति वाक्यस्य हेतुवन्निगदार्थवादन्यायेन गानत्राणकर्तृत्वादिना स्तुत्या सर्वात्मकत्वोपपादनाय ' अस्यां हीदं सर्वं भूतं प्रतिष्ठितम् ' इति भिन्नकक्षारूढवाक्यवत्तादृशवाक्यभेदो गायत्र्यामुक्तः । न तु प्राधान्येन । अत एव ' या वै सा गायत्रीयं वाव सा येयं पृथिवी ' ( छा० ३ । १२ । २ ) इतिवत् ' या वै सा गायत्रीयं वाव सा येयं वाक् ' इति नोक्तम् । अन्यथाऽग्रिमपर्यायसाम्याय तथैवावक्ष्यत् । प्राणस्य तु गायत्र्यात्मकत्वं विशिष्य नोक्तमिति । न किंचिदेतत् ।

आनन्दतीर्थीयास्तु—चतुःसूत्र्या ×एकाधिकरणत्वं स्वीकृ-

---

* सिद्धवत्कृत्येति । असिद्धवद्भूत यथा सिद्धवद्भवति तथा कृत्वेत्यर्थः । ' साक्षात्प्रभृतीनि च ' ( पा० सू० १।४।७४ ) इत्यनेनाऽऽकृतिगणत्वाद्गतित्वेन समासत्वाल्ल्यबादेशोऽत्र बोध्यः ।

× एकाधिकरणत्वमिति । अत्र मतद्वैविध्यं वर्ततेऽधिकरणाभेदो भेदो वेति । तत्र प्राचीनभाष्यव्याकर्तुस्तत्त्वप्रदीपकृतो मतम्—' ज्योतिश्चरणाभिधानात् ' ' छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ' ' भूतादिपादव्यपदेशोपपत्तेश्चैवम् ' ' उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ' इति चतुःसूत्र्या एकाधिकरणत्वम् । विषयवाक्यं त्वग्निसूक्तस्थम् । ' ज्योतिर्हृदय आहितं यत् ' इत्येव वाक्यमिति । प्राचीनानुव्याख्यानव्याख्यातु सन्न्यायरत्नावलीकारस्य मते तूक्तचतुःसूत्र्या एकाधिकरणत्वेऽपि विषयवाक्यम् ' अथ यदतः परो दिवो ज्योतिः ' इति च्छान्दोग्यवाक्यमेवेत्यवान्तरो

स्यैव 'वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत्' ( ऋ० सं० ४।५।११ ) इत्याद्याग्निसूक्तस्य वाक्यम् । 'यदतः परो दिवो ज्योतिर्दीप्यते' ( छा० ३।१३।७ ) इति च्छान्दोग्यस्थवाक्य वोदाहरणम्, अधिकरणभेदं स्वीकृत्य 'ज्योतिश्चरणाभिधानात्' ( ब्र० सू० १।१।२४ ) इति सूत्रे पूर्वोक्तमग्निसूक्तस्थ वाक्यमुदाहरणमुत्तरत्रिसूत्र्यास्तूक्तच्छा-न्दोग्यवाक्यमुदाहरणमिति वा प्रतिपादयन्ति । तथा गुहानिहित-त्वस्यान्यनिष्ठत्वशङ्कयाऽऽनन्दमयाधिकरणाक्षेपेण च संगतिं वदन्ति । तथा हि—लोकतोऽन्यत्र प्रसिद्धज्योतिर्नाम्नोऽत्र ब्रह्म-णि समन्वयप्रतिपादनाच्छास्त्रसंगतिः । 'यो वेद निहितं गुहा-याम्' ( तै० २।१।१ ) इत्यानन्दमयस्य हृदयगुहानिहित-त्वमुक्तम् । तद्गुहानिहितत्वम् 'वि मे कर्णा पतयतो वि चक्षुर्वीदम्' इति कस्यचिज्ज्योतिषः प्रतीयते । तत्र वाक्येऽ-यमर्थः—मे कर्णौ ज्योतिषा विरुद्धं पततः । चक्षुश्च विरुद्धं पतति । यदिदं हृदय आहितं ज्योतिस्तदप्यत्यन्तं कर्णादिविरुद्धं वर्तते । मे मनश्चापीव विरुद्धं चरति । अतोऽध्यात्मबुद्धिरहं किं नु वक्ष्यामि । किं वेदानीं चिन्तयामीति । एतच्च यदि विष्णो-रन्यत्तर्ह्यानन्दमयत्वं च तस्यैव प्रसज्जत इति निर्णयं भवतीति ।

तत्रेदं चिन्त्यम्—संगतिस्तावदयुक्ता । गुहानिहितत्वहृदया-हितत्वयोरेकरूपत्वाभावेनाप्रत्यभिज्ञानाच्छान्दोग्यवाक्ये सुतरां तदभावाच्च । प्रत्युत 'यदिदमन्तः पुरुषे ज्योतिः' इति जाठ-रज्योतिषैक्योपदेशेन तदभावस्यैव ज्ञापनाच्च । 'योऽयमन्तर्हृ-दये' इति गायत्र्याः श्रवणेऽपि पूर्वपक्षे गायत्रीज्योतिषोर्भि-

भेद इति । इदानीतनभाष्यव्याख्यातृतत्त्वप्रकाशिकाकृतो मते तु—'ज्योतिश्च-रणाभिधानात्' इत्येकमेव सूत्रमेकमधिकरणम् । 'छन्दोभिधानान्न०' इत्यादि-त्रिसूत्री त्वधिकरणान्तरम् । तत्राऽऽद्याधिकरणस्य विषयवाक्यम् 'वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत्' इति पूर्वोक्तमग्निसूक्तस्थमेव वाक्यम् । द्वितीयाधिकरणस्य तु 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति च्छान्दोग्यस्थं वाक्यमिति सुधाकारमतम् । तत्त्वप्रकाशिकाकारमते तु 'गायत्री वा इदꣳ सर्वम्' इतीत्यवान्तरो भेद इति ।

१ क. किंवेदं चिं । इत्यपि पाठान्तरम् ।

भत्वेन ज्योतिर्द्वारा तदाक्षेपायोगाच्च । चतुःसूत्र्या एकाधिकरणत्वं स्वीकृत्योक्ताग्निसूक्तस्थवाक्योदाहरणत्वमप्ययुक्तम् । तत्र च्छन्दोभिधानभूतादिपादव्यपदेशोपदेशभेदानाममभावेन च्छन्दोभिधानभूतादिसूत्रासांगत्यप्रसङ्गात् ।

यत्तु चन्द्रिकायाम्—उक्ताक्षेपे 'ज्योतिर्हृदय आहितं यत्' इत्यग्निसूक्तस्थस्यैव ज्योतिषश्छान्दोग्येऽपि ज्योतिःश्रुत्या 'योऽयमन्तर्हृदये' (छा० ३।१२।९) इति हृदयनिहितत्वधर्मेण च × शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञायमान वेदै-

---

× शाखान्तराधिकरणेति । अय भाव —काठककाण्वमाध्यादिनतैत्तिरीयादिशाखासु दर्शपूर्णमासाख्य कर्माऽऽम्नातम् । तत्र सशय —किं शाखाभेदात्कर्मभेदोऽथवा कर्मैक्यमिति । किमत्र युक्तम् । शाखाभेदात्कर्मभेद इति । कथमिद निश्चीयत इति चेत् । शृणु । भेदकारणाना हि नामभेदादीना बहूनामुपलम्भो भवति । तथा हि—काठककाण्वादिको नामभेदस्तावत्प्रसिद्ध. । तथा कारीरीवाक्यान्यधीयाना केचिच्छाखिनो भूमौ भोजनमाचरन्ति । शाखान्तराध्यायिनस्तु नाऽऽचरन्तीति धर्मभेद उपलभ्यते । किचैकस्या शाखायामधीता 'इषे त्वा' इत्यादयो मन्त्रा पलाशशाखाच्छेदादय क्रियाश्च शाखान्तरेऽप्यधीयन्त इति पुनरुक्तिरपि दृश्यते । एवमशक्ति—रूपभेद—समाप्तिवचन—प्रायश्चित्तवचनान्यार्थदर्शनरूपा भेदहेतव उपलभ्यन्ते । न ह्यल्पायुषा मनुष्येण सर्वशाखाध्ययनपूर्वक कर्मानुष्ठान कर्तुं शक्यम् । तस्माच्छाखाभेदेन कर्मभेद इति पूर्वपक्ष. । अत्रोच्यते—रूपाद्यभेदादेकं कर्मेति सिद्धान्त । तथा हि—आग्नेयाष्टाकपालादियागरूप यदेवैकस्या शाखाया वर्तते तदेव शाखान्तरेऽप्युपलभ्यते । 'दर्शपूर्णमासाभ्या यजेत' इति यागरूप. पुरुषव्यापारश्चैकविध. । 'दर्शपूर्णमासौ' इति कर्मनामाप्येकम् । 'स्वर्गकाम.' इति फलसबन्धोऽप्येक. । तस्मादभिन्न कर्मेति सिध्यति । पूर्वपक्षहेतवस्त्वन्यथा सगच्छन्ते । तथा हि—काठकादिक ज्योतिरादिवन्न कर्मनाम । 'काठकेन यजेत' इत्यश्रवणात् । 'काठकमधीते' इति प्रयोगाद्ग्रन्थनामेत्यवगन्तव्यम् । भूमिभोजनादिस्त्व ध्ययनधर्म. । पुनरुक्तिरप्यध्येतृभेदान्न दुष्यति । अल्पायुषाऽपि शाखान्तरस्थोपसहारन्यायेन कर्मानुष्ठान शक्यते । तस्मादनन्यथासिद्धरूपप्रत्यभिज्ञानाच्छाखाभेदेऽपि कर्म न भिद्यत इति सिद्धम् । अनेनैव न्यायेनाग्निसूक्तगतस्य च्छान्दोग्यगतस्य च ज्योतिःशब्दार्थस्य वेदभेदेऽपि शब्दैक्याद्धर्मैक्याच्चैकत्वमवश्यमङ्गीकर्तव्यमिति ।

कयाप्रोक्तसूत्रासंगतीरिति समाधानमुक्तम् । तदसत् । दिवः परत्र विश्वोत्तीर्णप्रदेशवृत्तित्वेन च्छान्दोग्यवाक्ये श्रुतस्य ज्योतिषो हृदयनिहितत्वेनाग्निसूक्तोक्तज्योतिषो भिन्नत्वेन ज्योतिर्द्वयस्यैक्यकल्पनायोगात् । अत एव न शाखान्तरन्यायविषयत्वम् । अग्निसूक्ते कर्णादिविदूरत्वश्रवणेन च्छान्दोग्ये ‘ तदेतद्दृष्टं च श्रुतं च ’ ( छा० ३।१३।७ ) इति श्रवणेन मासाग्निहोत्रनैयमिकाग्निहोत्रयोरिवात्रापि ज्योतिषोर्भिन्नयोर्नामैक्यस्य वस्त्वैक्याप्रयोजकत्वात् ।

यच्चोक्ताक्षेप आकारभेदेन तयोरविरोधोपपत्तिरिति चन्द्रिकायां समाधानमुक्तम् । तदप्यसत् । निश्चिते हि द्वयोर्ज्योतिषोरैक्य आकारभेदेनाविरोधोपपत्तिकल्पना तत्कल्पनया चैक्यसिद्धिरित्यन्योन्याश्रयत्वप्रसङ्गात् ।

यच्च चन्द्रिकायाम्—न च पूर्वपक्षेऽग्निसूक्तस्य समाख्याबलादग्निपरत्वाच्छान्दोग्यवाक्यस्य च च्छन्दःपरत्वात्तयोरेकाविषयत्वाभावान्न +प्रत्यभिज्ञासभव इति शङ्क्यमित्याक्षिप्य ‘तेजो वै ब्रह्मवर्चसं गायत्री ’ इति गायत्र्यां तेजोरूपताश्रवणात्तेजशब्दाग्निशब्दयोरनतिभिन्नार्थत्वादग्नौ गायत्रीशब्दस्य गायत्र्यां वाऽग्निशब्दस्य संभवेनाग्निसूक्तवच्छान्दोग्यस्याप्यग्निपरतायाश्छान्दोग्यवदग्निसूक्तस्यापि गायत्रीपरताया वा सभवेन द्वयोरेकार्थत्वान्न *प्रत्यभिज्ञासंभव इति समाधानम्—तदुपहास्यमेव । ब्रह्मवर्चसतेजोहेतौ गायत्र्याम्—‘ आयुर्घृतम् ’ इतिवद्गौणव्यपदेशेऽपि तस्य तेजसोऽग्निरूपत्वाभावेन तावन्मात्रेण वाक्याभेदासिद्ध्या च तयोरैक्यासिद्धेः । अन्यथा तेजःशब्दगायत्रीशब्दयोः सामानाधिकरण्यदर्शनवत् ‘ यजमान प्रस्तरः ’ इति निर्देशाद्यजमानप्रस्तरयोरप्यैक्यापत्त्या सूक्तवाकेन यजमानस्यैव × प्रहरण स्यात् ।

---

+ प्रत्यभिज्ञासभव इति । प्रत्यभिज्ञाया समव इति विग्रह ।

* प्रत्यभिज्ञासभव इति । प्रत्यभिज्ञाया असभव इति विग्रहो बोध्यः ।

× प्रहरणं स्यादिति । अयमाशय —दर्शपूर्णमासयोरिदमाम्नायते ‘ सूक्तवाकेन प्रस्तर प्रहरति ’ इति । तत्र सूक्तवाको नाम ‘ इद द्यावापृथिवी-

चतुःसूत्र्या ऐकाधिकरण्ये छान्दोग्यवाक्यमुदाहरणमित्यपि न युक्तम् । छान्दोग्यवाक्ये । विचरणाभिधानाभावात् । अग्नि-

---

मद्रमभूत् ' इत्यादिको मन्त्र । तस्मिन्मन्त्रे ह्यग्निं संबोध्य ' त्व सूक्तवागसि ' इत्याम्नायते । किं च योगवृत्त्याऽपि तथैवार्थप्रतीतिर्भवति । ' सूक्त वक्ति ' स सूक्तवाक । सूक्त नाम यागकाले तत्तन्मन्त्रेण सम्यगुक्त देवमि त्यर्थः । प्रस्तरो नाम दर्भमुष्टि । तस्य प्रहरण नामाग्नौ प्रक्षेपः । अत्राय सशयः—किमत्र सूक्तवाकेनेत्येतत्पदेन कालो लक्षणीय आहोस्विदग्निरुक्तो मन्त्रो विनियोक्तव्य इति । किं तावत्प्राप्तम् । विनियोगासभवात्कालो लक्षणीय इति । तथा हि—पूर्वोक्तमन्त्रे हि ' अग्निरिद हविरजुषतावीवृधत महो ज्यायोऽकृत ' इत्यादिक पठ्यते । तदर्थस्तु—' पुरोडाशसेवया वृद्धोऽग्निस्तस्मिन्यजमाने तेजोबाहुल्य कृतवान् ' इति । न चासौ प्रस्तरप्रहरणेऽन्वेतु शक्य. । किंतु होत्रा मन्त्रेऽस्मिन्पठ्यमाने तत्पाठकालेऽध्वर्यु प्रस्तर प्रहरेदिति काल एवोपलक्षणीय इति प्राप्ते ब्रूम —' सूक्तवाकेन ' इति तृतीयाश्रुत्या प्रहरणे मन्त्रो विनियुज्यते । न चात्यन्तमन्वयाभाव । मन्त्रो ह्ययं पूर्वमिष्टानग्न्यादिदेवाननुस्मारयति । प्रस्तरप्रहरण चेष्टदेवतासस्कार एव । अतो देवताद्वारा मन्त्रप्रहरणयोरन्वयान्मन्त्रो विनियुज्यते । ननु प्रहरण नाम प्रक्षेपमात्रम् । न तु देवतोद्देशेन प्रक्षेप । यजिधातोरश्रवणात् । तथा सति देवतानामभावात्तद्द्वाराऽपि नान्वय इति चेत् । मैवम् । देवताना सद्भावात् । तथा हि—अग्न्यादिदेवताप्रकाशकस्य हि सूक्तवाकस्य तृतीयाश्रुत्या प्रहरणाङ्गत्व बोध्यते । यदि प्रकरणेऽग्न्यादयो देवता भवेयुस्तदा तत्प्रकाशनेन दृष्टोऽर्थो मन्त्रस्य लभ्येत । अतो देवताकल्पनेन तदुद्देशपूर्वकस्य प्रक्षेपस्य यागत्व सिध्यति । तस्माद्देवताद्वाराऽस्त्येवान्वय इति सिद्धम् । एव च यदि भवदुक्तरीत्या तेज शब्दगायत्रीशब्दयो सामानाधिकरण्य तर्हि ' यथा ' सिंहो देवदत्त ' इति लौकिकवाक्ये सिंहगुणेन शौर्यादिनोपेतो देवदत्त सिंहशब्देन स्तूयते तथा ' यजमान प्रस्तर ' इत्यस्मिन्वाक्ये यजमानगुणेन यागसाधत्वेन युक्त प्रस्तरो यजमानशब्देन स्तूयत इति सिद्धान्तितत्वेऽप्यत्र गौणव्यपदेशमात्रेण भवदुक्तरीत्यैवोभयोरैक्यापत्त्या ' सूक्तवाकेन प्रस्तर प्रहरति ' इति वाक्य यजमानस्यापि प्रहरण विदध्यात् । ततश्च कर्मलोपापत्तिरिति ।

+ विचरणाभिधानाभावादिति । विरुद्ध चरण विचरण तदभिधानाभावादित्यर्थः । अय भाव.—चन्द्रिकाया हि ' ज्योतिश्चरणाभिधानात् ' इत्या-

सूक्तस्थच्छान्दोग्यस्थज्योतिषोरुक्तरीत्यैक्यस्यायुक्तत्वात् । स्ववाक्यगतासाधारणानेकश्रुतिलिङ्गत्यागेनान्यवाक्यगतलिङ्गेन निर्णये बीजाभावाच्च ।

यच्च चन्द्रिकायाम्—यद्यपि च्छान्दोग्योक्तस्य ब्रह्मत्वे 'यद्वै तद्ब्रह्म' (छा० ३।१२।७) इत्यादिश्रुतिलिङ्गानि स्ववाक्यस्थानि सन्तीत्याक्षिप्य तथाऽपि तत्तत्सूक्तस्थनिरवकाशविष्णुलिङ्गैः सावकाशश्रुतिसूक्तबाधेन सर्ववेदान्तानां विष्णौ समन्वयं दर्शयितुं सूत्रकारेणाग्निसूक्तस्य लिङ्गमुक्तमिति समाधानं तथा च च्छान्दोग्यस्य 'ज्योतिर्विष्णुः । अस्यैव ज्योतिषोऽग्निसूक्ते विचरणाभिधानात्' इति सूत्रार्थेन × बाधकमिति । तदसत् ।

---

दिचतु सूत्रीविषयकनिरुक्तमतत्रयमुपन्यस्य तत्रत्यमाद्यं मतं च युक्तमिति प्रतिपाद्य द्वितीयमतसमर्थनाय 'नन्वेवमपि सन्न्यायरत्नावलीकृन्मते छान्दोग्यवाक्यस्यैव ज्योतिरादिसूत्रचतुष्टये विषयत्वात्तत्र च च्छन्दोभिधानादिसम्भवेऽपि चरणशब्दितकर्णादिविदूरत्वादेरभावेन ज्योतिरितिसूत्रस्य 'चरणाभिधानात्' इत्ययुक्तम्' इत्याशङ्कां मनसि निधायोक्तम्—"द्वितीयेऽपि च्छान्दोग्ये चरणाभिधानाभावेऽप्युक्तरीत्या वाक्यद्वयोक्तस्य ज्योतिष एकत्वात् 'चरणाभिधानात्' इत्येतन्न व्यधिकरणम् । तथा च 'चरणाभिधानात्' इत्यस्यायमर्थः—छान्दोग्यस्थं ज्योतिर्विष्णुः । अस्यैव ज्योतिषोऽग्निसूक्ते विचरणाभिधानादिति" इति । परन्त्वेतन्न युक्तम् । अग्निसूक्तस्थच्छान्दोग्यस्थज्योतिषोर्निरुक्तरीत्यैक्यस्यायुक्तत्वेन च्छान्दोग्यवाक्ये विरुद्धचरणाभिधानस्यासम्भवादिति ।

×बाधकमितीति । तथा चेत्यादिविचरणाभिधानादित्यन्तो यो ज्योतिश्चरणाभिधानादिति सूत्रार्थश्चन्द्रिकोक्तस्तेन सह पूर्वोक्तं समाधानं बाधकं भवतीत्यतस्तदसदित्यन्वयः । अयं भावः—ज्योतिरितिसूत्रार्थे हि च्छान्दोग्यस्थज्योतिषो विष्णुत्वनिर्णयेऽग्निसूक्ते विचरणाभिधानादिति हेतुरुक्तः । समाधाने तु सर्ववेदान्तानां विष्णौ समन्वयं दर्शयितुं सूत्रकारेणाग्निसूक्तस्य लिङ्गमुक्तमित्युक्तम् । छान्दोग्यस्थज्योतिषो विष्णुस्वरूपब्रह्मत्वं तु तत्स्थश्रुतिलिङ्गप्रमाणादेव सिद्धम् । न तु तद्विषये किंचित्प्रमाणमपेक्षितमिति तत्तात्पर्यम् । एवं च च्छान्दोग्यस्थज्योतिषो विष्ण्वभिन्नब्रह्मत्वनिश्चये वस्तुतः प्रमाणान्तरानपेक्षत्वस्य निरुक्तसमाधानप्रतिपादकत्व[त्व]त्सम्मतत्वेऽपि निरुक्तसूत्रवाक्यार्थे तदपेक्षितत्वस्योक्तत्वाद्वाक्यार्थेन सह तत्समाधानं बाधकं भवतीति तात्पर्यं बोध्यमिति ।

---

१ क. 'न भिक्षुपादप्रसरणन्यायेन स' । इतीदानींतनचन्द्रिकापुस्तकपाठः ।

निरवकाशलिङ्गविरोधेन श्रुतिबाधस्यान्तराधिकरणाकाशाधिकरणन्यायसिद्धतयाऽनन्यथासिद्धचरणादिविदूरत्वलिङ्गेनैव तत्समाख्याश्रुतिद्वयभङ्गेनाग्निसूक्तस्यान्तरादिरथन्यायसाजात्येन ब्रह्मपरत्वसिद्ध्या * तन्निर्णयस्यानपेक्षिततया + तन्मुखेन तदभिधानवैफल्याच्च । निरवकाशलिङ्गबलात्तस्य × ज्योतिषः परमात्मत्वेऽप्यस्य = ज्योतिषो निरवकाशजाठराग्न्यैक्यसाचिव्यश्रुतिबलादन्यपरत्वशङ्कायास्तेनापरिहाराच्च । किंचैतन्मते 'छन्दोभिधानात्' (ब्र० सू० १ । १ । २५) इति सूत्रं न विचरणाभिधानरूपहेत्वाक्षेपकम् । तत्प्रतिपादकाग्निसूक्तगायत्रीविग्रहयोरैक्ये हेत्वभावात् । कथंचित्तदुपपादने वा ज्योतिःशब्दस्येव गायत्रीशब्दस्यापि निरवकाशात्तद्विरोधेनान्यपरत्वानुपपादकत्वात् । श्रुतेर्निरवकाशलिङ्गभञ्जकत्वे च ज्योतिः शब्दस्येव तद्भञ्जकत्वापत्तेः । अन्यथासिद्धिसहत्वस्योभयोस्तुल्यत्वात् । अत एव न साध्याक्षेपकत्वमपि । गायत्रीशब्दसमभिव्याहारादत्र ज्योतिषो ब्रह्मान्यत्वेऽप्यग्निसूक्तस्थज्योतिषो ब्रह्मान्यत्वासिद्धेः । द्वयोरैक्यासंभवस्तूक्त एवेति दिक् ।

भिन्नाधिकरणपक्षस्तु सुतरां न संभवति । 'विकारशब्दान्नेति चेत्०' (ब्र० सू० १ । १ । १३) इत्यादाविव 'छन्दोभिधानान्नेति चेत्' इत्युक्तेरेकाधिकरणत्वसूचकत्वात् । छन्दोभिधानादित्यधिकरणस्य च्छान्दोग्यस्थगायत्रीशब्दनिर्णयार्थत्वोक्तिरपि न स्वरसा । तथा सति 'गायत्री तल्लिङ्गात्' इत्येव वक्तव्यत्वात् । "हृदयनिहितं ज्योतिर्विष्णुरित्यभिहितम् । तच्च च्छान्दोग्यश्रुतौ श्रूयते—'यदतः परो दिवो ज्योति' इति । तच्च गायत्रीत्वेन पठ्यते । गायत्रीशब्दश्च च्छन्दस्येव रूढ इति हृदयनिहितं ज्योतिर्न विष्णुः" ⌣इत्युक्त्वाक्षेपपूर्वकगायत्रीशब्द-

* तन्निर्णयस्येति । ब्रह्मपरत्वनिर्णयस्येत्यर्थः ।

+ तन्मुखेनेति । अपेक्षामुखेन ब्रह्मपरत्वाभिधावैफल्याच्चेत्यर्थः ।

× तस्य ज्योतिष इति । छान्दोग्यस्थज्योतिष इत्यर्थः ।

= अस्य ज्योतिष इति । अग्निसूक्तस्थज्योतिष इत्यर्थः ।

⌣ इत्युक्त्वाक्षेपेति । अयं चाऽऽक्षेपस्तत्त्वप्रकाशिकायां स्पष्टः ।

निर्णयार्थत्वायोक्तविन्यास इत्यपि न स्वरसम् । गायत्रीशब्द-समभिव्याहाराच्छान्दोग्यस्थज्योतिषोऽब्रह्मत्वेऽप्यग्निसूक्तस्थस्य ब्रह्मत्वानाक्षेपात् । उभयोरैक्यासंभवस्योक्तत्वात् । अग्निसूक्तेऽनुक्तस्य गायत्रीशब्दस्य तदनाक्षेपकत्वात् ।

यदपि चन्द्रिकायाम्—ऐकाधिकरण्यमतद्द्वयेऽपि वाक्यद्वयमप्युदाहरणमिति कल्पनम्, तथा "यथा ह्यग्निसूक्तस्थवाक्ये प्रकरणानुगृहीतश्रुत्या पूर्वपक्षस्तथा छान्दोग्येऽपि 'गायत्री वा इदं सर्वम्' इत्युपक्रमात् 'सैषा चतुष्पदा षड्विधा गायत्री' इति चोपसंहाराच्चस्य गायत्रीप्रकरणत्वेन तदनुगृहीतज्योतिःश्रुत्या पूर्वपक्ष इति पूर्वपक्षयुक्तिसाधारण्यात्तथाऽग्निसूक्ते निरतिशयवैभवलक्षणचरणेन सिद्धान्तवच्छान्दोग्येऽपि 'एतामेव नातिशीयन्ते' इति निरतिशयवैभवरूपेण चरणेन सिद्धान्त इति सिद्धान्तयुक्तिसाधारण्याच्चैकाधिरणता । यथाऽऽघाराग्निहोत्राद्यधि*करणेषु 'आधारमाघारयति' 'अग्निहोत्रं जुहोति'

---

* आघाराग्निहोत्राद्यधिकरणेष्विति । अयमाशयः—इदमाम्नायते—'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' 'पयसा जुहोति' इति । इदं चापरमाम्नायते—'आघारमाघारयति' 'ऊर्ध्वमाघारयति' 'ऋजुमाघारयति' इति । तत्र संशयः—किमग्निहोत्रं जुहोत्याघारमाघारयतीति वाक्यद्वयमनुवाद आहोस्विद्विधिरिति । किमत्र युक्तम् । अनुवाद इति । कुत इति चेत् । उच्यते—यागस्य द्वे रूपे द्रव्यं देवता चेति । तच्च रूपद्वयम् 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इति वाक्यद्वयेऽपि न श्रूयते । तथा च द्रव्यदेवतालक्षणस्य यागस्वरूपस्याभावान्न वाक्यद्वयस्य विधिरूपत्वं वक्तुं पार्यते । अपि तु दध्यादिवाक्यविहितस्य कर्मसमुदायस्याग्निहोत्रवाक्यमनुवादः । तथोर्ध्वादिवाक्यविहितस्य कर्मसमुदायस्याऽऽघारवाक्यमनुवाद इति पूर्वपक्षे प्राप्ते सिद्धान्तः—किं पूर्वपक्षिणा दध्यादिवाक्येन गुणमात्रं विधीयत इति मन्यते किंवा गुणविशिष्टकर्मविधानमिति । न तावदाद्यः । अग्निहोत्रादिवाक्यस्य हि तन्मते कर्मविधायकत्वाभावेन कस्यचिद्गुणिनोऽसिद्धौ सत्यां गुण्यनुवादपुरःसरस्य गुणमात्रविधानस्यासंभवात् । नापि द्वितीयः । विशिष्टविधाने गौरवात् । तस्मात् 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इति वाक्यद्वयं कर्मविधायकम् । तत्राऽऽद्ये दध्यादिवाक्यैर्द्रव्यं लभ्यते । देवता तु 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति

इत्युदाहरणभेदेऽपि द्रव्यदेवतालक्षणयागरूपाभावाच यागावि-
धित्वमिति पूर्वपक्षयुक्तिसाधारण्यान्मन्त्रवर्णादिना देवतादिला
भाच रूपाद्यभाव इतिसिद्धान्तयुक्तिसाधारण्याचैकाधिकरणता
तद्वत् " इति वाक्यद्वयोदाहरणत्वोपपादनं च । तदपि न सत् ।
छान्दोग्यस्थज्योतिषो विचरणाभिधानाभावेन पूर्वपक्षसिद्धान्त-
युक्तिसाधारण्यस्याधिकरणैक्येऽपि वाक्यद्वयोदाहरणतायां साध-
कत्वेनोपन्यस्तस्यासिद्धेः ।

यदपि चन्द्रिकायाम्—अग्निसूक्त इव 'एतामेव नातिशी-
यन्ते' इति निरतिशयवैभवरूपं छान्दोग्येऽप्यस्यैव विचरणाभि
धानमस्तीत्युक्तम् । तदपि न । 'वि मे कर्णा पतयतो वि चक्षुः'
इत्यादेरग्निसूक्तोक्तस्य कर्णादेर्विरुद्धपतनरूपज्योतिरतिक्रमण
रूपविचरणस्य 'एतामेव नातिशीयन्ते' इति च्छान्दोग्योक्तगा-
यत्र्यनतिक्रमणरूपस्य विचरणस्य परस्परं भिन्नस्वरूपस्यैकश-
ब्देनाभिधानायोगात् । ताभ्यां गम्यमाननिरतिशयवैभवपरत्व
तु नाभिधानरूप संभवत्या गतौ क्लिष्ट कल्पयितु युक्तम् । किं-
च यद्युभयोर्वाक्ययोरत्र विषयता तदा 'छन्दोभिधानात्'
इति वत् 'अन्यभिधानात्' इति वक्तव्ये तदभिधानोपेक्षाया
बीजाभाव । 'छन्दःशब्दोऽग्नेरप्युपलक्षकः' इति चन्द्रिकोक्तं
तु न सत् । उपदेशभेदभूतादिपादव्यपदेशयोस्तदाऽप्यगतेः ।
"उपदेशभेदादिति पूर्वपक्षयुक्तिर्भूतादिपादेतिसिद्धान्तयुक्तिश्च च्छा
न्दोग्यवाक्यमात्रासाधारणी' इति चन्द्रिकोक्त तु 'छन्दोभिधा-
नात्' इति सूत्रे तथैव वक्तु शक्यतया तत्रोपलक्षणत्वाङ्गीका-
रस्य निष्फलत्वात्पत्याऽनुपादेयमेव ।

अ,घाराग्निहोत्राधिकरणदृष्टान्तोऽप्ययुक्त एव । तदधिकरणे—

---

साय जुहोति' इतिवचनविधिविनियुक्तमन्त्रवर्णाल्लभ्यते । द्वितीयेऽपि 'चतुर्गृहीत
वा एतदभूत्' इत्यादिनाऽऽज्य द्रव्यम् 'इन्द्र ऊर्ध्वोऽध्वरो दिवि स्पृशतु महतो
यज्ञो यज्ञपते, इन्द्रवानस्वाहेत्याघारमाघारयति' इतिविनियुक्तमन्त्रवर्णाद्देवता
च लभ्यते । एवं च दध्यादिवाक्यप्राप्तहोमाघारसमुदायानुवादत्वरूपपूर्वपक्षयु-
क्तिसाधारण्याद्देवताद्रव्यलाभरूपस्वतन्त्रहोमाघारविधिरितिसिद्धान्तयुक्तिसाधार-
ण्याच यथा तत्रैकाधिकरणता तद्वत्प्रकृतेऽपि सा इति ।

'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इत्यादिवाक्यं न कर्मविधायकम् । तत्र द्रव्यदेवतयोरश्रुतत्वाद्द्रव्यदेवतालक्षणयागरूपस्याभावात् । किंत्वग्निहोत्रवाक्य 'पयसा जुहोति' 'दध्ना जुहोति' इत्यादिवाक्यविहितस्य कर्मसमुदायस्य, आघारवाक्यम् 'ऋजुमाघारयति' 'ऊर्ध्वमाघारयति' इत्यादिवाक्यविहितकर्मसमुदायस्यानुवाद इति पूर्वपक्षे—'दध्यादि वाक्येन न दध्यादिगुणमात्रविधान संभवति । त्वन्मतेऽग्निहोत्र वाक्यस्य कर्मविधायकत्वाभावेन गुणिनः कस्यचिदसिद्धेः । नापि दध्यादिगुणविशिष्टकर्मविधानं संभवति । विधिगौरवापत्ते । तस्मादग्निहोत्रादिवाक्यमेव कर्मविधायकम् । तत्र दध्यादिवाक्यैर्द्रव्यलाभः । देवता च होमकरणमन्त्रवर्णात्' इति सिद्धान्ते चोभयगोचरग्राहकस्य साधारणस्यैव प्रकृते पूर्वपक्षसिद्धान्तयुक्तिसाधारणस्यासिद्धेरुक्तत्वात् ।

यदपि चन्द्रिकायाम्—'× उपदेशभेदात्' इति पूर्वपक्षयु-

---

न वाद्यसूत्रद्वयस्य कथंचिद्वाक्यद्वयसाधारण्यसंभवेऽप्युत्तरसूत्रद्वयस्य न तत्संभवति । अग्निनूक्ते भूतादिपादव्यपदेशाभावादित्याशङ्क्याऽऽह—× उपदेशभेदादिति । तत्र च मीमांसकसमतिरप्यस्तीत्याशयेनाऽऽह—अर्थवादनय इति । अय भाव.—तत्र हि 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना तस्मादनित्यमुच्यते' (जै० सू० १.२.१) इति सूत्रेणाक्रियार्थानामर्थवादमन्त्रनामधेयानामानर्थक्यादप्रामाण्यमिति पूर्वपक्ष । 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीना स्यु' (जै० सू० १.२.७) इति सिद्धान्तसूत्रस्थेन तुशब्देन 'तुल्य च सांप्रदायिकम्' (जै० सू० १.२.८) इति सूत्रेण वा कृत्स्नस्वाध्यायपुरुषार्थपर्यवसाय्यध्ययनविधिमहिम्नाऽर्थवादादीना सप्रयोजनतावसायेन प्रामाण्यमिति साधारण एको विचार । द्वितीयविचारस्तु—अर्थवादाना द्वाराभावादप्रामाण्यमिति पूर्व. पक्ष । सिद्धान्तसूत्रे स्तुतिग्रहणाद्द्वारसंभवात्प्रामाण्यमित्यसाधारण । एव च यथाऽत्र द्विपर्वो विचारस्तथा प्रकृतेऽपि वाक्यद्वयगतज्योतिःशब्दार्थो विष्णुरन्यो वेति संशयेऽग्निच्छन्दस्त्वाभिधानादप्रसिद्धज्योतिर्गायत्रीपदप्रयोगे प्रयोजनाभावान्न विष्णु. किं त्वन्य इति पूर्वपक्षे प्राप्ते—उभयत्र चरणशब्दितापरिच्छिन्नवैभवत्वस्याभिधानात्तथोपासनार्थमप्रसिद्धपदप्रयोगस्यापि संभवाद्विष्णुरिति सिद्धान्त इत्येको विचा-

क्तिः ' भूतादिपादे ' इति सिद्धान्तयुक्तिश्च च्छान्दोग्यवाक्यमा त्रासाधारणीत्यत्रार्थवादनये भट्टमत एको विचारोऽर्थवादमन्त्रादिसाधारणः । अन्यस्त्वर्थवादमात्रासाधारण इति द्विपर्वविचारदृष्टान्तकथनम् । तदपि न । अर्थवादनये हि 'वायुर्वै क्षेपिष्ठा देवता ' इत्यर्थवादगता शब्दास्तथा ' उरु प्रथस्व ' इतिमन्त्रगताश्च शब्दा. ' वायव्य श्वेतमालभेत भूतिकामः ' इतिविधिगतवायव्यादिशब्दाना तथा 'पुरोडाश प्रथयति ' इतिविधिगतशब्दानां च नैरपेक्ष्येणैव भूतार्थमन्वाचक्षते। विधिवाक्यगतवायव्यादिशब्दा अर्थवादगतशब्दनैरपेक्ष्येणैव विशिष्टमर्थं विदधतीति मन्त्रार्थवादेभ्यो भारतरामायणादिवत्कश्चिद्वृत्तान्तः प्रतीयते, न त्वनुष्ठेयं किंचिदित्येकवाक्यत्वाभावान्नार्थवादमन्त्राणां धर्मे प्रामाण्यमिति पूर्वपक्षे—पदैकवाक्यत्वाभावेऽपि विधिवाक्यस्य पुरुष प्रेरयितु विधेयार्थप्राशस्त्यदेवताप्रकाशाद्यपेक्षत्वादर्थवादमन्त्राणा च फलवदर्थावबोधपर्यवसिताध्ययनविधिपरिगृहीतत्वेन पुरुषार्थापेक्षत्वात्प्राशस्त्य लक्षणया समर्पयत. क्षिप्रगामी(मि) स्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता ततः प्रशस्तमिम वायव्य पशुमालभेतेति वाक्ययोरन्वयादर्थवादाना विधिवाक्यैकवाक्यतया धर्मे प्रामाण्यम् । एवं मन्त्राणामपि विध्येकवाक्यतयैव प्रामाण्यमित्येको विचारो मन्त्रार्थवादसाधारणः । यतो वायुः क्षिप्रमेव फलप्रदोऽतो वायव्य पशुमालभेतत्येवमर्थवादोक्त हेतुमपेक्ष्यैव विधिः पुरुष नियङ्क्ते। ततः सापेक्षत्वाद्विधेर्न प्रामाण्यमनपेक्ष्यत्वरूपमिति पूर्वपक्षे--सापेक्षत्वं हि प्रमाणान्तराधिगतार्थबोधकत्वम् । अर्थवादे ' विमत कर्मानुष्ठेय फलप्रददेवतोपेतत्वाद्राजसेवावत् ' इत्यनुमान यदि विवक्षितं स्याचदा विधेर्मानान्तरसापेक्षत्वलक्षणमप्रामाण्यं स्यात् । न त्वेवमस्ति । किंतु फलप्रददेवतोपेतत्वोपन्यासेन कर्मप्राशस्त्यमुपलक्ष्यते। तथा सति प्रशस्तं कर्मानुष्ठेयमित्यस्मिन्नर्थे सार्थवादविध्य. पर्यवसानादेकवाक्यता

---

रः । पुनश्च च्छान्दोग्यस्थज्योतिर्न ब्रह्म, उपदेशभेदादिति प्राप्ते—भूतादिपादव्यपदेशादिना सिद्धान्त इत्यन्यो विचार इति द्विपर्वा विचारो बोध्य इति ।

लभ्यत इति कुत. प्रमाणान्तरसापेक्षत्वमिति विधि. प्रमाणमेवेति सिद्धान्त इत्यन्यो विचारोऽर्थवादमात्रसाधारण.। तत्र द्वितीयविचारेण कृतस्य मानान्तरानपेक्षत्वरूपप्रामाण्यप्रकारविशेषस्थापनस्य प्रथमविचारकृतसामान्येन प्रामाण्यसिद्ध्यधीनसिद्धिकत्वाद्विचारद्वयस्य परस्परापेक्षत्ववदिह विचारद्वयस्य परस्परापेक्षत्वाभावात्, तद्वदिह विचारद्वयस्य सामान्यविशेषरूपहेतुद्वयाभावाच्च वैषम्यस्य तद्विदां स्पष्टत्वात्।

यदप्यानन्दतीर्थीयानां प्रथमाधिकरणशरीरम्--ज्योतिरिदमाग्निर्विष्णुर्वेति सदेहः। अस्य सूक्तस्याग्निसूक्तत्वात्तद्गतज्योतिःशब्दोऽग्निपरः। न च 'हृदय आहित यत्' (ऋ० सं० ४।५।११) इति गुहानिहितत्वलिङ्गेन बाधः शङ्कनीयः। प्रकरणसनाथायाः श्रुतेर्लिङ्गेन दुर्बलेन बाधायोगात्। न च निरवकाशत्व श्रुतेरिव लिङ्गस्यापि। जाठरे जातवेदसि लिङ्गस्य सावकाशत्वात्। अत सावकाशलिङ्गात्प्रबलाभ्यां प्रकरणश्रुतिभ्यामुक्तज्योतिषो युक्तमग्नित्वमिति पूर्वपक्षे—निरवकाशेन कर्णादिविदूरत्वेन प्रकरणबाधाच्छ्रुतेर्विष्णावेव महायोगरूढिभ्यामुपपत्तेर्विष्णुरेव ज्योतिरिति सिद्धान्तः। स्पष्टं चेद चन्द्रिकादौ तदीयग्रन्थे।

तत्रेदं चिन्त्यम्—निरवकाशलिङ्गेन श्रुतिबाधस्य पूर्वाधिकरणद्वयसिद्धत्वेन पुनरिहान्यपरत्वशङ्कानुत्थानात्। प्रकरणस्य लिङ्गाद्दुर्बलत्वेन न तत्सहायेनोक्तशङ्कोत्थानम्। निरवकाशतया प्रबलेन लिङ्गेन प्रकरणबाधकस्य कैमुत्यन्यायसिद्धत्वात्। एतेन 'त्वमग्ने' इत्यग्निशब्दसंनिधानादग्निपरत्वशङ्केति चन्द्रिकोक्तकल्पन निरस्तम्। संनिधानस्य प्रकरणादपि दुर्बलत्वेन तद्बाधस्य +दण्डापूपिकान्यायसि-

---

+ दण्डापूपिकान्यायेति। न्यायस्वरूप तु—कस्यचित्पुरुषस्यावलम्बनार्थं दण्ड आवश्यक। स च ग्रामान्तरादिगमनसमये पाथेयभूतानामपूपानां विस्मरण मा भूदिति दण्ड एव तद्बन्धन करोति। तथा सत्यावश्यके दण्डे गृहीते सत्यापूपग्रहणमर्थाद्भवतीति। एव चानेन न्यायेन प्रकरणस्य बाधे सत्यर्थात्संनिधानरूपस्य स्थानप्रमाणस्य बाध. स्यादिति भाव।

द्दत्वात् । किंच ज्योतिःशब्दाग्निशब्दयोर्देवतापरत्वेऽन्तराधिक-रणन्यायेन, भूतपरत्व आकाशाधिकरणन्यायन गतार्थत्व दुर्वा-रम् । न च प्रकरणानुग्रहादधिका शङ्केति युक्तम् । श्रुतेर्विष्णु-परत्वे प्रकरणस्यापि विष्णुपरत्वसंभवनान्यपरत्वायोगात् । न चाग्निसूक्तत्वादिव्यवहारेण प्रकरणस्यान्यपरत्वशङ्केति कल्पनं युक्तम् । अक्षिविद्याऽऽदित्यविद्येत्यादिव्यवहारस्याक्षिशब्दादि-त्यादिशब्दवत्तामात्रेणेव गार्हपत्यपराया अपि ऋच ऐन्द्रीति व्यवहारस्येन्द्रपदवत्तामात्रेणेव विष्णुपरस्यापि सूक्तस्याग्निपदव-त्तामात्रेणाग्निसूक्तत्वव्यवहारसिद्धेः ।

यदपि—*उक्तरीत्याऽऽक्षिप्य जाठरेऽग्नौ सावकाशस्य लिङ्ग-

---

* उक्तरीत्याऽऽक्षिप्येति । तत्र हि पूर्वं निरुक्तपूर्वपक्षमुपक्रम्य ज्योतिः-शब्दस्य वस्तुतस्तमोविरोधिपदार्थमात्रे प्रसिद्धत्वेऽप्यग्निसूक्ते ' वि मे कर्णा० ' इत्यस्मिन्मन्त्रे हृदयनिहितत्वलिङ्गात् ' विश्वेदेवा अनमस्यन्भियाना त्वामग्ने तमसि तस्थिवांसम् ' इत्यत्राग्निशब्दमानिध्याच्चाग्निपरत्वमेव, न त्वग्निसूक्तस्य स्वात्तस्याग्निपरत्वम् । तथा सति प्रकरणरूपस्याग्निसूक्तस्याग्निश्रुतिसपादकत्वेन श्रुत्यनुग्राहकत्व न स्यादित्याशयकमुक्तम् । तत " एतेन—ज्योति शब्दाग्नि-शब्दौ देवतापरौ चेद्यथाऽन्तराधिकरणे निरवकाशलिङ्गेन सावकाशदेवतावाचि-श्रुतीना प्रवृत्तिनिमित्तस्यैश्वर्यादेर्भगवद्गतत्वोक्त्या विष्णुवाचित्व साधित तेनैव न्यायेन ब्रह्मपरौ स्याताम् । भूतपरौ चेद्यथाऽऽकाशाधिकरणेऽचेतनगतस्यापि प्रवृत्तिनिमित्तस्य भगवदधीनत्वादि समर्थित तेन न्यायेन ब्रह्मपरौ स्याताम् । अत्रापि ज्योति पदप्रवृत्तिनिमित्तस्य भगवद्गतत्वेन तदधीनत्वेन च सावकाशाया अग्निश्रुतेर्निरवकाशविष्णुलिङ्गैर्बाधस्य सभवात् । न चाग्निश्रुति. सूक्तरूपप्रकर-णानुगृहीतेति वाच्यम् । तत्तत्सूक्तस्थाग्न्यादिश्रुतीना विष्णौ सावकाशत्वे सूक्ता-नामपि तथात्वात् । न च सर्वसूक्ताना वैष्णवत्व इदमग्निसूक्तमिद विष्णुसूक्तमि-तिव्यवस्थानुपपत्तेस्तेषा निरवकाशतेति वाच्यम् । सर्वसूक्ताना वैष्णवत्वेऽपि ' इदमग्निसूक्तमिद त्वन्यत् ' इत्यादिव्यवस्था तु ' अभिव्यक्तेरित्याश्मरथ्य ' ( ब्र० सू० १।२।२९ ) इति वक्ष्यमाणन्यायेन सगच्छते । तथा हि—वैश्वा-नराधिकरणे ह्यग्न्यादिशब्दाना विष्णौ मुख्यत्वे तत्तत्सूक्ताना तत्तद्विद्याना च वैदिकसिद्धव्यवस्थानुपपत्तेरन्यवाचित्वमेवेति पूर्वपक्षे प्राप्ते—अग्न्यादिसू-क्तादिभिर्विष्णूपासनयाऽग्न्यादावेव विष्णोरभिव्यक्तत्वात्, अग्न्यादिसूक्ताद्युपा-

ज्याग्नौ सावकाशश्रुत्या बाधोपपत्तेरिति पूर्वपक्षसमर्थनं चन्द्रिकायाम् । तदप्यसत् । जाठरेऽग्नौ हृदयनिहितत्वस्याप्रसिद्धेर्लिङ्गस्य निरवकाशत्वात् । जाठरत्वप्रसिद्धिविरोधेन तत्सावकाशत्वकल्पनानुपपत्तेश्च । कर्णादिविदूरत्वस्याग्नावसम्भवाच्च । तदाच्छादनेन पूर्वपक्षस्त्वस्मद्रीत्या पूर्वपक्षसिद्धान्ताभिप्रायेणाधिकरणयोजनासंभवेनायुक्त एव ।

यदपि चन्द्रिकायाम्--इदमग्निसूक्तं न विष्णुसूक्तमित्यध्यापकप्रसिद्धाग्निसूक्तत्व–विष्णुसूक्तत्वाभाव—व्यवहारसाचिव्यात्निरवकाशमपि लिङ्गं श्रुतिः प्रतिबध्नातीति निरवकाशत्वमात्रप्रयुक्तलिङ्गगतप्राबल्यस्य निरवकाशोक्तव्यवहारसाचिव्यश्रुतित्वोभयप्रयुक्तश्रुतिगतप्राबल्याद्दुर्बलतया लिङ्गगतबहुत्वप्राबल्यस्य श्रुतित्वरूपस्वभावप्रयुक्तप्राबल्याद्दुर्बलतया युक्तमेव सूक्तस्याग्निपरत्वमिति पूर्वपक्षोपपादनम् । तदपि न विचारक्षमम् । प्राणविद्याऽक्षिविद्याऽऽदित्यविद्येत्यादिव्यवहारवदैन्द्रीमन्त्रप्रसिद्धिवच्चोक्तरीत्याऽन्यथासिद्धव्यवहारादेरर्थविशेषनिर्णायकत्वायोगात् । अत एवैकविष्णुविषयकत्वाविशेषेऽपि तत्तत्पदश्रवणाश्रवणरूपपरविशेषश्रवणप्रयुक्तः 'पुरुषसूक्तमिदं नारायसूक्तमिदं नेदं पुरुषसूक्तं नेदं नारायणसूक्तमिदं विष्णुसूक्तं नेदं विष्णुसूक्तम्' इत्यादिव्यवहारः सङ्गच्छते । तत्तत्पदाश्रवणेन तत्तत्सूक्तत्वाभावव्यवहारेऽपि तस्य तत्परत्वाभावानिर्णायकत्वात्तत्साचिव्याच्छ्रुतेः प्राबल्यायोगात् । लिङ्गस्य तु निरवकाशत्वप्रयुक्तं प्राबल्यं निरपवादमेवेति सति बाधके नात्राग्निसूक्तादिसमाख्या निर्णायिका प्रभवति । निरवकाशत्वबहुत्वप्रयुक्तप्राबल्यान्न श्रुतित्वसूक्तसाचिव्यप्रयुक्तमपि प्राबल्यम् । श्रुतित्वप्रयुक्तप्राबल्यस्य प्रागेव निरस्तत्वाच्च । छान्दोग्यवाक्ये च नोक्तप्रकाराऽधिका शङ्का प्रवर्तते ।

---

सकैरग्न्यादावेव विष्णोरनुस्मरणीयत्वाद्वा, तदुपासकानामग्न्यादिस्थविष्णुप्राप्तिरूपाद्वा, निमित्तात्सूक्तादिव्यवस्थोपपत्तेरग्न्यादिशब्दानां विष्णौ मुख्यत्वे सूक्तादीनां च तत्परत्वे व्यवस्था चोपपद्यत इति सिद्धान्तितम् । अनया रीत्या पूर्वोक्ता व्यवस्थोपपद्येत । एवं च सावकाशसूक्तस्य निरवकाशविष्णुलिङ्गैः सुतरां बाधेन पूर्वपक्षानुदय इति परास्तम्" इत्याशयकमाक्षिप्येत्यर्थः ।

तमोविरोधित्वं ज्योतिष्पदप्रवृत्तिनिमित्तमाश्रित्य ब्रह्मणि तमसा सह वर्तमाने ज्योति शब्दासंभवेन पूर्वपक्षोत्थानमित्यपि परोक्तं न सत्। 'प्रजनन ज्योतिः, विराट्छन्दसां ज्योतिः, त्रिवृत्पञ्चदशसप्तदश एकविंश एतानि वा ज्योतींषि' इत्यादि-बहुतरप्रयोगविरोधेन तमोविरोधित्वस्य ज्योतिष्पदप्रवृत्तिनिमित्त-त्वाभावात्। आदित्यादितेजोमये ब्रह्मणि तमसा सहावस्था-नस्य केनापि प्रमाणेनासंप्रतिपत्तेः प्रकाशकत्वमात्रस्यैव तत्प्रवृ-त्तिनिमित्तत्वौचित्यात्। अस्तु वा यथाकथंचित्तमोविरोधित्वं ज्योतिष्पदप्रवृत्तिनिमित्तमित्याशङ्का तथाऽपि तस्याऽऽदित्यादि-साधारणतयाऽग्निमात्रपूर्वपक्षोपष्टम्भकत्ववर्णनमसंगतमेवेति नो-क्तपूर्वपक्षो युक्तः। पूर्वपक्षस्यायुक्तत्वेनैव तन्निराकरणसिद्धा-न्तोऽप्ययुक्त एव। किंच—

कर्णादीनां विदूरत्वं विष्णोरन्यत्र नैव हि।
अग्नेस्तु श्रुतिसूक्तादि सावकाशं परात्मनि॥

इत्यादिना कर्णादिविदूरत्वलिङ्गेन ज्योति श्रुतेर्विष्णुपरत्वनि-र्णयसिद्धान्तो न युक्तः। तल्लिङ्गस्य शिवसाधारण्यात्। तथा ह्यथर्वशिखायाम्—'अथ हैनं पैप्पलादोऽङ्गिराः सनत्कुमारश्चा-थर्वाणमुवाच, भगवन्किमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्, किं तद्ध्यानं को वा ध्याता कश्च ध्येयः' इत्यनेन ध्यान ध्यातृध्येयविषयप्रश्नमवतार्य 'स एभ्योऽथर्वा उवाचोमित्येतद-क्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यमित्येदक्षरं परं ब्रह्म' इति प्रणवानुगत ब्रह्म ध्येयत्वेनोक्त्वा 'अस्य पादाश्चत्वारो वेदाः' इत्यादिना प्रणवस्य त्रिमात्राभिस्तस्य व्याप्तिमुक्त्वा 'एतस्मा-द्ध्यानादौ प्रयुज्यते सर्वकरणोपसंहारत्वाद्धार्यं धारणात्तुरीयं ब्रह्म' इत्यनेनावसानस्थितचतुर्थमात्रात्मकप्रणवाख्यतुरीयपर-ब्रह्मणः सर्वकरणव्यवहारातीतत्वस्य ध्येयत्वे हेतुत्वमुपन्यस्य 'ध्यायीतेशानं प्रध्यायितव्यम्' इत्युपसंहारे शिव एव ध्येयस्वरूपमिति निर्णयात्सर्वकरणविदूरस्य शिवस्य कर्णा-दिविदूरत्वास्ते.। उक्तप्रश्नवाक्येऽयमर्थः—प्रथमतो विधा-तेति शेषः। ध्यानम्—ध्यायत इति ध्यानं ध्यानविषयः,

ध्यायितव्यम्—शिष्यपुत्रादीनामुपदेशयोग्यम् । अथवा ध्यानयोग्यम् । अयमत्र विवक्षितोऽर्थः—ध्येयत्वेन योग्यं प्रयुक्तं प्रथमोत्पन्नो विधाता किं ध्यातवान्भवदादिभ्यः पुत्रेभ्यश्च किमुक्तवांश्चेति । शेषं स्पष्टार्थम् । मन्त्रोपनिषदि च—'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासञ्छिव एव केवल.' इति शिवं प्रस्तुत्य 'नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्' इत्यनेन कोऽप्येनं कुत्रापि न गृहीतवानित्यभिधाय तदर्थं 'न संदृशे तिष्ठति रूपमस्य' इत्युक्त्वा तद्धेतुत्वेन 'न चक्षुषा पश्यति कश्चिदेनम्' इति श्रुतम् । तत्र चक्षुषेत्युपलक्षणम् । अन्यैरपीन्द्रियैरेनं न कश्चिज्जानाति । ततो न संदृशेऽस्य रूपं स्वरूपं तिष्ठति संदृशे सम्यग्दर्शने इत्यर्थः । तथा च चक्षुःकर्णादिविदूरत्वस्य शिवसाधारण्यं श्रुतिसिद्धं निर्विवादमेव ।

कर्णादिविदूरत्वं च 'इयत' इतिपरिच्छेदानर्हवैभवत्वमेवेति चन्द्रिकोक्तमसाध्वेव । 'विश्वं कर्णा पतयतो विचक्षुः' इत्यनेन कर्णादीनां ज्योतिरतिक्रमणस्यैवोक्तेर्निरतिशयवैभवत्वस्य तेन गम्यमानत्वे तु 'चरणाभिधानात्' इत्यत्राभिधानपदास्वारस्यमित्यभिहितमेव पूर्वपक्षनिराकरणे । तस्यापि शिवसाधारण्यं विष्णवाद्यैश्वर्यस्यापि शिवाधीनत्वप्रतिपादनेन व्यवस्थापितमन्तस्तद्धर्माधिकरणे । विद्रुद्रहयादिना ज्योतिःश्रुतेर्विष्णावेव मुख्यत्वोक्तिरपि न युक्ता । 'नारायणपरो ज्योतिः' इतिवन्मन्त्रोपनिषदि शिवपरतया 'ईशानो ज्योतिरव्ययः' इतीशानपदवाच्ये शिवेऽपि तद्दर्शनात् ।

इदं न विष्णुसक्तमिति ध्यापकतासिद्धिस्तु '+ धान्यमसि

---

+ 'धान्यमसि धिनुहि' इति । अयमाशयः—दृषदि पेषणाय तण्डुलावापे 'धान्यमसि धिनुहि देवान्' (तै० सं० १ । १ । ९ ) इति मन्त्रो विहित. । तत्र संशयः—किमत्रत्यो धान्यशब्दो नोहनीय आहोस्विदूहनीय इति । किं तावत्प्राप्तम् । नोहनीय इति । कुत इति चेत् । धान्यशब्दो ह्यवघातानन्तरं निस्तुषांस्तण्डुलान्ब्रूते । न हि निस्तुषेषु तण्डुलेषु धान्यशब्दस्य शक्तिरस्ति । किंतु सतुषेष्वेव । तस्माद्यथा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्यस्मिन्दर्शपूर्ण-

धिनुहि ' इति मन्त्रस्य मासहविष्कयागे निविष्टस्य ' मांसमसि ' इत्यूहे कर्तव्ये ' मृगोऽसि ' इत्यूहप्रसिद्धिस्तदज्ञानमूलैव । विष्ण्वादिशब्दाभावादेव तत्प्रसिद्धेरिति चन्द्रिकोक्तं तु न साधु । बहुजनसंवादविषयप्रसिद्धेरज्ञानविषयत्वकल्पनस्यायुक्तत्वात् । दृष्टान्तोक्तिस्तु स्वकीयभ्रमपूलैव । धान्यशब्दस्य सतुषद्रव्यवाचिनः पुरोडाशरूपहविष्प्रकृतिद्रव्यत्वेनैव निर्दिष्टस्य मासे हविषि तत्प्रकृतिद्रव्यवाचिनो मृगशब्दस्यैवोहनीयत्वौचित्यस्य न्यायविदसंमतत्वात् ।

यदपि चन्द्रिकायाम्—अग्नेर्नापरिच्छेद्यत्वेप्रमवत्वम् । ' अग्निर्वै देवानामवमः ' ( ऐ० ब्रा० १ । १ ) इत्यवमतया ' भीषाऽस्मादग्निस्तपति ' इति सभयतया ' परिम्लेन म्रियन्ते विद्युद्वृष्टिश्च चन्द्रमा आदित्योऽग्निः ' ( ऐ० ब्रा० ४० । ५ ) इति मरणादिमत्तया च तस्य श्रुतत्वात् । अग्निश्च यदि तु ' अग्निनाऽग्निः समिध्यते ' ( ऋ० स० १ । १ । २२ ) ' तद्देवा ज्योतिषां ज्योतिः ' ( बृ० ४ । ४ । १५ ) ' नारायणपरो ज्योतिः ' ( ना० ११ । ४ ) ' विष्णुरेव ज्योतिः ' ( चतुर्वेदशिखा ) ' अहमग्निरहं हुतम् ' ( भ० गी० ९ । १६ ) ' ज्योतिषामपि

---

मासप्रकरणस्थनिर्वापमन्त्रे सवित्रश्विपूषशब्दाना विकृतौ नास्त्यूहस्तद्वदत्रापि धान्यशब्दस्य नास्त्यूह इति प्राप्तेऽभिधीयते—लक्षणया वृत्त्या धान्यशब्दस्य तण्डुलरूपेऽर्थे वर्तमानत्वाद्नुगतत्वं तावद्दुर्वचमेव । यथा ' गावः पीयन्ते ' इत्युच्यमाने मुख्यवृत्त्यभावेऽपि नानुगतत्वं लोका वर्णयन्ति । अपि तु दुग्धं लक्षयित्वा सगततां वार्नयन्ति । तद्वदत्राऽपि बोध्यम् । तस्माच्छ्यामाकानामयने धान्यशब्द ऊहनीय इति सिद्धम् । ननु सत्यमूहनीयस्तथाऽपि दृषदि पेषणाय मांसमावपता पुरुषेण किम् ' मांसमसि ' इत्यूहः कर्तव्य आहोस्वित् ' मृगोऽसि ' इति चेत् । अत्रोच्यते—प्रकृतौ धान्यशब्दस्य यथा तण्डुललक्षकत्वं तद्वदेव विकृतावपि मृगशब्दस्य मांसलक्षकत्वेन ' मृगोऽसि ' इत्यूहस्यैव न्याय्यत्वेऽपि लक्षणावृत्ते प्रकृतावविकृतत्वेनातिदेशानर्हत्वेन ' मांसमसि ' इत्याकारक एव विकृतावूहः कर्तव्य इति सिद्धम् । एवं सति याज्ञिकानां ' मृगोऽसि ' इत्याकारक ऊहो यथाऽज्ञानमूलकस्तद्वदेवाध्यापकप्रसिद्धिरपि विष्ण्वादिशब्दाभावनिमित्तकाज्ञानमूलिकेत्यर्थ इति ।

तज्ज्योतिः' (भ० गी० १३ । १८) इत्यादिश्रुतिस्मृतिभि-र्विष्णौ सावकाशमित्युक्त्वा, एवं सूक्तान्तरेष्वपि द्रष्टव्यम् । तथा हि—ऐन्द्रे 'न त्वा वाँ इन्द्र कश्चन जातो न जनिष्यते' (ऋ० सं० १ । ६ । १) इति, तथा 'ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः' (अथर्वशिरः ४) इति, तथा 'समुद्रेऽन्तः शयते' (ऋ० सं० ६ । ७ । ५) इति, तथा बार्हस्पत्ये 'विश्वेषामिज्जनिता ब्रह्मणामसि' (ऋ० सं० २ । ६ । २९) इति, तथा सौरे 'सूर्य आत्मा जगतस्तस्थुषः' (ऋ० सं० १।८। ७) इति, तथा वारुणे 'यो विश्वस्य जगतो देव ईशे' (ऋ०सं०५ १।७) इति, तथा विश्वकर्मसूक्ते 'विश्वतश्चक्षुः' तै०सं० ४ । ६ । २ ) 'यो नः पिता जनिता' (ऋ० सं०१० । ८२ । ३ ) इत्यादीनि सन्ति ब्रह्मलिङ्गानि। किंच सौरे 'येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि' (ऋ० सं० १ । ४ । ८) इति सूर्यस्य पावकवरुणादिशब्दैः संबोधनम् । तथा वारुणे 'अथा वयमादित्य' (ऋ० सं० १ । २ । १५) इति वरुणस्याऽऽदित्यादिशब्दैः संबोधनम्, तथाऽऽ-ग्नेये 'त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः' (ऋ० सं० २ । १५ । ७) इत्यग्निं संबोध्य तत्रेन्द्रविष्ण्वा-दिशब्दप्रयोग उक्तसूक्तानां सर्वशब्दवाच्यब्रह्मपरत्वे युक्तो नान्यथेति सर्वसूक्तगतनामसमन्वयपरत्वमस्योक्तम् । * तत्पक्ष-

---

* पक्षहेत्वोरग्न्यादिशब्दाभावादिति । अत्र भाव—इत्थं ह्यानन्दतीर्थीय भाष्यम्—'यो वेद निहितं गुहायाम्' इत्युक्तम् । तच्च गुहानिहितम् 'वि मे कर्णा पतयतो वि चक्षुर्वी ३ २(वेद) ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमु नू मनिष्ये' इति ज्योतिरुक्तम् । तच्च ज्योति-रग्निसूक्तत्वात्प्रसिद्धेश्चाग्निरेवेति प्राप्तम् । अत आह—ओम् 'ज्योतिश्चरणाभिधा-नात्' ओम् । विष्णुरेव ज्योतिः कर्णादीनां विचरणाभिधानात् । स हि 'परो मात्रया तन्वा वृधान' इत्यादिना कर्णादिविदूर । इति । अवतरणभाष्यस्य तत्त्वप्रकाशिकाकारैर्व्याख्यानं प्रयत्ननिरुक्तरीत्या कृत्वा सूत्राभिप्रायवर्णनपरं भाष्यं व्याख्यायते—विष्णुरेवेति । विष्णुरेव ज्योतिर्भवेत् । कर्णादीनामेत-ज्ज्योतिर्विरुद्धचरणाभिधानात् । कर्णादिविदूरत्वलिङ्गादित्यर्थः । कर्णादिविदूर-

इत्योरादिशब्दाभावादुपलक्षणत्वाश्रयणस्य क्लिष्टत्वाद्धेयम् । किंचाग्निसूक्तस्थज्योतिषैव निर्णये 'ज्योतिर्दर्शनात्' (ब्र० सू० १ । ३ । ४०) इत्यस्य गतार्थतापत्तिश्च ।

यदपि चन्द्रिकायाम्—'ज्योतिर्दर्शनात्' इत्यत्र त्वाग्नि सूक्तस्थस्यापि ज्योतिषो म्रियमाणत्वादिलिङ्गैर्जीवत्वे शङ्कितानि लिङ्गानि ब्रह्मपरोपक्रमोपसंहारस्थत्वादन्तर्भावितण्यन्तानीति वक्ष्यत इति पौनरुक्त्यापत्तिनिवारणम् + । तदपि

---

त्वाभिधानेऽपि कुतो विष्णुरिदं ज्योतिरित्यत आह—स हीति । मीयन्ते विषया अनेनेति मात्रेन्द्रियगणस्तत्तस्त्वं परोऽसीत्यर्थः । न च प्रकरणविरोधः । लिङ्गेन प्रकरणबाधोपपत्तेः । न च श्रुतिविरोधः । श्रुतेर्विष्णावपि सावकाशत्वात् । महायोगविद्वद्रूढिसद्भावेन मुख्यत्वाच्च । निरवकाशलिङ्गेन सावकाशश्रुत्यादेर्बाधोपपत्तेः । अतो विष्णुरेवेदं ज्योतिरिति । तस्यैव गुहानिहितत्वमानन्दमयत्वं चेति सिद्धम् । इति । इमां च टीकां विवृण्वंश्चन्द्रिकाकार आह—'कर्णादीनां विदूरत्वं विष्णोरन्यत्र नैव हि । अग्न्यन्तु श्रुतिसूक्तादि सावकाशं परात्मनि' । अयं च पूर्वोक्तटीकाभिप्रायसंग्राहकश्चन्द्रिकाकारकृतः श्लोकः । एतच्छ्लोकव्याख्यानपरश्चन्द्रिकाग्रन्थः 'कर्णादिविदूरत्वं च' इत्यारभ्यानूदित एव । अत्रेदमवधेयम्—'ज्योतिश्चरणाभिधानात्' इत्यस्मिन्सूत्रे पूर्वोक्तभाष्यटीकानुरोधात् 'अग्निसूक्तस्थं ज्योतिरुपलक्षणं विष्णुमात्रवाचकत्वं साध्यते कर्णादीनामेतज्ज्योतिर्लिङ्गचरणाभिधानात् । कर्णादिविदूरत्वलिङ्गादिति यावत्' इत्येवानुमानं प्रतीयते । एवं सति सत्रेऽग्निसूक्तस्थस्योपलक्षणत्वेनोपादानात्सर्वत्राय न्यायोऽनुसन्धेय इत्याशयेन 'एवं सूक्तान्तरेष्वपि द्रष्टव्यम्' इत्युक्त्वा 'तथा हि' इत्यादिनाग्न्यादिसूक्तेष्वपि 'इन्द्र' इत्यादिशब्दानां सर्वशब्दवाच्यविष्णुरूपब्रह्मपरत्वमेवेति यत्प्रतिपादनं तस्मात् 'तत्तत्सूक्तस्थज्योतिरादिशब्दानुपलक्षीकृत्य विष्णुमात्रवाचकत्वं साध्यते कर्णादिविदूरत्वादिलिङ्गात्' इत्यनुमानं चन्द्रिकाकारस्याभिप्रायमिति प्रतीयते । परन्तु 'ज्योतिश्चरणाभिधानात्' इत्यत्र पक्षबोधकज्योतिःशब्दाद्धेतुबोधकचरणाभिधानादित्यस्माच्चाऽऽदिशब्दप्रयोगाभावेन सूत्रकाराद्यनभिप्रेतार्थप्रतिपादकत्वेन हेयत्वं स्पष्टमेव ।

+ निवारणमिति । अयं भावः—'ज्योतिर्दर्शनात्' इत्यत्र हि 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः' इति बृहदारण्यकस्थं वाक्यमुदाहृत्योक्तम् । किमत्र ज्योतिःपदवाच्यो जीव उत विष्णुरिति संशयः । किं ताव-

म्रियमाणत्वादिलिङ्गानां ब्रह्मणि संदंशन्यायेनान्यार्थपरतया अत्रैव निरूपयितुं युक्तत्वाद्धेयम् ।

यदपि—‘ छन्दोभिधानात् ’ इत्यादित्रिसूत्र्या अधिकरणान्तरत्ववर्णनम् । तथा हि—अत्र लोकतोऽन्यत्रप्रसिद्धगायत्रीनामसमन्वयः क्रियते । छान्दोग्ये ‘ गायत्री वा इदꣳ सर्वम् ’ ( छा० ३ । १२ । १ ) इत्यारभ्य ‘ अथ यदत परो दिवो ज्योतिर्दीप्यते ’ इति श्रूयते । तत्र गायत्री यदि विष्णोरन्या स्यात्तदिद ज्योतिश्च सा स्यात् । अतो गायत्री किं छन्दोविशेष उत विष्णुरिति संशये, गायत्रीश्रुतिप्रसिद्ध्या ‘ वाग्वैषा ’ इति वाक्यत्वसंकीर्तनाच्च च्छन्दोविशेष एव । न च ज्योतिःश्रुत्या बाधः । श्रुत्या श्रुतिबाधायोगात् । ज्योतिःपर्यायतेजःशब्दस्य ‘ तेजो वै गायत्री ’ इति श्रवणेन गायत्र्यामेव तदुपपत्तेश्च । गायत्रीशब्दश्च न विष्णौ रूढः । तत्र मानाभावात् । लिङ्गस्य रूढ्या बाधात् । न चात्र तदधीनत्वन्याय प्रवर्तते । वेदरूपायास्तस्या नित्यत्वात् । तथा चेदं ज्योतिरपि तद्रूपमेवेति पूर्वपक्षे, सिद्धान्त --गायत्री विष्णुरेव । तथा हि--दर्शनं श्रुतिरित्यर्थः । एतद्गायत्र्या गानत्राणकर्तृत्वश्रवणात् । तस्य च्छन्दस्यभावात् । अतो ज्योतिरपि विष्णुरेव । तदधीनत्वाच्च मुख्यता । न च नित्यत्वविरोध ।

---

त्प्राप्तम् । जीव इति । कुत इति चेत् । ‘ स समान सन्नुभौ लोकावनुसञ्चरति स वा अय पुरुषो जायमान शरीरमभिसपद्यमान पाप्मभि ससृज्यते स उत्क्रामन्म्रियमाण ’ ( बृ० ६ । ३ । ७ ) इत्यादिजीवलिङ्गात् । एवं चाग्निसूक्तस्थस्यैव ज्योतिषो बृहदारण्यकस्थवाक्ये म्रियमाणत्वादिश्रवणादग्निसूक्तस्थमपि ज्योतिर्जीव एवेति पूर्वपक्षे प्राप्ते सिद्धान्त -ज्योतिःशब्दस्य ‘ हृद्यन्तर्ज्योति ’ इत्यात्मप्रश्नोत्तरोपक्रमे ‘ सुप्त इत्यत्रायं पुरुष स्वयज्योति ’ इत्युपसहारे च श्रुतत्वादात्मप्रश्नोत्तरोपक्रमोपसहाराभ्या च विष्णुपरत्वेन निर्णीतवाक्यमध्यस्थतया जीवलिङ्गानामप्यन्तर्भावितण्यर्थतया मारकत्वाद्यर्थकत्वेन कथंचिन्नेयत्वादिद ज्योतिर्विष्णुरेवेत्यग्निसूक्तस्थमपि विष्णुरेवेति सिद्धम् । नहि निरवकाशलिङ्गेन सावकाशबाधन्यायव्युत्पादन वा सूक्तगतत्वाधिकाशङ्कानिरासकन्यायव्युत्पादनमस्मिन्नधिकरणे क्रियते । येन पुनरुक्तिर्जायेत । उक्तद्वयन्यायव्युत्पादन तु ज्योतिश्चरणाधिकरण एव कृतमिति न कश्चिद्दोष इति ।

स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रिया ।
यत्प्रसादादिमे सन्ति न सन्ति तदुपेक्षया ॥

इति नित्यानामपि तादधीन्यश्रुतेः । भूतादिपादव्यपदेशादपीदं निर्णीयते । 'सैषा चतुष्पदा षड्विधा गायत्री' इति गायत्र्याः षड्विधत्वमनूद्य चतुष्पदत्व व्यपदिश्य तत्रैव पुरुषसूक्तमन्त्रः संवादायोदाह्रियते—'तदेतदृचाऽभ्युक्त तावानस्य' इति । अस्य पुरुषस्य तावान्पूर्वोक्तो महिमा । न केवलमेतावान्किंतु पुरुषस्ततः पूर्वोक्तादपि महिम्नो ज्यायान् । कथम् । सर्वाणि भूतान्यस्यैकः पादः, अस्यामृतं स्वरूपभूत पादत्रय दिवि तिष्ठतीति ।

यदुक्तं गायत्री ज्योतिश्च विष्णुरिति । तत्रैवेयदि गायत्रीज्योतिःप्रसङ्गयोरेकं वस्तूच्येत । न चैव 'त्रिपादस्यामृत दिवि' इति गायत्र्या द्युस्थितत्वोक्त्या 'परो दिवः' इति ज्योतिषो दिव परत्वोक्त्या विरोध इति शङ्कनीयम् । त्रिलोकसप्तलोकाद्यभिप्रायेणोपदेशभेदोपपत्तेः । तथा हि—भूर्भुवःस्वरिति लोकत्रयाभिप्रायेण लक्षयोजनोच्छ्रितान्तरिक्षोपरितनश्वेतद्वीपानन्तासनवैकुण्ठानां द्युत्वात्तद्गतरूपत्रयं दिवीत्युच्यते । सप्तलोकापेक्षयेन्द्रसदनस्य द्युत्वाद्वैकुण्ठस्य दिवःपरत्व मेरोरपि द्युत्वा त्स्वरानन्तासनस्य दिवःपरत्व सूर्यमण्डलस्यापि द्युत्वेन तदुत्तरश्वेतद्वीपस्य दिवःपरत्वं तत्रस्थमूर्तित्रयस्य दिवःपरत्वं च युज्यते । अत उभयथोपदेशेऽपि विरोधाभावादुभयत्राप्येकमेव विष्ण्वाख्यं वस्तूच्यत इति गायत्री विष्णुरेव । स एव ज्योतिरानन्दमयश्चेति सिद्धान्त इति ।

तत्रेदं चिन्त्यते—यद्यत्र गायत्रीनाम समन्वेतव्यं तर्हि भाष्ये ज्योतिर्वाक्योपन्यासः किमर्थं । न तावत्पूर्वाधिकरणाक्षेपार्थं । ज्योतिर्वाक्यस्योभयाधिकरणविषयतामते तदाक्षेपेऽपि ज्योतिःसूत्रेऽग्निसूक्तस्थमुक्तवाक्यमेव विषय इति पक्षे तदनाक्षेपात् । अनाक्षेपे च चिन्तावैफल्यात् । गायत्रीशब्दस्य प्रागब्रह्मविषयत्वानुक्त्या 'छन्दोभिधानान्नेति चेन्न' इतिशङ्कानुत्थानाच्च । यदि चैतद्दोषपरिजिहीर्षया ज्योतिर्नामैव च्छान्दोग्यस्थं सम-

च्छन्दस्त्वमिष्यते तर्हि समन्वेतव्यनामाग्रहणान्न्यूनता । स्वपक्षसा-
धनमनुक्त्वैव च्छन्दोभिधानादित्याक्षेपोऽपि नोचितः ।

यत्तु—* गायत्रीवाक्ये विषये ज्योतिर्वाक्योपादानं पूर्वपक्षे
ज्योतिरधिकरणाक्षेपदर्शनार्थम् । ज्योतिर्वाक्ये विषये गायत्री-
वाक्योपादानं गायत्रीशब्दरूपपूर्वपक्षबीजप्रदर्शनार्थमिति चन्द्रि-

---

* गायत्रीवाक्ये विषय इति । अत्राय चन्द्रिकाकारस्याऽऽशय —
'ज्योतिश्चरणाभिधानात्' इत्यादिचतु सूत्रीविषयेऽधिकरणभेदोऽभेदो वेति
मतद्वैविध्य वर्तते । तत्र तत्त्वप्रकाशिकाकारमतेऽधिकरणभेद । ज्योतिश्चरणे-
त्येकमेव सूत्रमेकमधिकरणम् । छन्दोभिधानान्नेत्यादित्रिसूत्री त्वधिकरणान्त-
रम् । तत्र प्रथमाधिकरणविषयको विचार इत पूर्वमुक्त । इदानीं तु द्वितीया
धिकरणविषयकविचारश्चिन्त्यते । तत्र सुधाकारमतेऽस्याधिकरणस्य विषयवा-
क्यम् 'अथ यदत परो दिवो ज्योति ' इति । तत्त्वप्रकाशिकाकारमते तु
'गायत्री वा इदꣳ सर्वम्' इति वाक्यम् । परतु भाष्ये वाक्यद्वयमप्युदाहृतम् ।
तत्राऽऽद्यपक्षे गायत्रीवाक्यस्य द्वितीयपक्षे तु 'अथ यदत ' इति वाक्यस्य
भाष्ये किं प्रयोजन तदवश्य वक्तव्यम् । अन्यथाऽन्यतरपक्षेऽन्यतरवाक्यस्य
वैयर्थ्यं स्यात् । अतस्तत्सार्थक्यम् 'गायत्रीवाक्ये विषये ' इत्यादिग्रन्थेन
समर्थ्यते । तथा हि—गायत्र्याश्छन्दस्त्वे तामुपक्रम्य च्छान्दोग्य उक्तस्य ज्योति-
षोऽपि च्छ दस्त्वादग्निसूक्तस्थमपि ज्योतिश्छन्द एव भवेदित्येक. पूर्वपक्ष ।
अस्मिन्नेव पक्षे द्वितीय पूर्वपक्षस्तु—ज्योतिराद्यधिकरणोक्तरीत्याऽग्निसूक्त-
स्थस्य ज्योतिषो विष्णुत्वेऽपि च्छान्दोग्यस्य ज्योतिश्छन्द एवेति । अत्रैव
तृतीय पूर्वपक्ष —ज्योतिरधिकरणे विष्णौ निर्णीतज्योति श्रुत्या छान्दोग्यस्थ-
स्यापि ज्योतिषो विष्णुत्वेऽपि गायत्री न विष्णु । तत्र [त]च्छ्रुतेरभावादिति ।
एव च गायत्रीवाक्ये विषये सति ज्योतिर्वाक्योपादानस्य ज्योतिरधिकरणाक्षेप-
प्रदर्शनपूर्वकनिरुक्तपूर्वपक्षत्रयप्रतिपादन फल सिद्धम् । ज्योतिर्वाक्ये विषये सति
तु पूर्वपक्षद्वयमेव । तथा हि—छान्दोग्यस्थज्योतिष 'गायत्री वै ' इत्युपक्रमेण
गायत्रीत्वादग्निसूक्तस्थमपि ज्योतिर्गायत्र्येवेत्येक । द्वितीयस्तु—अग्निसूक्तस्थ
ज्योति कर्णादिविदूरत्वाद्विष्णुरित्यस्तु । परतु च्छान्दोग्यस्थ ज्योति 'तदेत-
द्दृष्ट च श्रुत च ' इति तद्विरुद्धदृष्टश्रुतत्वादिश्रवणान्न विष्णुरिति । एव चा-
स्मिन्नपि पक्षे गायत्रीवाक्योपादानस्य गायत्रीशब्दरूपपूर्वपक्षबीजप्रदर्शनार्थत्वं
सिद्धमिति ।

कायामुक्तम् । तदसत् । 'गायत्री वै' इत्युपक्रमाच्छान्दोग्यस्थज्योतिषश्छन्दस्त्वेऽप्यभिसूक्तस्थज्योतिषः वर्णादिविदूरत्वेन साधितस्य ब्रह्मत्वस्यानाक्षेपाच्चिन्तावैफल्यात् । ननु द्वयोरैक्याश्रयणे नैव शङ्केति परैरुक्तमेवेति चेत् । वर्णादिविदूरत्वस्य द्रष्टृत्वश्रुत्यादेश्चात्यन्तविरुद्धतया प्रत्यभिज्ञाबाधस्योक्तत्वात् ।

यत्तु चन्द्रिकायाम्—उक्तमाक्षिप्य ज्योतिषो गायत्रीत्वे 'इयं वाव सा येयं पृथिवी' ( छा० ३ । १२ । २ ) इति गायत्र्यभिन्नत्वेनोक्तायां पृथिव्याम् 'अस्यां हीदं सर्वं भूतं प्रतिष्ठितम्' इत्युक्तस्थितिहेतुत्वादेरपि तद्धर्मत्वापत्त्या जन्मादिसूत्राक्षेपसंभवाच्चिन्तासाफल्यं वर्णितम् । तन्मन्दम् । 'इदं सर्वम्' इति प्रत्यक्षावगतकिंचिदाश्रयत्वमात्रोक्त्या जन्मादिसूत्राभिहितचेतनाचेतनात्मककृत्स्नजगज्जन्मस्थितिलयहेतुत्वादिरूपभवदभिमताष्टकर्तृत्वानाक्षेपात् । तावताऽपि ज्योतिर्वाक्यप्रयोजनालाभाच्च । एतेन '+ योऽयमन्तर्हृदये' इति च्छान्दोग्यस्थे ज्योतिष्यानन्दमयधर्मभूतहृदयनिहितत्वश्रवणेन ज्योतिरधिकरणमनाक्षिप्यैवाऽऽनन्दमयाधिकरणाक्षेपकत्ववर्णनमपि चन्द्रिकोक्तमपास्तम् । गुहानिहितत्वहृदयनिहितत्वयोर्भेदेन प्रत्यभिज्ञानाभावादित्युक्त्याऽऽनन्दमयाधिकरणाक्षेपकत्वाभावस्य पूर्वमुक्तत्वाच्च । किंच गायत्र्याश्छन्दस्त्वेऽपि तदुपक्रममात्रान्न ज्योतिषश्छन्दस्त्वम् । प्रकरणविच्छेदकाथशब्दश्रवणेन 'अथैष ज्योतिः' इत्यादावेतच्छब्दस्येव 'अथ यदतः परो दिवो ज्योतिः' इत्यत्रापि यच्छब्दस्याप्युक्तपरामर्शित्वासंभवात् । अस्मन्मते तु 'छन्दोभिधानात्' इत्यत्रैव प्रकरणविच्छेदमाक्षिप्य तन्निराकरणेन 'यदतः परः' इत्यत्र यच्छब्दस्य पूर्वप्रकृतवाचित्वमेव, न 'अथैष ज्योतिः' इत्यत्रेव प्रस्तोष्यमाणपरामर्शित्व

---

ननु पूर्वोत्तराधिकरणानामानन्दमयाक्षेपपूर्वं जिज्ञासासूत्राक्षेपकत्वेन प्रवृत्तत्वात्कथमस्य ततो विलक्षणस्य तन्मध्ये निवेश इत्याशङ्क्य पक्षान्तरमाह—

+ योऽयमन्तर्हृदय इति । अयं भावः—यद्यप्ययं धर्मः 'यो वेद निहितं गुहायाम्' इति मन्त्रवर्ण एव श्रुतो न त्वानन्दमये, तथाऽपि मन्त्रवर्णोक्तस्यैवाऽऽनन्दमयशब्देनोच्यमानत्वादिति ।

मिति व्यवस्थाप्यत इति न दोषः । अत एव गायत्रीपूर्वप क्षोऽपि न युक्तः । किंच निरवकाशकर्णादिविदूरत्वलिङ्गमात्रेण सावकाशज्योतिःश्रुतिबाधस्य पूर्वाधिकरण उक्तत्वादत्र 'यद्वै तद्ब्रह्म' (छा० ३ । १२ । ५) इति निरवकाशश्रुतिसहितेन निरवकाशभूतादिपादत्वलिङ्गेन गायत्रीश्रुतिबाधस्य कैमुतिक-न्यायसिद्धत्वान्नोक्तपूर्वपक्षोदयः ।

यत्तु चन्द्रिकायाम्—विष्णौ प्रसिद्धेष्वन्येषु भगवन्नामसु सत्स्व-न्यत्र प्रसिद्धगायत्र्यादिशब्दप्रयोगवैयर्थ्यान्न गायत्रीशब्दो भगव-त्पर इत्यधिकशङ्कया पूर्वपक्षोत्थानवर्णनम् । तदसत् । आकाशा-दिपदसामानाधिकरण्येऽस्याः शङ्काया × विशिष्याऽऽकीर्तनेन

---

× विशिष्याऽऽकीर्तनेनेति । इत्थं ह्याकाशाधिकरणे चन्द्रिका—अपरा तु—युक्तमन्यत्र निरूढानामपीन्द्रादिशब्दानां श्येनादिशब्दानां यजिसामानाधि-करण्यम् 'मत्सी द्रमिन्दो पवमान विष्णुः' इत्यादौ विष्णुशब्दसामानाधि-करण्यात् 'यो देवानां नामधा' इति विशेषश्रवणादन्यत्रानिरूढान्त स्थत्वमुख-सद्भावाच्च विष्णुपरत्वम् । उत्पत्तिशिष्टसोमावरुद्धेऽपि याग उत्पन्नशिष्टस्य फलचमसस्य भक्षणमुखेनानुप्रवेशवदर्था तत्रावरुद्धेऽपीन्द्रादिशब्देऽन्तःस्थत्वमुखेन ब्रह्मप्रवेशाविरोधात् । आकाशशब्दस्य तु क्वापि तत्सामानाधिकरण्याभावाद्विशेष-श्रुत्यभावादन्यत्रानिरूढमुखाभावाच्चाऽऽमिक्षावरुद्धे यागे वाजिनवद्विरोधान्न वि-ष्णुपरत्वमिति । प्राणाधिकरणेऽपि—अपरा तु—मुख्यत्वायौ मुख्यप्राणत्वप्रसिद्धेः 'मुखे मुख्यः प्रकीर्तितः' इति वचनाच्च प्राणशब्दस्य परमात्मनि मुख्यत्वायो गान्मुख्यसंभवे चामुख्यग्रहणायोगान्नात्र प्राणशब्दः परमात्मपर इति । एवं चाऽऽकाशाधिकरणप्राणाधिकरणयोरिमामेव शङ्कां कृत्वा परिहारस्योक्तत्वादत्र तत्परिहारस्यायोगान्नाम निष्फलत्वादित्याशयः । ननु तत्राऽऽकाशशब्दप्राण-शब्दविषयिका शङ्का, अत्र गायत्रीशब्दविषयिका । तथा च न निष्फलत्व-मिति चेत् । भ्रान्तोऽसि । "आकाशादिशब्दसाधारणी चेयम् । गायत्री-शब्देऽनुपपत्त्यन्तरसद्भावात्स उदाहृतः । अत एव 'अग्निगायत्र्यादि' इति भाष्य आदिपदप्रयोगो युक्तः । 'अधिकरणान्तरेऽप्येतन्न्यायस्यानुसंधेयत्वं च हिशब्देन सूचयति' इति टीका चोपपन्ना" इति चन्द्रिकाग्रन्थाद्धि अय-मर्थः प्रतीयते—निरुक्ता शङ्काऽऽकाशप्राणगायत्रीशब्दविषयिका बोध्या । ननु तर्हि त्रयोऽप्यत्रोदाहर्तव्या, न तु गायत्रीशब्द एवेति चेत्तत्राऽऽह—

तत्परिहारायोगात् । सर्वत्र तत्परिहारस्तु न सूत्रारूढः । सूत्रे 'छन्द-आद्यभिधानात्' इति विन्यासापत्तेः । एतेन—आकाशादिशब्दसाधारणीयम् । गायत्रीशब्देऽनुपपत्त्यन्तरसद्भावात्=इधिकशङ्कोदय उदाहृत इति चन्द्रिकोक्तमनादरणीयम् ।

यदपि चन्द्रिकायाम्—युक्तमग्निसूक्तस्थज्योतिषो विष्णुत्वम् । उपदेशभेदाभावात् । इह तु 'दिवः' इति पञ्चम्युपदेशवाक्यस्थस्य ज्योतिषो ज्योति श्रुत्या विष्णुत्वेऽपि 'दिवि' इति तद्विरुद्धसप्तम्युपदेशवद्वाक्यस्थाया गायत्र्या न विष्णुत्वमित्यसाधारणी त्वन्यत्राधिकशङ्काप्रदर्शनम् । तदप्यसत् । प्रत्यभिज्ञाप्रयुक्तस्यैव विष्णुपरत्वस्योपदेशभेदप्रतिबध्यतया निमित्तान्तरप्रयोज्यस्य तस्य तदप्रतिबध्यतया तत्र तदभावहेतुत्वाभिधानस्यायुक्तत्वात् । छान्दोग्यवाक्यगतद्रष्टृत्वादिविरुद्धकर्णादिविदूरत्वोपदेशस्य तत्रापि सत्त्वाच्च प्रत्यभिज्ञानमित्यस्योक्तत्वात् । अत एव पञ्चमीनिर्देशेत्याद्यपि न युक्तम् । पञ्चमीनिर्देशस्य विष्णुपरत्वाप्रयोजकत्वात् । ज्योतिषश्चरणाभिधानादिहेत्वन्तरेण विष्णुपरत्वस्यैव सर्वात्मत्वादिहेत्वन्तरेण विष्णुपरत्वस्य गायत्र्यामपि संभवेन तत्रोपदेशभेदस्याप्रतिबन्धकत्वात् । यदि हि ज्योतिरुपक्रमाद्गायत्री स्यात्तस्यास्तदभेदाच्च तस्या विष्णुपरत्वमुक्तं स्यात् । तथोपदेशभेदान्न तदभेद इति शङ्का स्यात् । इह तु गायत्र्युपक्रमाज्ज्योतिषश्छन्दस्त्वे शङ्किते तद्रूपभेदाभिधानं छन्दस्त्वाभावेऽनुकूलमेव स्यात् ।

---

गायत्रीशब्देऽनुपपत्त्यन्तरेति । यथाऽऽनन्दमयशब्द उपदेशभेदादिरूपाऽनुपपत्तिस्तथा गायत्रीशब्दविषयेऽप्यस्तीति विशेषद्योतनार्थं गायत्रीशब्द एवोदाहृतः । न त्वाकाशप्राणशब्दौ । तद्विषये ह्युपदेशभेदादिरूपानुपपत्त्यभावात् । तथा च निरुक्तचन्द्रिकाग्रन्थानुरोधादत्राप्याकाशप्राणशब्दविषयिका शङ्काऽभिप्रेता, सा च पूर्वाधिकरणयोरप्युक्तेत्यत्र तदुपन्यासस्तत्परिहारश्च निष्फल एवेति भावः ।

= अधिकशङ्कोदय इति । अधिकः शङ्कोदयो यस्मिन्निति विग्रहः । स च गायत्रीशब्द इति भावः । इदानींतनचन्द्रिकापुस्तकपाठस्तु—'अनुपपत्त्यन्तरसद्भावात्स उदाहृतः' इति ।

ननु गायत्र्या विष्णुत्वाज्ज्योतिषोऽपि विष्णुत्वमत्र प्रतिपाद्य तच्चोपदेशाद्भज्यत इति । मैवम् । गायत्रीनामसमन्वये प्रधाने सिद्धे ज्योतिर्नामसमन्वयाभावेऽप्यदोषात् । न ह्यत्र ज्योतिषोऽन्यत्वे पूर्वाधिकरणस्थज्योतिषोऽप्यन्यत्वं हेतुभेदादित्युक्तम् । अप्रधाने चार्थिकेन चोद्यपरिहारो युक्तो नेत्युक्तार्थप्रतिक्षेपास्वारस्यादुभयोरप्रतिपाद्यत्वेनैकदेशाक्षेपो युक्तः । तथा सत्याक्षेप्यनामग्रहणकर्तव्यतापत्तेः ।

यदपि चन्द्रिकायाम्—अग्निसूक्तस्थज्योतिर्निष्ठकर्णादिविदूरत्वविरुद्धदृष्टश्रुतत्वात्तु पदेशभेदान्नेदं ज्योतिर्विष्णुः, ततश्च गायत्र्यपि न विष्णुरित्यपराधिकशङ्काप्रदर्शनम् । तदपि पूर्वोक्तशङ्कानिराकरणयुक्त्यैव न सत् । ज्योतिषोऽन्यत्वेऽपि गायत्र्या विष्णुत्वाविरोधात् ।

यदपि चन्द्रिकायाम्—एकस्या वह्निश्रुतेरन्यत्रप्रसिद्धिबाधेऽपि गायत्रीवाक्पृथिव्याद्यनेकशब्दानामन्यत्रप्रसिद्धिबाधो न युक्त इत्यधिकशङ्काप्रदर्शनम् । तदप्यसदेव । अन्तरधिकरणे श्रुतिबाहुल्येऽपि लिङ्गेन बाधदर्शनात्प्रकृत एकविषयानेकश्रुत्यभावेन श्रुतिबाहुल्यासिद्धेश्च । अन्यथाऽतिप्रसङ्गात् । वाग्गायत्रीपदयोरपर्यायत्वात्प्राणमातरिश्वादिपदवल्लिङ्गबाध्यत्वोपपत्तेश्च ।

यच्च चन्द्रिकायाम्—अन्तरधिकरण इन्द्रादिबहुश्रुतीनामन्यत्रप्रसिद्धिबाधस्त्वन्यत्राप्रसिद्धान्तस्थत्वमुखेन युक्तः । न चेह तथा मुखमस्तीत्युक्तम् । तन्न । प्रकृतेऽपि तथाभूतसर्वभूतात्मकत्वादिमुखसद्भावात ।

यदपि चन्द्रिकायाम्—एताश्च प्रमाणाश्रिता । प्रमेयाश्रिता तु—युक्तमाकाशाद्यधिकरणोक्तं जन्यभूताकाशस्वभावस्य विवरत्वादेर्ज्योतिःशब्दप्रवृत्तिनिमित्तस्य चेशाधीनत्वम् । धर्मिणा सह जन्यत्वात् । गायत्रीरूपवेदस्य त्वनादित्वेन तत्स्वभावस्य गानत्राणकर्तृत्वादेः प्रवृत्तिनिमित्तस्य नेशाधीनत्वमित्यधिकाशङ्काप्रदर्शनम् । तदपि न सत् । न तावद्वर्णाना पदाना वा नित्यत्व वेदनित्यत्वम् । कविकाव्यादेरपि नित्यत्वप्रसङ्गात् । अपि त्वानुपूर्वीनित्यत्वम् । तच्चोच्चारणप्रयोज्यामिति कथ तस्य

नेश्वराधीनता । तस्या अनादित्वरूपनित्यत्वस्य सादित्वरूप-जन्यत्वाविरोधित्वेऽपीश्वराधीनत्वाविरोधित्वाच्चेति ।

पूर्वपक्षश्चापि न युक्तः । पूर्वाधिकरणे ब्रह्मपरत्वेन निर्णीतया ज्योतिःश्रुत्या गायत्रीश्रुतिबाधसंभवात् । अत एव श्रुत्या श्रुतिबाधायोग इति तत्त्वप्रकाशिकायां जयतीर्थीयोक्तिरपि न युक्ता । निर्णीतत्वानिर्णीतत्वाभ्यां वैलक्षण्यात् । न चोपक्रमस्थ-त्वाद्गायत्रीश्रुतिप्राबल्यमित्यभिप्रायकल्पनमित्यपि साधु । ब्रह्म-तर्कादुपक्रमापेक्षयोपक्रमप्राबल्यमवगच्छता त्वत्पूर्वपक्षिणा तथा पूर्वपक्षि(क्षयि)तुमयोग्यत्वात् ।

ननु गायत्र्या अविष्णुत्वे ‘ अथ यदतः ’ इति ‘ यदतः परो ज्योतिः ’ इति निर्दिष्टप्रातिनिर्देशः [ अतः ] यच्छब्दसमा-नाधिकरणो ज्योतिःशब्दोऽपि तत्परः स्यादिति ज्योति-रप्यविष्णुः स्यादिति चेत् । न । ‘ अथैष ज्योतिः ’ इत्य-त्रैतच्छब्दस्येव प्रकृतेऽप्यथशब्देन विभिन्नप्रकरणस्य यच्छब्दस्य प्रकृतपरामर्शित्वायोगेन प्रकारिष्यमाणपरत्वौचित्यात् । अनेका-र्थस्य तस्येदमादिवत्पूर्वपरामर्शित्वाभावाच्च । तस्य गायत्रीपरत्वे ‘ या ज्योतिः ’ इति स्त्रीलिङ्गतौचित्याच्च । ब्रह्मवर्चसतेजोहेतौ गायत्र्याम् ‘ आयुर्घृतम् ’ इतिवत् ‘ तेजो वै गायत्री ’ इत्य-न्यथासिद्धमिति पूर्वमेवोक्तम् । अतो ज्योतिर्गायत्रीवाक्ययोरे-कविषयताग्राहकप्रमाणाभावाद्गायत्रीशब्दस्य छन्दःपरत्वेऽपि ज्योतिःशब्दस्य तत्परत्वासिद्धः । कथंचिदेकवाक्यताकल्पने च निर्णीतोपसंहारस्थज्योतिष्पदानुरोधेन गायत्रीपदस्यैव ब्रह्म-परतापत्त्या न छन्दःपरौ ज्योतिर्गायत्रीशब्दाविति युक्तं कल्प-यितुमिति । एवं सिद्धान्ते * सूत्राक्षरार्थस्तावदयुक्तः । ‘ तथा

---

* सूत्राक्षरार्थस्तावदिति । इत्यस्य स्थाने तदीयं भाष्यम्—“अथ यदतः परो दिवो ज्योतिर्दीप्यते ’ इत्युक्तस्य ज्योतिषः ‘ गायत्री वा इदं सर्वम् ’ इति गायत्र्या समारम्भः कृतः । तस्मान्न विष्णुरिति चेत् । न । तथा चेतोऽर्पणं हि निगद्यते । अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्पणं हि निगद्यते । तथा हि दर्शनम्—‘ गायति च त्रायते च ’ इत्यादि ” इति । अत्र दर्शनं नाम श्रुतिरिति तट्टीकाकाराः । अयमर्थः—ननु छन्दोविशेषे रूढस्य

चेतोर्पण० ' इत्यादे पञ्चम्यन्तस्य हेतुसमर्पकत्वे ' तथा हि दर्श नम् ' इत्यस्य दृष्टान्तसमर्पकत्वं स्वत स्वरसम् । तत्परित्यज्य ' तथा हि ' इत्यादेर्हेतुसमर्पकत्वकल्पनस्य चेतोर्पण०' इत्यादेः प्रयोजनसमर्पकत्वकल्पनस्य चायुक्तत्वात् । किंच तथाशब्दः सादृश्यवाची प्रसिद्धः । तेन सादृश्यानुसधानमेव स्वरसतः प्रतीयते । ' तथाहि ' इत्यखण्डो निपात उक्तार्थोपपादनप्रतिज्ञायां स्वरसः । त्वदुक्तार्थे तु न स्वारस्यम् । उत्तरसूत्रद्वयान न्वयस्तूक्त एव । तादधीन्यासंभवस्य पूर्वपक्षोपन्यस्तस्य न किंचिदुपपादकं सौत्रं पदम् । उत्सूत्रसिद्धान्तस्त्वयुक्त । ' अत एव प्राण ' ( ब्र० सू० १ । १ । २३ ) इत्यादिवदतिदेशा देव तद्वारणसूचनं त्वतिदेशाभावादेव न युक्तम् ।

यत्तु चन्द्रिकायाम्—

अनादीनां गुणादीना यथा गुण्यादितन्त्रता ।
तथाऽस्मादिश्रुतेरस्तु क्षेमायेश्वरतन्त्रता ॥

यथा वैशेषिकमतेऽनादिनित्यानामपि गगनादिपरिमाणादीनां स्वाश्रयगगनाद्यधीनता, × यथाऽद्वैतिमते षाऽनादेरात्माज्ञा-

---

गायत्रीशब्दस्वोपक्रमाज्ज्योति शब्दोऽपि च्छन्दोवाचक एव । न तु विष्णुवाचक इति चेत् । मैवम् । गायत्रीशब्दार्थगुणस्वरूपत्वेनोपासनार्थ गायत्रीशब्देन विष्णु रेवोच्यते । अतस्तदुपक्रमाज्ज्योति शब्देनापि विष्णुरेवोच्यते । एवमेव चाग्न्यादि-शब्दैरपि तत्तदर्थगुणस्वरूपत्वेनोपास्त्यर्थं विष्णुरेव प्रतिपाद्यत इति सिद्धान्तात् । ननु भवेदय सिद्धान्तो यदि भूतोऽय गायत्रीशब्दो विष्णुमेव प्रतिपादयेत् । न चैतदस्ति । प्रमाणाभावादिति चेत् । न । ' गायति च त्रायते च ' इति श्रुतिरूपप्रमाणस्य सद्भावात् । सा च श्रुतिर्गानत्राणकर्तृत्व गायत्रीपदार्थस्य श्रावयति न च तत्कर्तृत्व छन्दासि सभवति । येन गायत्रीपदार्थश्छन्दोविशेष स्यात् । तस्माद्विष्णुरेव गायत्रीपदवाच्य । तदुपक्रमाच्च ज्योतिष्पदार्थोऽपि विष्णुरेवेति सिद्धमिति । परत्वयमर्थ सूत्राक्षरस्वारस्यहीनत्वादयुक्त इति भाव ।

× अद्वैतिमत इति । अय तेषा भाव —'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योग षडस्माकमनादय ' इति । अस्यार्थ — जीव प्रसिद्ध । ईश ईश्वर । विशुद्धा चिन्नाम शुद्ध ब्रह्म । जीवेश्वरयोर्भिदा नाम भेद । अविद्या नाम, अज्ञानम् । तच्चितोर्योगो नाम, अविद्याया ब्रह्मणश्च

नसंबन्धस्य जीवब्रह्मविभागादेश्च संबन्ध्यज्ञानाद्यधीनता, यथा वा भामाकरमतेऽनादे*र्दुःखप्रागभावस्य मोक्षस्य ज्ञानाधी-

---

संबन्ध । एते षट् पदार्था अस्मन्मतेऽनादयो बोध्या । ननु यदि पूर्वोक्ताः षट् पदार्था अनादयस्तर्ह्यद्वैत कथमिति चेत् । शृणु । त्रिविधा हि सत्ता—पारमार्थिकी व्यावहारिकी प्रातिभासिकी चेति । तत्राऽऽद्या ब्रह्मण एव । तस्य कदाऽप्यबाध्यमानत्वात् । व्यावहारिकी च भूतभौतिकस्य सर्वस्य जगत । तस्य मोक्षदशायां बाधेऽपि व्यवहारदशायामबाध्यमानत्वात् । तृतीया तु शुक्त्यादौ भासमानस्य रजतादे. । तस्य व्यवहारदशायामेव बाधात् । तदुक्तम्—

कालत्रये ज्ञातृकाले प्रतीतिसमये तथा ।
बाधाभावात्पदार्थाना सत्त्वत्रैविध्यमिष्यते ॥
तात्त्विक ब्रह्मण सत्त्व व्योमादेर्व्यावहारिकम् ।
रूप्यादेरर्थजातस्य प्रातिभासिकमिष्यते ॥
लौकिकेन प्रमाणेन यद्बाध्य लौकिकेऽवधौ ।
तत्प्रातिभासिक सत्त्व बाध्य सत्येव मातरि ॥
वैदिकेन प्रमाणेन यद्बाध्य वैदिकेऽवधौ ।
तद्व्यावहारिक सत्त्व बाध्य मात्रा सहैव तत् ॥ इति ।

एव चाद्वैत ब्रह्मेत्युक्ति पारमार्थिकसत्ताभिप्रायेण बोध्या । निरुक्तश्लोके ' विशुद्धा चित् ' इत्यनेन शुद्ध ब्रह्मोच्यत इत्युक्तमेव । तस्यैव च पारमार्थिकी सत्ता । तदतिरिक्ताना जीवादीना पञ्चाना तु व्यावहारिकैव सत्ता । तेषां हि यावत्ससार स्थायित्वेऽपि मोक्षावस्थाया विनाशात् । तेष्वपि जीवेश्वरभेदोऽविद्या ब्रह्मणोऽविद्यासबन्धश्चेत्येषा त्रयाणा स्वरूपेणैव विनाशः । जीवेश्वरयोस्तु न तथा । किंतु जीवत्वेश्वरत्वप्रापकोपाधेरेव नाश । तथा च नाद्वैते ब्रह्मणि कश्चिद्विरोध । ननु तर्हि किमर्थं षण्णा परिगणनमिति चेत् । उच्यते । अस्मिञ्जगत्यनादय पदार्था षडेव सन्तीति बोधनार्थं तादृश परिगणनमाभियुक्तैः क्रियते । तत्र च पारमार्थिकस्य ब्रह्मणोऽनादित्वमनन्तत्व च बोध्यम् । कालत्रयाबाध्यत्वमिति यावत् । अन्येषा जीवादीना पञ्चाना त्वनादित्वेऽपि नानन्तत्वम् । एव च मूलाविद्याधीनतैवैतेषाम् । ब्रह्मज्ञाने जाते तु न कश्चिद्विभाग इति ।

* दुःखप्रागभावस्येति । ज्ञानेन दु खप्रागभावस्योत्तरसमयसबन्धरूपपरिपालन क्रियत इति तैरुच्यमानत्वादिति भाव । एव दुरितप्रागभावेऽपि ध्येयम् ।

नता, यथा वा मतान्तरे दुरितप्रागभावस्यानादेरपि निषिद्धा- करणाधीनता, तथा गायत्र्यास्तत्पदप्रवृत्तिनिमित्तस्य चोत्पत्त्य- भावेऽपि विष्ण्वधीनता स्थितैवेति पूर्वपक्षपरिहारप्रदर्शनम् । तन्न सम्यक् । गायत्र्याश्रितस्य धर्मस्य गानत्राणकर्तृत्वस्य कथं तदनाश्रयब्रह्माधीनत्वमिति शङ्कायां गुणानां स्वाश्रयाधीन त्वोपपादनेनापरिहारात् । नहि नित्याया गायत्र्यास्तत्स्वभा- वस्य चान्याधीनत्वे गगनादिपरिणामादिदृष्टान्तो घटते । तद्व दिह गुणगुणिभावाभावात् । स्वनिष्ठानि हि द्रव्याणि नित्यानि गगनादीन्यनधीनान्युपलभ्यन्ते । अतस्तत्साधारण्यं न तादधी- न्यप्रयोजकम् । अनित्येष्वपि नोत्पादकत्वमाश्रितत्वं वा ताद- धीन्यनियामकम् । अनुत्पादकपोषकाद्यधीनत्वस्यैव बहुलमु- पलम्भात् । श्रुतिप्रामाण्यात्तदङ्गीकारे तु तदेव तर्हि वक्तव्यम् । न तु दृष्टान्तभावात् । दुःखप्रागभावे न ज्ञानाद्यधीनता । अपि तु प्रागभावनाशकप्रतियोग्युत्पत्तिप्रतिबन्धकत्वमात्रम् । तन्मात्रेण ता- दधीन्यव्यवहारमात्रम् । एवमद्वैतिमतेऽप्यनाद्यज्ञानसंबन्धस्य जीव ब्रह्मविभागादेश्चाविद्यानाशाधीननाशप्रतियोगित्वेनाविद्याधीनत्व- व्यवहारमात्रमेव । दुरितप्रागभावस्यापि निषिद्धाकरणाधीनत्वं दुरितोत्पत्तिकारणनिषिद्धकरणाभावादेव । नैव परमात्मनो गाय- त्रीस्वरूपे गानत्राणकर्तृत्वे वा कारणत्वमिति दृष्टान्तोऽप्ययुक्त एव । किंचास्त्वनादेरपि गायत्र्याख्यवेदस्येश्वराधीनत्व माऽस्तु वा । किं तेन स्यात् । न च गायत्र्यास्तादधीन्यात्तत्पदवाच्यता ब्रह्मणः । किंतु तत्पदप्रवृत्तिनिमित्तस्य तादधीन्यात् । तच्चेदानी- मपि सिध्यति । भृत्यस्य राजाधीनत्वेऽपि तद्गतस्वभावविशेषा- णां तादधीन्यादर्शनेन वस्तुत(न)स्तादधीन्यस्य तत्स्वभावविशे- षतादधीन्यं प्रत्यप्रयोजकत्वात् । दीपगतप्रकाशकत्वादेस्तत्पद- प्रवृत्तिनिमित्तस्य तैलाद्यधीनत्वदर्शनेऽपि तैलादेर्दीपादिपदवा- च्यत्वादर्शनेन तत्पदप्रवृत्तिनिमित्तस्य तादधीन्येऽपि तस्य तत्प- दप्रयोगाप्रयोजकत्वाच्च । तस्मात्--चतुःसूत्र्या ऐकाधिकरण्यम् । तत्र च च्छान्दोग्यवाक्यमेव विषयः । तत्रस्थज्योतिष्पदस्यैव परमात्मपरत्वं साध्यम् । तत्र मन्त्रवर्णोक्तचरणाभिधानमेव

हेतुः । तत्र 'स्वच्छन्दोभिधानात्' इत्यसिद्धिशङ्का । तस्यां छन्दसि भूतचरणत्वासंभवसूचनेन स्वच्छन्दोभिधानस्यान्यथासिद्धिसूचनेन तत्रापि भूतादिपादव्यपदेशेनोपष्टम्भनम् । पुनरुपदेशभेदप्रयुक्तासिद्धिशङ्कानिवारणमित्येवास्मज्ज्ञाष्यकारोपदर्शितः क्रम एव युक्त इति ॥ २७ ॥

श्रीमच्छंकरपादाब्जभूषणे परदूषणे ।
रघुनाथकृतिर्भूयाज्ज्योतिर्निर्णयविवेचने ॥

इति ज्योतिरधिकरणं समाप्तम् ॥

---

अथ द्वितीयाध्यायस्य प्रथमः पादः ।

## अथ स्मृत्यधिकरणम् ।

मन्वाद्यद्वैतवादिप्रतिभटकपिलाद्यागमस्यैव बाधो
न्याय्यस्त्वेवं गुरूणां सुवचविवरणाक्षेपिणां दूषणाय ।
क्लृप्तः कोऽपि प्रबन्धः सरलमतिमतां राघवाचार्यसूरि-
च्छात्रेणायं प्रयत्नात्प्रभवतु विदुषां संसदि प्रोत्सवाय ॥

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्य-
स्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

पूर्वाध्याये जगदुपादानत्वकर्तृत्वाद्युपलक्षितं प्रत्यगभिन्नाद्वितीयं ब्रह्म वेदान्तैः प्रतिपाद्यत इति वेदान्तानां तादृशब्रह्मपरत्व समप्रपञ्चं निरूपितम् । तदिह स्मृत्यादिविरोधोद्भावनेनाऽऽक्षिप्यास्मिन्नध्याये समर्थ्यत इत्यनयोरध्याययोर्विषयविषयिभावः संगति । अत एवास्य प्रथमाध्यायानन्तर्यं फलवत्त्व च । विषयपरिज्ञान विनाऽसा( स )ङ्गत्यनाक्षेपस्य तत्परिहारस्य वा कर्तुमशक्यत्वात् । अत्र साक्षात्परम्परया वा बाधकोद्भावनेन समन्वयाक्षेपः पूर्ववाद्यभिमतः । तत्र साक्षाद्बाधकमपेक्ष्य परम्परया बाधकस्य विलम्बितप्रवृत्तिकत्वादतिविरोधिनः स्वपक्षे स्मृतिन्यायविरोधस्य साक्षाद्बाधकस्यैव प्रथमपादे निरासः । तत्र 'इतरेषां चानुपलब्धेः' ( ब्र० सू० २ । १ । २ ) इति सूत्रे महत्तत्त्वादिसाधकप्रमाणाभावेन तद्विषयकस्मृतेरमूलकत्वा

स्कार्यस्मृतेरिव तन्नैव रूपेण तत्सधर्मतया कारणस्मृतेरप्रामाण्य प्रसाध्य स्मृत्यनवकाशप्रसङ्गस्येष्टापत्तिपराहतत्वेनाबाधकत्वे सपार्थिते वक्ष्यमाणानुमानाद्यदुष्टप्रमाणमूलकत्वादमूलत्वासिद्ध्या नेष्टापत्तिः सम्भवतीति पुनः स्मृत्यनवकाश आपादित उक्तपरम्परया स्वपक्षविरोधिनां तादृशानुमानादीनां दुष्टत्वोपपादनेन द्वितीयो निरासः । एतेन—तृतीयचतुर्थयोरप्याद्यवत्स्वपक्षबाधकोद्धाररूपत्वाद्यानन्तर्यं स्यात् । द्वितीयस्य तु परपक्षदूषणरूपत्वादन्त्यता स्यादिति चन्द्रिकाकारोक्तं दूषणं निरस्तम् । कारणस्मृतेरनुमानादिमूलकत्वस्मृत्यनवकाशप्रसङ्गेष्टापत्त्ययोगशङ्कायां तन्मूलत्वाभिमतानुमानादीनां दुष्टत्वोपपादनमन्तरेणोपक्रान्तस्मृत्यविरोधस्यापर्यवसानाद्द्वितीय एव तदुपपादनस्याऽऽवश्यकत्वात् । अथैवं पराभिमतमूलप्रमाणदुष्टत्वोपपादनम् 'न विलक्षणत्वात्' ( ब्र० सू० २ । १ । ४ ) इत्यतः प्रागेव कर्तव्यं स्यादिति चेत् । अत्र तात्पर्यविदः—स्मृ(श्रु)तिविरोधे सति स्मृत्यप्रामाण्यस्य * 'विरोधे त्वनपेक्षम्[1]' ( जै० सू० १ । ३ । ३ ) इति न्यायेन सर्वैरेव वेदप्रामाण्यवादिभिरुपगन्तव्यतया विलक्षणत्वादितर्कमुपजीव्य वेदान्तानां वेदान्त्यभिमतार्थपरत्वानिरासे कृत एव तन्त्रस्य प्रामाण्यासंभवात्तदुपजीव्यवेदान्तानां स्मृतिविप्रतिपत्त्या ब्रह्मपरत्वाभावः शङ्कितु शक्यो नान्यथा, इति प्रथमसूत्रोक्तबाधकोपजीव्यब्रह्मवादसाक्षाद्बाधक-

* विरोधे त्वनपेक्षमिति । अयमाशय—ज्योतिष्टोमे सदोनामकमण्डपस्य मध्ये काचिदौदुम्बरी शाखा निखन्यते । तस्याश्च वाससा वेष्टनं कर्तव्यमिति 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृत्या प्रतिपाद्यते । तत्र संशयः, किमियं स्मृतिः प्रमाणमथवाऽप्रमाणमिति । किमत्राऽऽयुष्मताऽभिप्रेयते । प्रमाणमिति । कुत इति चेत् । वेष्टनस्मृतिं पक्षीकृत्य वेदमूलकत्वं साध्यते स्मृतित्वाद्धेतोरष्टकादिस्मृतिवदित्यनुमानेन तत्प्रामाण्यस्य सिद्धत्वादिति प्राप्ते ब्रूमः—'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षवेदवचनेन हि स्पर्शो विधीयते । न हि सर्ववेष्टने सति स्पर्शः सम्भवति । अतो निरुक्तवेदमूलकत्वानुमानं बाधितं बोध्यम् । तस्माद्विप्रलम्भकवाक्यवद्वेष्टनस्मृतिर्निर्मूलत्वादप्रमाणमिति सिद्धान्त इति ।

[1] क. 'पेक्ष्यम्' । इति पाठान्तरमिदानीतनजैमिनिसूत्रपाठ उपलभ्यते ।

विलक्षणत्वादितर्कनिरासस्यैव प्रथमं कर्तुमुचितत्वादिति । तृती-यतुरीययोर्भूतभौतिकादिविषयश्रुतीनां परस्परविप्रतिषेधाद्विरुद्ध-वाक्यद्वयान्यतरत्वमहाजनपरिगृहीतत्वादेः प्रामाण्यप्रयोजकत्वा-संभवेन तदन्यस्य च प्रामाण्यप्रयोजकस्य वेदे दुर्वचतया प्रामा-ण्यप्रयोजकधर्मशून्यानां वेदान्तानां नोक्तब्रह्मपरत्वलक्षणसम-न्वयः संभवतीति रीत्या परम्परया ब्रह्मवादविरोधिनः श्रुति-विप्रतिषेधस्य निरास इति पादोपाधिभेदः । एते पादोपाधिभेदाः श्रीमद्भाष्ये भगवत्पादैः संक्षेपेण दर्शिताः—इदानीं स्वपक्षे स्मृतिन्यायविरोधपरिहारः प्रधानादिवादानां न्यायाभासोपबृंहि-तत्वं प्रति वेदान्तं सृष्ट्यादिप्रक्रियाया अविगीतत्वमित्यस्यार्थस्य प्रतिपादनाय द्वितीयोऽध्याय आरभ्यत इति । तृतीयचतुर्थपा-दयोरप्युपाधिभेदस्तैरेवोपदर्शितः—वियदादिविषयवृत्तिविप्रति-षेधस्तृतीयेन परिहृतश्चतुर्थेनेदानीं प्राणादिविषयः परिह्रि-यत इति ।

यत्तु चन्द्रिकायाम्—"अन्ये तु—आद्यपादे स्वपक्षे सांख्यादि-स्मृतिभिस्तदुन्नीततर्कैश्च विरोधपरिहारः । द्वितीये सांख्यादि-मतानां दुष्टत्वोक्तिः । तृतीये पूर्वभागे + पञ्चमहाभूतश्रुतीनामुत्त-रभागे तु जीवश्रुतीनां चतुर्थपादे लिङ्गशरीरश्रुतीनां परस्पर-विरोधपरिहार इति पादार्थानाहुरिति । निरुक्तपादोपाधिभेद-मनूद्य तत्र= आद्ये तृतीये च पाद एकोपाध्यभावात् । आद्येऽपि

---

+ पञ्चमहाभूतेति । 'केचिदाकाशस्योत्पत्तिमामनन्ति । केचिन्न । एवं जीवस्य प्राणानां च' इत्यादि 'न वियदश्रुतेः' (ब्र० सू० २ । ३ । १ ) इति सूत्रे तदीयभाष्यकारैरुक्तमतस्तदवगम्यत इति तेषां भावः ।

=आद्ये तृतीये चेति । ननु भवन्मतेऽप्येष दोषस्तुल्यः । तथा हि—'स्मृत्य-नवकाश०' ( ब्र०सू० २।१। १ ) इत्यस्यावतरणभाष्ये 'प्रथमपादे युक्त्य-विरोधम् । प्रथमतः स्मृत्यविरोधं दर्शयति' इति, तथा 'न वियदश्रुतेः' ( ब्र० सू० २ । ३। १ ) इत्यस्याप्यवतरणभाष्ये 'जीवपरमात्माधिभूताधिदैवेषु श्रुती-नां परस्परविरोधमपाकरोतीत्यनेन पादेन' इति च त्वदीयभाष्यकारैरुक्तत्वा-दिति चेत् । मैवम् । 'स्मृत्यनवकाश०' इत्यत्र स्मृतीनां युक्तिरूपत्वेन वर्णि-तत्वात् । तृतीये चाभिन्नत्वबहिर्भावेन श्रुत्यविरोधित्वेनैकीकरणात् । न चैवं

'इतरेषां चानुपलब्धेः' (ब्र० सू० २ । १ । २) 'एतेन योगः प्रत्युक्तः' (ब्र० सू० २ । १ । ३) 'स्वपक्षदोषाच्च' (ब्र० सू० २ । १ । १०) 'एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः' (ब्र० सू० २ । १ । १२) इत्यादौ परमतानां दुष्टत्वोक्तेस्त्वयाऽपि स्वीकृतत्वाच्च । नन्वाद्ये तेषां दुष्टत्वोक्तिः स्वपक्षस्य तैर्विरोधनिरासार्थेति चेत् । न । द्वितीयेऽपि तदुक्तेस्तदर्थत्वात् । अन्यथा द्वितीयस्याविरोधाध्यायासंगतिः स्यात् । किं च यथाऽऽद्यपादस्थे 'दृश्यते तु' (ब्र० सू० २ । १ । ६) इत्यत्र विलक्षणयोरपि ब्रह्मप्रपञ्चयोर्वृश्चिकगोमययोरिव कार्यकारणभाव इत्येतदर्थप्रतिपादके स्वपक्षे * तर्कविरोधपरिहारः । तथा द्वितीयेऽपि 'महद्दीर्घवत्' (ब्र० सू० २ । २ । ११) इति सूत्रे 'यथा वा द्व्यणुकादणोर्ह्रस्वाच्च सतो महद्दीर्घं च त्र्यणुकं जायते नाणुं नो ह्रस्वम्, एवं चेतनाद्ब्रह्मणोऽचेतनं जगज्जनिष्यते' इति त्वया भाषितत्वेन तत्रापि तर्कविरोधपरिहारोऽस्त्येव । तृतीयस्य पूर्वभागेऽपि 'अन्तरा विज्ञानमनसी०' (ब्र० सू० २ । ३ । १५) इत्यत्र त्वन्मते 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मु० २ । १ । ३) इत्यादिप्राणमनआदिविषयश्रुत्यविरोधस्योक्तत्वेन न भूतश्रुत्यविरोध[3] एवेति नियमः । ननु 'अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्' (छा० ६ । ५ । ४) इति श्रुतेर्मनआदीनि भूतान्येवेति तद्विचारो भूतविचार एवेति चेत् । तर्हि चतुर्थेऽपि 'तथा प्राणाः' (ब्र० सू० २ । ४ । १) 'सप्तगतेर्विशेषितत्वाच्च' (ब्र० सू० २ । ४ । ५) 'अणवश्च' (ब्र० सू० २ । ४ । ७) इत्यादिबह्वधिकरणैः कृत इन्द्रियविचारोऽपि तृतीयस्य पूर्वभागे स्यात् । चतुर्थेऽपि 'संज्ञामूर्तिक्लृप्तिः'

---

परस्यापि सुवचम् । तुरीयसाङ्कर्यापातात् । अस्मन्मते चाभिप्रेयबहिर्भावेन श्रुत्यविरोधित्वेनैव तस्यैकीकरणायोगात् । तदन्तर्भावे तूक्तो दोष इति भावः ।

* तर्कविरोधेति । ब्रह्मजगती नोपादानोपादेयभाववती, चेतनाचेतनत्वादिना विलक्षणत्वादित्यादितर्कविरोधपरिहार इति भावः ।

---

१ क. 'णुर्नातिह्रस्व ए' । २ क 'गज्जनिष्यते । ३ क. 'धः इत्येव नि' ।

( ब्र० सू० २ । ४ । २० ) इत्यत्र ‘ अनेन जीवेन ’ ( छा० ६ । ३ । २ ) इति वाक्ये जीवस्य कर्तृता नोच्यते किंतु ब्रह्मण इति त्वया सिद्धान्तितत्वेन न + लिङ्गशरीरस्यैव विचार इति नियमः । किंच तृतीयचतुर्थयोरप्याद्यवत्स्वपक्षविरोधपरिहाररूपत्वादाद्यानन्तर्यं स्यात् । द्वितीयस्य तु परपक्षदूषणरूपत्वादन्त्यता स्यात् ” इति दूषणमुक्तम् । तत्रोच्यते—यदुक्तम्—आद्ये तृतीये च पाद एकोपाध्यभावादिति । तदसत् । स्वपक्षसाक्षाद्बाधको द्धारः प्रथमपादोपाधिरनुगत एव । ‘ स्वपक्षे स्मृतिन्यायविरोधपरिहारः ’ इति प्रथमपादोपाधिकथनपरभाष्ये स्मृतिन्याययोर्द्वैराश्येन कथनं तु तयोः स्वपक्षसाक्षाद्विरोधित्वपरिहारेऽपि युक्तिमपेक्ष्य सर्वज्ञप्रणीतत्वमहाजनपरिगृहीतत्वादिना वेदतुल्यायाः स्मृतेरभ्यर्हितत्वसूचनद्वारा तद्विरोधनिरसनप्राथम्यबीजोद्घाटनाय । अभ्यर्हितत्वलाभश्च द्वंद्वे प्रथमं निर्देशात् । ‘ × अभ्यर्हितं पूर्वम् ’ इत्यनुशासनात् । एवं तृतीयपादे पूर्वोत्तरभागयोर्महाभूतजीवविषयकश्रुतेर्विरोधपरिहारेऽपि भौतिकेतरविषय

---

+ लिङ्गशरीरस्यैवेति । अत्र भाव —रत्नप्रभायां हि भाष्यस्थम् ‘इदानीं’ इति प्रतीकमुपादायोक्तम्—अत्र प्रथमपादे समन्वयस्य सांख्यादिस्मृतियुक्तिभिर्विरोधपरिहारः क्रियते । द्वितीयपादे सांख्याद्यागमानां भ्रान्तिमूलत्वमविरोधाय कथ्यते । तृतीये पादे प्रतिवेदांतं सृष्टिश्रुतीनां च जीवात्मश्रुतीनां व्योमादिमहाभूतानां जन्मलयक्रमादिकथनेनाविरोधः प्रतिपाद्यते । चतुर्थपादे लिङ्गशरीरश्रुतीनामविरोध इत्यर्थः । अयमेवार्थः सुखबोधार्थं श्लोकेन संगृहीतः —द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता । भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता ’ इति । एवं च ‘संज्ञामूर्तिक्लृप्ति ’ इत्यत्र ‘ नामरूपव्याकरणे जीवः कर्ताऽथवेश्वरः । अनेन जीवेनेत्युक्तेर्व्याकर्ता जीव इष्यते ॥ जीवान्वयः प्रवेशेन संनिधः सर्वसर्जने । जीवोऽशक्तः शक्त ईश उक्तमोक्तिस्तयोस्तु ॥’ इत्यभियुक्तैरधिकरणतात्पर्ये ब्रह्मण एव कर्तृत्वस्य वर्णितत्वेन ब्रह्मणश्च लिङ्गशरीररूपत्वाभावेन ‘ चतुर्थपादे लिङ्गशरीरश्रुतीनामविरोधः ’ इति सिद्धान्तो भज्येतेति ।

× अभ्यर्हितं पूर्वमिति । यद्यपि कौमुद्याम् ‘ अभ्यर्हितं च ’ इत्युपलभ्यते न तु पूर्वशब्दघटितं तथाऽपि ‘ वासुदेवार्जुनाभ्यां वुन् ’ ( पा० सू० ४।३।९८ ) इत्यत्र ‘ अजाद्यदन्तम् ’ ‘ अल्पाच्तरम् ’ इत्याभ्यां सूत्राभ्या-

श्रुतिपरिहाररूपस्तत्पादोपाधिरनुगत एव । त्वदीयैर्जयतीर्थै(र्थी-र्यै)रप्यध्यात्मेतरविषयकत्वघटितस्यैव तृतीयपादोपाधेरुपदर्शित-त्वाच्च ।

यदपि—'इतरेषां चानुपलब्धेः' इत्यादि । तदस्मदनभिप्रेतार्थदूषणत्वाच्चिन्त्यम् । 'इतरेषां चानुपलब्धेः' इत्यत्र कार्य स्मृतेरिव कारणस्मृतेरपि निर्मूलत्वोपवर्णनस्यैवाभिप्रेतत्वेन स्मृतिमूलत्वाभिमतानामनुमानादीनां दुष्टत्वोपवर्णनस्यानभिप्रेतत्वात् । अत एव प्रथमपादान्ते 'इदानीं परपक्षनिषेधप्रधानं प्रकरणं प्रारिप्समाणः स्वपक्षपरिग्रहप्रधानं प्रकरणमुपसंहरति' इति भगवत्पादैरभिहितम् । तथा योगाधिकरणेऽपि योगस्मृतिविरोधरूपं स्वपक्षबाधकमुद्धृतम् । न तु तन्मताभिमतानुमानादिदुष्टत्वमुपपादितम् । 'स्वपक्षदोषाच्च' इत्यत्रापि परोपन्यस्तब्रह्मवादविरोधिदूषणानां परपक्षसाधारणतया परैस्तेषां दूषणत्वं नास्तीत्येवाङ्गीकार्यमित्येवाभिप्रायो भाष्ये वर्णितः । न तु परमतानां दुष्टत्वम् । 'एतेन शिष्टापरिग्रहाः' इत्यत्रापि वैशेषिकाद्युक्तानां ब्रह्मवादसाक्षाद्विरोधितर्काणां निरास एव कृतो न तु तदीयस्मृतिमूलत्वाभिमतानुमानदुष्टत्वमुपवर्णितमिति नैतेषां सूत्राणां परम्परया बाधकनिरसनपरे द्वितीयपादे संगतिः ।

यथाऽऽद्यपादेत्यादिकमपि न सत् । कारणगुणाः कार्येषु स्वजातीयगुणमारभन्त इत्यभ्युपगमवादिना जगतश्चेतनब्रह्मकार्यत्वाभ्युपगमे जगतश्चेतनत्वं स्यादित्यापादिते यदि कारणगुणानां सर्वेषामेव नियमेन स्वजातीयगुणारम्भकत्वं तवानुमतं तदा स्वपक्षविप्रतिषेधः, ह्रस्वपरिमण्डलाभ्यां महद्दीर्घयोरुत्पत्तेस्त्वयोपगमेन पारिमाण्डल्यादेः कारणगुणस्य स्वजातीयकार्यगुणारम्भकत्वादिति परपक्षदूषणमुखेनैव स्वपक्षबाधकोद्धारस्य 'महद्दीर्घवद्वा' इति सूत्रेऽभिप्रेततया तत्सूत्रस्य स्वपक्षबाधकोद्धारपरपक्षदूषणोभयरूपतया परपक्षदूषणपराद्द्वितीयपादेऽपि

---

मर्जुनशब्दस्य पूर्वनिपाते कर्तव्ये यतश्च भगवानाचार्यो वासुदेवशब्दस्य पूर्वनिपातं करोति तदेव ज्ञापयति 'सर्वतोऽभ्यर्हितं पूर्वं निपततीति' इति भाष्यकारैरुक्तत्वात्तन्मूलकत्वेन फलितमेतद्भाष्यम् ।

निवेशोपपत्तेः। न चैव तत्सूत्रस्योभयरूपत्वे प्रथमोपस्थितस्वपक्षबाधकोद्धारपरप्रथमपादनिवेशपरित्यागे बीजाभाव इति शङ्क्यम्। स्वातन्त्र्येण वैशेषिकाभिमतस्वपक्षबाधकोद्धारस्य प्रथमपादे कृतत्वेन द्वितीये च स्वातन्त्र्येण तन्मतनिरासस्य प्रस्तुतत्वाच्च तत्रैव तन्निवेशोपपत्तेः। त्वन्मतेऽपि 'भोक्त्रापत्तेः०' (ब्र० सू० २। १। १३) इति सूत्रे 'ननु मुक्तेश्वरयोर्भेदसमर्थनं फलाध्यायसंगतमतो नैव तत्सूत्रार्थः' इत्यादिना 'फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तम्' इति भाष्यप्रवृत्तायैतत्सूत्रस्य फलाध्यायसंगतत्वेऽप्यत्र नासंगतिः। येनान्यर्थकल्पनम्। उक्तरीत्या युक्तिविरोधेऽप्यन्तर्भावात्। अन्यथोभयान्तर्भूतस्यैकत्राप्यनुक्तिप्रसङ्गादित्युभयान्तर्भूतस्यैकत्र निवेशस्वीकाराच्चैतद्दूषणस्य स्वशिरस्ताडनरूपत्वात्।

तृतीयस्य पूर्वभागेऽपीत्यादिकमपि भाष्यादर्शिनां प्रतारणमात्रत्वादसाध्वेव। * 'अन्तरा विज्ञानमसी०' (ब्र०सू०२।३।१५) इत्येतत्सूत्र आत्मनो भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक-

---

* अन्तरा विज्ञानेति। अत्रेदं बोध्यम्—इत आरभ्य भाष्यकृदुक्तमित्यन्ते ग्रन्थे 'सूत्र आत्मनो भूतानाम्' इत्यत्र 'सूत्रात्मकभूतानाम्' इति, 'करणान्यनुक्रम्यन्ते' इत्यत्र ग्रन्थकृच्छुद्धिपत्रकानुरोधेन 'करणान्यनुक्रम्य' इति, 'उत्तक्रमाविरोध' इत्यत्र 'उत्तमविरोध' इति, "तल्लिङ्गादिति चेत्' इत्य" इत्यत्र 'तल्लिङ्गादिति चेत्य' इति, 'नैतयो' इत्यत्र 'तयो' इति, "मृग्यम्' इति 'अ" इत्यत्र 'मृग्य प्रत्य' इति 'भाष्यकृदुक्तमिति' इत्यत्र 'भाष्यकृदुक्तीति' इति तत्र तत्राभूत्। परन्तु 'अन्तरा विज्ञानमनसी०' इत्यत्रत्य भाष्य पर्यालोच्य तदभिप्रायानुरोधेन स्वातन्त्र्येण तथा तथा विन्यासः कृतः। ग्रन्थाभिप्रायस्तु—भाष्यकारादिभिर्यद्वर्णितं द्वितीयस्य तृतीये पादे पूर्वभागे भूतश्रुतिविरोध एव परिहृयत इति तदयुक्तम्। तस्मिन्नेव पादे 'अन्तरा' इति सूत्रे प्राणमनआदिश्रुतिविरोधस्यापि परिहृतत्वादिति चन्द्रिकायां खण्डितम्। तच्चास्मदीयभाष्याभिप्रायाज्ञानाद्वा द्वेषमूलकत्वाद्साधु। तथा हि—'अन्तरा विज्ञानमनसी०' इत्यस्मिन्सूत्रे भूतोत्पत्तिप्रलयक्रमो विषयः। स च क्रमः 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' (तै० २।१।१) इति श्रुत्या 'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते। ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते॥ वायुश्च लीयते व्योम्नि तच्चाव्यक्ते

प्रलीयते । अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते ॥' इति स्मृत्या चानुलोमप्रति-लोमाभ्यां प्रतिपादितः । तत्रायं संशयः—किमयं भूतोत्पत्तिप्रलयक्रमः करण-सृष्टिक्रमेण बाध्यते न वेति । ननु नायं संशयो युक्तः, देहप्रदेशातिरिक्तेन्द्रि-याभावादिति चेत् । न । 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुः' ( का० ३।३ ) इति श्रुतौ 'इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिः' इत्यादिस्मृतौ च सेन्द्रियस्य मनसो बुद्धेश्च सद्भावस्य प्रसिद्धत्वादिति । किं तावत्प्राप्तम् । बाध्यत इति । तथा हि—ननु पूर्वोक्तरीत्या करणानां सत्त्वेऽपि तेषामाहंकारिकत्वात्तदुत्पत्तिक्रमेण कथं भूतोत्प-त्त्यादिक्रमस्य विरोध इति चेत् । उच्यते । तेषामाहंकारिकत्वे मानाभावात्सर्वस्य वस्तुजातस्य ब्रह्मजत्वाभ्युपगमेन च सेन्द्रियस्य मनसो बुद्धेश्चापि कस्मिंश्चिदन्त-राले क्रमेणोत्पत्तिप्रलयावुपसंग्राह्यावेवेति तत्कार्येष्वेव तदौचित्याद्भवति भूतोत्प-त्त्यादिक्रमस्य विरोधः । ननु तथाऽपि भूतोत्पत्त्यनन्तरं तदुत्पत्त्यङ्गीकारे सति न भूतोत्पत्त्यादिक्रमस्य विरोध इति चेत् । नैवम् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' ( मु० २। १ । ३ ) इत्याथर्वणोपनिषद्युत्पत्तिप्रकरणे भूतानामात्मनश्चान्तराले करणान्यनु-क्रम्यन्ते । तस्मात्करणसृष्टिक्रमेण भूतोपत्त्यादिक्रमो बाध्यत इति यदुक्तं तत्स-म्यगेवेति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते—इन्द्रियाणामुत्पत्तिक्रमे भूतोत्प-त्त्यादिक्रमविरुद्धविशेषासिद्धेर्न पूर्वोक्तो विरोधः । तथा हि—किं करणानां भौतिकत्वमाहोस्विदभौतिकत्वम् । आद्ये भूतोत्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत इति न सेन्द्रियस्य मनसो बुद्धेश्च क्रमान्तरं मृग्यम् । तथा च करणानां भौतिकत्वे श्रुतिरपि भवति—'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजो-मयी वाक्' ( छा० ६।५।४ ) इति । ननु करणानां भौतिकत्वे स्वीकृते पूर्वोक्ताथर्वणोपनिषदि कथं पृथक् तज्जन्मकथनम्, भूतजन्मोक्त्यैव तज्जन्म-सिद्धेरिति चेत् । उच्यते । ब्राह्मणपरिव्राजकन्यायेन स्पष्टार्थत्वान्न दोषः । अन्त्ये तु प्रथममात्मनः सकाशात्करणान्युत्पद्यन्ते पश्चाच्च भूतानीति न तदुत्पत्त्योर्विशेषणविशेष्यभावः पूर्वोक्तश्रुत्यभिप्रेतः । किंतु करणानां भूतानां च क्रममात्रं समाम्नाय तयोरुत्पत्तिरुक्ता । सा चोत्पत्तिः केन क्रमेण भवतीति जिज्ञासायाम् 'आत्मन आकाशः संभूतः' इत्यादि श्रुत्यन्तरादेव निर्णयः कार्यः । 'आत्मनः सकाशात्प्रथमं भूतान्येवोत्पद्यन्त इत्येतद्विषये 'प्रजापतिर्वा इदमग्र आसीत्स आत्मानमैक्षत स मनोऽसृजत तन्मन एवाऽऽसीत्तदात्मान-मैक्षत तद्वाचमसृजत' इति श्रुत्यन्तरमपि प्रमाणं भवति । अत्र हि प्रजापति-

माभ्यां भवत इति निरूप्यते "आथर्वणे भूतानामात्मनश्चान्तराले करणान्यनुक्रम्यन्ते—'एतस्माज्जायते प्राण' इत्यादिना, तेषां चोत्पत्तिलयक्रमान्तरान्वेषण उक्तक्रमविरोधः" इति 'अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेत्' इत्यनेनाऽऽक्षिप्य 'यदि तावद्भौतिकानि करणानि ततो भूतोत्पत्तिलयाभ्यामेव तेषामुत्पत्तिलयौ भवत इति नैतयोः क्रमान्तरं मृग्यम्' इति 'अविशेषात्' इति सूत्रभागस्य भाष्ये व्याख्यानात्तत्सूत्रस्य भूतविषयश्रुतिविरोधपरिहाररूपत्वस्यातिस्पष्टत्वात्। तथा च 'तस्मात्पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गो भूतानाम्' इति पूर्वपक्षोपसंहारे 'तस्मान्नास्ति भूतोत्पत्तिक्रमभङ्ग' इति सिद्धान्तोपसंहारे [च] भाष्यकृदुक्तमिति।

चतुर्थेऽपीत्यपि न सत्। भौतिकेतरविषयश्रुतिविरोधपरिहारात्मके तृतीये पादे भौतिकप्राणादिविषयश्रुतिविरोधपरिहारपराणाम् '= तथा प्राणाः' (ब्र० सू० २।४।१) इत्यादीनां निवेशायोगात्। 'उत्पत्तिविषयश्रुतिविप्रतिषेधः प्राणानां परिहृतः, सङ्ख्याविषय इदानीं परिह्रियते' इति 'सप्तगतेर्विशेषितत्वाच्च' इति सूत्रावतरणभाष्यपर्यालोचनया तत्रेन्द्रियविचारस्य कृतत्वेऽपि पादद्वय इन्द्रियविचारस्य विषयभेदो बालेनापि सुबोध एव।

---

नाम सर्वभूतसूक्ष्मात्मकः सूत्रात्मा। इदं नाम स्थूलकार्यम्। अग्रशब्देन च तदुत्पत्तेः प्राक्काल उच्यते। एवं च प्रजापतिसृष्टिवचनाद्भूतसृष्टिप्राथम्यम्, ततश्च मनआदिसृष्टिरुक्तेति करणसृष्टेः पाश्चात्यत्वं सिध्यति। तस्मात्करणोत्पत्तिक्रमेण भूतोत्पत्तिक्रमो न बाध्यत इति सिद्धम्। तथा चात्र भूतोत्पत्तिक्रमविरोधपरिहार एव प्राधान्येन भाष्यकृतोऽभिप्रेत, न तु प्राणमनआदिविषयश्रुतिविरोधपरिहारः प्राधान्येन। नान्तरीयकतया तद्विचारोऽपि जात इत्यन्यदेतत्। नैतावता तद्विचारस्य प्राधान्यमिति वक्तुं पार्यत इति।

= तथा प्राणा इति। अत्रापि 'अत एव प्राण' इति मूलमासीत्। परन्तु पूर्वोक्तचन्द्रिकानुवादग्रन्थे 'तथा प्राणाः' 'सप्तगतेर्विशेषितत्वाच्च' 'अणवश्च' इति सूत्रत्रयस्य निर्दिष्टत्वादत्रापि तदनुरोधेनात्रत्यग्रन्थाभिप्रायेण च तथैवौचित्यात् 'तथा प्राणा' इत्येव ग्रन्थे निक्षिप्तमिति बोध्यम्।

चतुर्थेऽपीत्याद्यपि न युक्तम् । 'संज्ञामूर्ति०' इत्यत्र 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' (छा० ६।३।२) इत्यादिवचनानुसारेण जीवस्यैव भौतिकनामरूपस्रष्टृत्व*मवगम्यते । 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते' इत्यत्र तु परमेश्वरस्येति भौतिकनामरूपविषयश्रुतिविरोधस्यैव निराकृतत्वेन चतुर्थपादोपाधिनियमात्यागस्यातिस्पष्टत्वात् ।

---

* मवगम्यत इति । अयमाशय —सत्प्रकरणे 'तत्तेज ऐक्षत' इत्यादिना सदर्भेण तेजोबन्नाना सृष्टिं विधायोपदिष्टम्—'सेय देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति । तासा त्रिवृत त्रिवृतमेकैका करवाणीति' इति । तत्र सशय. । किं जीवकर्तृकमिद नामरूपव्याकरणमथवा परमेश्वरकर्तृकमिति । किं तावत्प्राप्तम् । जीवकर्तृकमेवेद नामरूपव्याकरणमिति । कुत इति चेत् । यथा 'चारेणाह परसैन्यमनुप्रविश्य सकलयानि' इत्याकारके लौकिके प्रयोगे चारकर्तृकमेव सैन्यसकलन हेतुकर्तृत्वाद्राजा स्वात्मन्यध्यारोपयति 'अह सकलयानि' इति तथा जीवकर्तृकमेव नामरूपव्याकरण हेतुकर्तृत्वाद्देवता स्वात्मन्यध्यारोपयति 'व्याकरवाणि' इति । किंच डित्थादिसज्ञासु घटशरावाद्याकारेषु च जीवस्यैव कर्तृत्व लोके दृश्यते, न तु ईश्वरस्य । तस्माज्जीवकर्तृकमेवेद सर्वं नामरूपव्याकरणमिति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयते—"अग्न्यादित्यादिभौतिकनामरूपव्याकरण पक्षीकृत्य परमेश्वरकर्तृकत्व साध्यते 'सेय देवतैक्षत' इत्युपक्रम्य 'व्याकरवाणि' इति श्रुत्युपदिष्टत्वात्तेजोबन्ननिर्माणवत्" इत्यनुमानेन परमेश्वरकर्तृकमेव भौतिकनामरूपव्याकरण सिध्यति । ननु "निरुक्तव्याकरण पक्षीकृत्य जीवकर्तृकत्व साध्यते 'जीवेन' इतिविशेषणविशिष्टपूर्वोक्तश्रुत्युपदिष्टत्वाद्घटशरावादिव्याकरणवत्" इत्यनुमानेन सत्प्रतिपक्षस्य जागरूकत्वात्परमेश्वरकर्तृकत्व न सिध्यतीति चेत् । मैवम् । 'जीवेन' इत्यस्य 'अनुप्रविश्य' इत्यनेनैव सबन्ध. । आनन्तर्यात् । न तु 'व्याकरवाणि' इत्येनेन व्यवहितेन सह तदन्वय । ननु जीवेनेत्युपसर्जनस्य प्रविश्येत्युपसर्जनेन सहान्वयो नोचित, किंतु प्रधानेन व्याकरवाणीत्यनेनैव सहोचित इति चेत् । सत्यम् । तथाऽपि व्याकरवाणीत्युत्तमपुरुषस्यौपचारिकत्वापत्ते. । न हि गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेष्वनीश्वरस्य व्याकरणसामर्थ्यमस्ति । येन तत्कर्तृकत्व कल्प्येतेति । एव च भौतिकनामरूपस्र-

तृतीयचतुर्थयोरप्याद्यवत्स्वपक्षाविरोधपरिहाररूपत्वादाद्यानन्तर्यं स्यात् । द्वितीयस्य तु परपक्षदूषणरूपत्वादन्त्यता स्यादिति दूषणं तु प्राङ् निरस्तमेवेति दिक् ।

आनन्दतीर्थीयास्तु—प्रथमे युक्त्यविरोधो द्वितीये समयाविरोधस्तृतीये केवलश्रुत्यविरोधश्चतुर्थे सयुक्तिकश्रुत्यविरोध + इत्याहुः । तदसत् । अलौकिकार्थगोचरबहुजनपरिगृहीतवाक्यसंदर्भरूपसमयत्वस्य त्वदीयचन्द्रिकाकारोक्तस्मृतिसाधारणतया स्मृतीना समयरूपताभिप्रायेणैव स्मृत्यधिकरणे समयविगान संदेहबीज-

---

स्रष्टृत्व जीवस्येति पूर्वपक्षीकृत्य परमेश्वरस्य तत्स्रष्टृत्वमिति सिद्धान्तितत्वाच्छ्रौतिकेन्द्रियादिश्रुतिविरोधपरिहाररूपचतुर्थपादोपाधिनियमत्यागाभावस्यातिस्पष्टत्व बोध्यम् । ननु नैतावता रत्नप्रभोक्तलिङ्गशरीरश्रुतिविरोधपरिहाररूपोपाधित्याग परिहृतो भवतीति चेत् । अत्रोच्यते । लिङ्गशरीरस्यापि भौतिकत्वेन निरुक्तशङ्काया भ्रममूलकत्व सिध्यति । अत एवोच्यते—पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थ सूक्ष्माङ्ग भोगसाधनम् ॥ इति । अत एव रत्नप्रभायामेव चतुर्थपादादौ 'भूतभोक्तृविचारानन्तर भौतिकप्राणविचार.' इत्युक्तम् । एव च न कश्चिद्दोष इति ।

+ इत्याहुरिति । तथा चोच्यते तत्त्वप्रकाशिकायाम्—'उक्तेऽर्थे विरोधश्चतुर्विध स्फुरति । युक्ति–समय–श्रुति–न्यायोपेतश्रुति–विरोधभेदात्' इति । चन्द्रिकायामप्येवमेवोक्तम् । अत्र च प्रमाणमानन्दतीर्थीय भाष्यमेव । तथा च द्वितीयाध्याये प्रथमपादादौ 'प्रथमपादे युक्त्यविरोधम्' इति, द्वितीयपादादौ 'इतरेषा चानुपलब्धे' इति सामान्यतो निराकरण समयाना कृतम् । 'विशेषतो निराकरोत्यस्मिन्पादे' इति, तृतीयपादादौ 'जीवपरमात्माधिभूताधिदैवेषु श्रुतीना परस्परविरोधमपाकरोत्यनेन पादेन' इति, चतुर्थपादादौ च 'युक्तिसहितश्रुतिविरोध श्रुतीनामपाकरोत्यनेन पादेन' इत्युक्त तत्र । अत्रेद बोध्यम्—समया द्विविधा । हैतुकपाषण्डभेदात् । तत्र वेदवादिना समया हैतुका इत्युच्यन्ते । वेदबाहिर्भूताना समया. पाषण्डा इत्युच्यन्ते । तथा चोच्यते—अक्षपादकणादौ च साङ्ख्ययोगौ च हैतुकाः । बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः ॥ समयस्वरूप त्वलौकिकार्थगोचरबहुजनपरिगृहीतवाक्यसंदर्भरूपमेवेति ।

मिति तत्त्वप्रकाशिकाया जयतीर्थोक्त्या च स्मृतीनां समय*बहिर्भावायोगेन स्मृत्यविरोधस्य समयपाद एव सगते. । स्मृतीनां +युक्त्यादिरूपत्वेनेति जयतीर्थोक्तेः स्मृतीनामिव समयानामपि युक्तिरूपत्वाविशेषात्समयविरोधस्यापि स्मृतिविरोधवदाद्यपादे निरसनौचित्यात् । समयानामपि स्मृतिविशेषरूपतया स्मृतिविरोधपरिहारेण समयाविरोधस्याप्युक्तानुपाब्ध्या ( × उक्तानुपलब्ध्या ) 'इतरेषां च' ( ब्र० सू० २।१।२ ) इत्यत्र कृतत्वेन तदर्थं द्वितीयपादानपेक्षणाच्च । न च तत्र सामान्यतो निराकृतानामत्र विशेषतो निराकरणादिति जयतीर्थोक्तिरपि साधीयसी । विशेषतो निराकरणस्य समयेष्विव स्मृतिष्वपि

* बहिर्भावायोगेनेति । अत्र णत्वं न भवति 'पदव्यवायेऽपि' ( पा० सू० ८।४।३८ ) इति निषेधात् । यथा 'चतुरङ्गयोगेन' इत्यत्र न भवति तद्वत् । अत्राय विचार.—'चत्वारि अङ्गानि यस्य चतुरङ्गम् । तेन योग' इति यथा मनोरमायां विगृहीत तद्वदेव प्रकृतेऽपि 'बहिर्भावो बहिर्भाव, समयाद्बहिर्भाव समयबहिर्भाव, तस्यायोग' इति विग्रहो बोध्य । ननु मनोरमोक्तो विग्रहोऽयुक्त । तथा हि सति 'उत्तरपदत्वे चापदादिविधौ प्रतिषेध' इति प्रत्ययलक्षणप्रतिषेधादङ्गशब्दस्य पदत्वाभावादुक्तस्य णत्वप्रतिषेधस्याप्राप्ति । तस्मात् 'अङ्गानां योगोऽङ्गयोगश्चतुर्णामङ्गयोग.' इत्येव विग्रह उचित इति चेत् । मैवम् । प्रत्ययमस्योत्तरपदस्य कार्यित्व एव तत्प्रवृत्ते । एवं च न कश्चिद्दोष इति मनोरमोक्तो विग्रह एव युक्ततर इति ।

+ युक्त्यादीति । आदिपदेन समयस्य ग्रहणम् । तथा च तत्त्वप्रकाशिकायाम् 'स्मृतीनां युक्तिसमयादिरूपत्वेन' इति स्पष्टमेवोपलभ्यते ।

× उक्तानुपलब्ध्येति । यद्यपि मूले 'उक्तानुपाब्ध्या' इत्युपलभ्यते तथाऽपि 'इतरेषां चानुपलब्धे.' इति सूत्रानुरोधेन, 'इतरेषां तासु स्मृतिषूक्तानां फलादीनां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यं तासां युक्तम्' इत्यानन्दतीर्थीयभाष्यानुरोधेन, तथा 'तासु स्मृतिषूक्तानामदृष्टादितरेषां फलानर्थानामुक्तानुष्ठानपरित्यागयो कृतयोरपि प्रत्यक्षतोऽनुपलब्धेरालोकवानिश्चयादिति भाव.' इति तत्त्वप्रकाशिकानुरोधेन च 'उक्तानुपलब्ध्या' इत्येवोचितमिति बोध्यम् ।

तुल्यतया द्वितीयपादे स्मृत्यविरोध एवोपवर्णित इत्यस्यापि वक्तुं युक्तत्वात् ।

यत्तु चन्द्रिकायाम्—स्मृत्यविरोधपराधिकरणस्य युक्तिपादे निवेशानुपपत्तिमाशङ्क्य* पाशुपतादिस्मृतीनां समयरूपत्वेन स्वोक्तार्थे संमतित्वेन श्रुतियुक्तिकथनेन च चतुःस्वरूपत्वात्तद्विरोधस्यैकैकविरोधप्रतिपादके पादविशेषेनन्तर्भावेऽप्यविरोधाध्यायान्तर्भावेण[2] क्वचिन्निवेशे कर्तव्ये प्रथमं तदतिक्रमे हेत्वभावाच्चतुरात्मकतया प्रबलतया च प्रथमं निरसनीयत्वाच्चाध्यायादावेव निवेश इति समाहितम् । तदसत् । 'अतोऽवैदिकस्मृतीनामप्रमाणत्वान्न श्रुत्युक्तजगत्कारणत्वस्य तद्विरोधः' इति जयतीर्थोक्तेः काणादबौद्धार्हतादिस्मृत्यवलम्बिपूर्वपक्षाणां स्मृत्यधिकरण एव चन्द्रिकायां प्रदर्शितत्वाच्चावैदिकस्मृतिमात्रविरोधपरिहारस्य त्वदभिमतत्वेन साङ्ख्यपाशुपतादिचतूरूपाणामेव समयानामाद्ये निरास इति निर्बन्धस्य वक्तुमशक्यत्वात्= ।

---

* माशङ्क्येति । तथा च चन्द्रिका—'न च स्मृत्यविरोधस्य युक्तिपादे कथं निवेश इति वाच्यम्' इति ।

= मशक्यत्वादिति । अयं भावः—युक्तिपादे स्मृत्यविरोधस्यायुक्तत्वशङ्कायां पाशुपतादिस्मृतीनां चतुःस्वरूपत्ववर्णनेनैकैकाविरोधपरेषु चतुर्ष्वपि पादेष्वनन्तर्भावे प्राप्ते कुत्रचिन्निवेशस्याऽऽवश्यकत्वेन प्रथमातिक्रमे मानाभावेन चाऽऽदावेव तन्निवेश उचित इत्युक्तं चन्द्रिकाकारैः । परंतु तन्न युक्तम् । यदि हि युक्तिपादे पूर्वोक्तरीत्या चतूरूपाणामेव निवेश इति निर्बन्धः स्यात्तर्हि स्मृत्यधिकरणसमाप्तौ 'अतोऽवैदिकस्मृतीनामप्रमाणत्वान्न श्रुत्युक्तस्य विष्णोर्जगत्कारणत्वस्य तद्विरोध इति सिद्धम्' इति तत्त्वप्रकाशिकाराः न ब्रूयुः । तथा चन्द्रिकायामपि 'यद्वा कणादादिस्मृतेः स्पष्टार्थत्वं सयुक्तिकत्वं च तत्र बीजमिति तेऽपि पूर्वपक्षिणः । अस्मिंश्च पक्षे सुधास्थादिशब्दः कणादादिपरः । बौद्धादिमते त्वाप्तप्रणीतबौद्धाद्यागमविरोधादनाप्तप्रणीतो वेदोऽप्रमाणमित्येव पूर्वः पक्षः' इत्यपि स्वयं न वक्तव्यम् । यतश्चोभयत्र तथोपलभ्यते । तस्माद्

---

१ चतुरू' । २ क 'वेणाध्यायस्याऽऽद्यावन्ते वा निवे' । ३ क 'प्रमाति' । ४ क. 'कत्वेन प्र' । ५ क 'वेशाद् ।

किंचाभिमान्यधिकरणे 'मृदब्रवीत्' (ब्र० १० आ०) 'अथ ह चेतनाश्चाचेतनाश्च तेजोबन्नांग्याकाश इति तान्यचेतनानि वायुर्वाव चेतनः' इति श्रुत्योर्विरोधस्यासदधिकरणे 'असदेवेदमग्र आसीत्' 'सदेव सोम्येदमग्र आसीत्' (छा० ६ । २ । १) इति श्रुत्योर्विगानस्य, एतेन शिष्टापरिग्रहाः' (ब्र० सू० २ । १ । १२) इत्यत्र 'अकस्माद्धीदमाविरासीदकस्मात्तिष्ठति' इति 'एतस्माज्जायते प्राणः' इत्यादिश्रुतीनाम् 'भोक्त्रापत्ते०(ब्र० सू० २ । १ । १३) इत्यत्र 'परेऽव्यये सर्व एकी भवन्ति' इत्यैक्यश्रुतिभेदश्रुत्यो 'इतरव्यपदेशात्' (ब्र० सू० २ । १ । २१) इत्यत्र जीवकर्तृताबोधकश्रुतेः 'एको ह वै नारायणः' इत्यादिश्रुतीनां च परस्परविरोधनिरासकत्वसंभवे प्रबलाया श्रुतेरुपसर्जनत्व परिकल्प्य—मृन्न वदति जडत्वात्, कारण प्रलयेऽसद्भवितुमर्हति वस्तुत्वात्कार्यवत्, विप्रतिपन्नं निष्कारणमचेतनकारण जीवकारण वा कार्यत्वात्कूलपतनदध्यादिवत्, विष्णुर्न जगत्कर्ता जीवाभिन्नत्वादित्यादियुक्तिविरोधपरिहारताकल्पनेनाऽऽद्यपादान्तर्भावोक्तिः*रनुचितैव ।

---

वैदिकस्मृतिमात्रविरोधपरिहार एव त्वदभिप्रेत । एव च चतूरूपाणामेवाऽऽद्ये निवेश इति निर्बन्धस्य वक्तुमशक्यत्वेन चतु स्वरूपत्वात्पाशुपतादिस्मृतीनां निवेश इति वर्णनमयुक्तम् । न हि बौद्धार्हतादिस्मृतीना युक्तिसमयश्रुतिन्यायोपेतश्रुतिरूपचतुःस्वरूपत्व वक्तु पार्यते । येन तासामाद्यपादे निवेशस्यौचित्य स्यादिति ।

* रनुचितैवेति । अयमाशय —'अभिमानी०' (ब्र० सू० २ । १ । ६) इत्यत्राऽऽनन्दतीर्थीयैरेवमुच्यते—वेदप्रामाण्यात्सर्वकारणत्व विष्णोः साधितम् । परतु वेदप्रामाण्यस्य युक्तिविरोधे सति न विष्णोर्जगत्कारणत्व सिध्यति । असौ विरोध परिहरणीय एवेति स वेदोऽस्याधिकरणस्य विषय । तस्य च वेदस्य प्रामाण्य न वेति सशय । किं तावत्प्राप्तम् । न वेद प्रमाणमिति । कुत इति चेत् । उच्यते—'मृदब्रवीत्' 'आपोऽब्रुवन्' 'ता आप ऐक्षन्त' 'तत्तेज ऐक्षत' ओषधय सवदन्ते' इत्यादिश्रुतिषु मृदादीनाम-

---

१ क 'भाराशा इ० ।

चेतनाना भाषणदर्शनादिकर्तृत्वस्य प्रतिपादनेन युक्तिविरुद्धत्वात्तासामप्रामाण्य सिध्यति। युक्तिश्च 'मृन्न वक्ति जडत्वात्' इत्याद्यनुमानरूपा । एव च युक्तिविरुद्धत्वात्पूर्वोक्ताना वेदैकदेशभूतानामप्रामाण्ये सिद्धे सर्वस्यापि वेदस्याप्रामाण्यात्तत्प्रामाण्येन विष्णो सर्वकारणत्व साधयितु न शक्यत इति पूर्वपक्षे प्राप्ते सिद्धान्त--भवेदय पूर्वपक्ष । यदि ह्यचेतनानामेव मृदादीना भाषणादिकर्तृत्व स्यात् । न चैतदस्ति । मृदाद्यभिमानिनीनां चेतनाना देवतानामेव तत्कर्तृत्वस्येष्टत्वेन वेदैकदेशस्य युक्तिविरुद्धत्वाभावेनाप्रामाण्याभावात्सर्वस्य वेदस्य प्रामाण्येन तन्मूलक विष्णो सर्वकारणत्वमक्षतमेवेति । 'असदिति चेन्न०' इत्यत्र च–जगत्कारणत्व हरेरुक्तम् । तस्य युक्तिविरुद्धत्वे लक्षणत्वासभवात्स विरोधो निराकर्तव्य एवेति जगत्कारणत्वमेवैतदधिकरणस्य विषय । तद्विष्णोर्युक्त न वेति सशयोऽत्र। अत्र बीज तु तद्विरुद्धप्रतिपादकश्रुतिरेव । पूर्वपक्षस्तु–जगत्कारणत्व विष्णोर्न युक्तम् । प्रमाणाभावात् । किंत्वसदेव जगत्कारणम् । न च 'यतो वा इमानि भूतानि जायन्ते' इत्यादि श्रुति प्रमाणमिति वाच्यम् । 'असदेवेदमग्र आसीत्' इत्यादिश्रुत्याऽसतोऽपि कारणत्वोक्ते । न च परस्परश्रुतिविरोधादुभयोरपि न तद्युक्तमिति वाच्यम् । असत्कारणवादस्य सयुक्तिकत्वेन बलीयस्त्वात् । युक्तिश्च 'कारण प्रलयेऽसद्भवितुमर्हति वस्तुत्वात्कार्यवत्' इत्याद्यनुमानरूपैव । एव च जगत्कारणत्व विष्णोर्लक्षणमिति यदुक्त तद्दुष्टमेवेति बोध्यमिति । सिद्धान्तस्तु—युक्तमेव विष्णोर्जगत्कारणत्व न त्वसत । तस्य स्वरूपत एव प्रतिषेधबुद्धिविषयत्वात् । नहि शशविषाणादीना यत्कि[किंचि]न्निरूपित कारणत्व सभवति। तथा च विष्णोरेव जगत्कारणत्वमिति । 'एतेन शिष्टा०' इत्यत्र च–मास्त्वसत्कारण जगतस्तथाऽपि न विष्णोर्जगत्कारणत्व सभवति । 'विप्रतिपन्न जगत्पक्षीकृत्य निष्कारणत्व वाऽचेतन कारणकत्व वा जीवकारणकत्व साध्यते कार्यत्वाद्धेतो कूलपतनदध्यादिवत्' इति निष्कारणत्वादिसाधकानुमानरूपयुक्तिविरोधात् । न च निर्मूलयुक्तेरसाधकत्वमिति वाच्यम् । 'अकस्माद्धीदमाविरासीत्' इतिश्रुतिमूलकत्वेन युक्तेर्बलीयस्त्वात् । एव च न विष्णोर्जगत्कारणत्वमिति प्राप्ते ब्रूम –सत्कारणत्वादौ लोके दृष्टान्तस्य प्रसिद्धत्वान्निष्कारणत्वादौ तु क्वापि दृष्टान्ताभावेन विष्णुरेव जगत्कारणमिति पर्यवसन्नम् । न च कूलपतनादिदृष्टान्तो युक्त इति वाच्यम् । कूलपतनादीनामपि निष्कारणत्वस्य केषाचिदपि समतत्वाभावादिति । 'भोक्त्रापत्तेः०' इत्यत्र च—विष्णोर्जगत्कर्तृत्वादि यत्पूर्वमभिहित तस्य युक्तिविरुद्धत्वेन लक्षणत्वासभव. । अत. स परिहरणीय । तथा च जग-

ज्जन्मादिकर्तृत्वं विषयः । तत्र संशयः—किं तत्परमात्मनो युक्तं न वेति । कुतः संदेहः । वादिविवादात् । किं तावत्प्राप्तम् । जगत्कारणत्वं परमात्मनो न युक्तमिति । कुत इति चेत् । उच्यते—‘परेऽव्यये सर्व एकी भवन्ति ’ इति श्रुत्या मुक्तजीवस्य परापत्तिरुच्यते । अतस्तयोरविभागः । तस्मात्पूर्वमपि तयोरविभाग एव । नह्यन्यस्यान्यत्वं युज्यते । तथा च प्रयोगः—‘ विष्णुं पक्षीकृत्य जगत्कर्तृत्वाभावः साध्यते जीवाभिन्नत्वात् ’ इति । न हि जीवाभिन्नस्य परमेश्वरस्य जगत्कर्तृत्वं युज्यते । अनुभवविरोधात् । जीवाभेदस्तूभयगतविरुद्धधर्मत्यागेन जीवस्येश्वरसालक्षण्यग्रहणेनेश्वरस्य च जीवसालक्षण्यग्रहणेन वा संभवति । उक्तश्रुत्यनुरोधात् । तथा च न विष्णोर्जगत्कर्तृत्वमिति पूर्वपक्षे प्राप्ते सिद्धान्तः—जीवेश्वरयोरभेदाभावान्नेश्वरस्य जगत्कारणत्वादि विरुद्धम् । ऐक्येनोक्तत्वान्मुक्तजीवस्य परमात्मभिन्नत्वेन विरुद्धत्वासिद्धिरिति न भ्रमितव्यम् । ‘ यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ’ इति श्रुत्यनुरोधेन तथैव च लोके दृष्टत्वेन जीवपरमेश्वरयोरैक्योपपत्तेः । एवं च यथा जलैकीभावोक्तिः स्थानैक्याद्यालम्बनत्वेनौपचारिकी तथैव जीवपरयोरैक्योक्तिरिति तात्पर्यमिति बोध्यमिति । ‘ इतरव्यपदेशात् ’ इत्यत्र च—विष्णोर्जगत्स्रष्टृत्वादिकं पूर्वमुक्तम् । तस्य च जीवकर्तृत्वसाधकयुक्तिविरोधे लक्षणत्वायोगात्स निराकार्य एवेति तज्जगत्कर्तृत्वादि विषयः । तत्र संशयः—तत्किं विष्णोर्युक्तं न वेति । किमत्र युक्तम् । न विष्णोर्जगत्कर्तृत्वं किंतु जीवस्यैवेति । कुत इति चेत् । उच्यते—लोके हि जीवस्यैव कर्तृत्वमनुभूयते । स हि यत्कार्यमारभते तत्समापयतीति प्रसिद्धम् । न चायमनुभवो भ्रान्तिमूलक इति वाच्यम् । बाधकाभावात् । न च यज्जीवस्य कर्तृत्वमनुभूयते तदीश्वरप्रेरितमेवेति वाच्यम् । कल्पनागौरवापत्तेः । तथा हि—ईश्वरस्तावदनुपलभ्यमानत्वान्नास्त्येव । स च कल्पनीयः । ततश्च तस्य जीवप्रेरकत्वमप्रामाणिकं कल्पनीयम् । अतो गौरवम् । जीवस्यैव स्वतन्त्रकर्तृत्वाङ्गीकारे तु लाघवं स्पष्टमेव । तथा च श्रुतिः—‘जीवाद्भवन्ति भूतानि ’ इति । एवं च परिदृश्यमानकार्याणां स्वतन्त्रजीवकर्तृत्वे समस्तजगतोऽपि तथात्वं सिध्यतीति पूर्वपक्षे प्राप्ते सिद्धान्तः—यदि पूर्वोक्तश्रुत्यनुरोधाज्जीव एव स्वतन्त्रः कर्तेत्युच्यते तर्हि तस्य हिताकरणमहितकरणं च न स्यात् । न हि स्वतन्त्रस्य ते संभवतः । अनुभूयेते च ते जीवे । अतोऽसौ न स्वतन्त्रः कर्ता । किंतु परमेश्वर एवेति । एतच्च न युक्तम् । कुत इति चेत् । उच्यते—‘एतेन मातरिश्वा०’ ( ब्र० सू० २।३।८ ) इत्यत्र ‘ अथ ह

एवं केवलश्रुतिविरोधपरिहारपरतृतीयपादे—( १ ) वियद्‌धिकरणे 'आत्मन आकाशः सम्भूतः' 'अनादिर्वाऽयमाकाशः' इति श्रुत्योर्विरोधपरिहारपरे 'आकाशस्योत्पत्तिमत्त्वाङ्गीकारेऽनुभूतियुक्तिबहुवाक्यविरोधात्' इत्यादिना 'वियदनुत्पत्तिमद्धि-

---

चेतनाश्चाचेतनश्च तेजोबन्नान्याकाश इति तान्यचेतनानि वायुर्वाव चेतन' इत्यादिश्रुतौ 'सा वा एषा देवताऽनादिर्योऽयं पवते' इत्युक्तत्वेन वायोरनुत्पत्तिं पूर्वपक्षीकृत्य 'प्राणाद्वायुरजायत' इत्यत्रोत्पन्नत्वेन श्रुतत्वादुत्पत्तिश्रुतेश्च शरीरविषयत्वेन व्यवस्थोपपत्त्या च विरोध परिहृत । एव च पूर्वोक्तश्रुतौ 'तेजोबन्नानि' इत्यन्नपदेन पृथिव्या अचेतनत्व स्पष्टमेवोक्तमिति 'मृदब्रवीत्' इत्यादिश्रुत्या सह विरोध प्राप्त । सोऽपि तत्र परिहृतप्राय एव। 'प्रतिज्ञाहानि०' ( ब्र० सू० २।३।६ ) इत्यत्र च—यदि ब्रह्माकाशयोरुभयोरप्यनुत्पत्तिमदाकाशशब्दो मुख्योऽङ्गी क्रियते तर्हि 'ब्रह्मेद सर्वमसृजत' इति प्रतिज्ञाविरोध स्यात्। अतो ब्रह्मण्येव मुख्योऽनुत्पत्तिमच्छब्दोऽन्यत्रामुख्यः । ननु तथाऽप्यत्राकाशब्रह्मणो सादित्वानादित्वे स्फुट न प्रतीयेते इति चेत् । न । 'आत्मा वा इदमेक आसीत्' 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिषु ब्रह्मण एवानादित्वस्य प्रतीतत्वादित्युक्तम् । एव च 'असदेवेदमग्र आसीत्' इत्यनेन सह प्राप्तस्य विरोधस्य परिहृतप्रायत्वमेव । 'आप' ( ब्र० सू० २ । ३ । ११ ) इत्यत्र च—'अग्नेराप' इत्युक्तत्वेन किं तेजस सकाशादापो जायन्त उत सकलकारणत्वेन निर्णीताद्ब्रह्मण सकाशाज्जायन्त इति सदिह्य 'ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत' 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिराप पृथिवी विश्वस्य धारिणी ॥' इत्यादिश्रुतिषु ब्रह्मण सकाशादेव सर्वेषामुत्पत्ते प्रतीतत्वादुक्तश्रुतेरपि तदनुरोधेनैव व्याख्यानमुचितमित्युक्तम् । एव च 'अकस्माद्धीदमाविरासीत्' इत्यनयाऽपि श्रुत्या सह प्राप्तोऽपि विरोध परिहृतप्राय एव । तथा चानया रीत्या तत्र तत्र श्रुतीना परस्परविरोधनिरासकत्वे सम्भवति सति प्रबलाया श्रुतेर्युक्तिनिष्ठविशेष्यतानिरूपितप्रकारतापन्नत्वरूपोपसर्जनत्व परिकल्प्य पूर्वोक्तयुक्तिविरोधपरिहारताकल्पनेनाऽऽद्ये पादे निरुक्तश्रुतीनामन्तर्भावोक्तिरनुचितैवेति।

---

१ 'वाग्विरो' ।

भुत्वात्' इति युक्ते×जयतीर्थोपदर्शिताया: श्रुतेर्वियदनादित्व *साधिकाया:, (२) 'एतेन मातरिश्वा व्याख्यात:' (ब्र० सू० (२।३।८) इति द्वितीयाधिकरणे 'तासां वायुर्वत्स.' सा वा एषा देवताऽनादिर्योऽयं पवते' इति श्रुत्योर्विरोधनिरासपरे सर्वदेवतोपास्यता च नोत्पत्तिमत्त्वे

---

× जयतीर्थोपदर्शिताया इति । न वियदश्रुते' (ब्र० सू० २।३-१) इत्यधिकरणे जयतीर्थेन तत्त्वप्रकाशिकायामेवमुक्तम्—सकलजगज्जन्मादिकर्ता विष्णुरित्युक्तम् । तच्चाऽऽकाशस्य नित्यत्वेऽसम्भवि स्यात् । अत श्रुत्यविरोधेनाऽऽकाशस्योत्पत्ति. समर्थनीया । एव चाऽऽकाशोऽत्र विषय । तत्र सशय:—उत्पत्तिमान्न वेति । कुत सदेह । 'आत्मन आकाश सभूत' 'अनादिर्वाऽयमाकाश' इति परस्परविरुद्धश्रुतिद्वयसत्त्वात् । किमत्राऽऽयुष्मताऽभिप्रेयते । वियदनुत्पत्तिमदेवेति । कुत इति चेत् । आकाशस्योत्पत्तिमत्त्वाङ्गीकारेऽनुभूतियुक्तिबहुवाग्विरोधात् । तथा हि—आकाशस्योत्पत्तिर्हि नानुभवानुसारिणी । तथा 'वियत्पक्षीकृत्यानुत्पत्तिमत्त्व साध्यते विभुत्वात्' इत्यनुमानरूपा युक्तिश्च विरुद्धा । किंच 'अनादिर्वाऽयमाकाश' इत्यादिबहुश्रुतिविरोध । न च 'आत्मन आकाश सभूत' इति श्रुत्या तदुत्पत्तिसिद्धिरिति वाच्यम् । अनुभूत्यादिविरुद्धायास्तस्या प्रामाण्यानुपपत्ते । तस्माद्वियदनुत्पत्तिमदेवेति पूर्वपक्षे प्राप्ते सिद्धान्त —यदुक्त वियदनुत्पत्तिमदिति । तन्न युक्तम् । अनुत्पत्तिप्रतिपादकश्रुतेरभावात् । न च 'अनादिर्वाऽयमाकाश शून्योऽलौकिक.' इति श्रुति प्रमाणमिति वाच्यम् । तस्या गौणानादित्वपरत्वात् । तथा हि—आकाशपदेन भूताकाशतद्देवता उच्यते । तत्र भूत स्वरूपत एवोत्पत्तिमद्रूपित्वात् । 'आकाशे नीलिमोदेति' इति श्रुत्या भूताकाशस्य रूपित्व बोध्यम् । तदभिमानिनोऽपि शरीरोत्पत्तिद्वाराऽस्त्येवोत्पत्ति । अत्राकाशतदभिमानिनोरप्यस्ति पराधीनविशेषलाभलक्षणोत्पत्ति. । एव च सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्था । अनादित्वश्रुतिस्तु न सर्वविषयेति भवति गौणी । भूते कथमपि तदवृत्ते । एव च वियदुत्पत्तिमदिति 'आत्मन आकाश. संभूत' इति श्रुत्या सिध्यतीति ।

* साधिकाया इति । अस्मिन्प्रकरणे 'युक्ते' 'युक्ते.' इति षष्ठ्यन्तानाम् 'आभास एव च' इत्यधिकरणखण्डनसमाप्तौ विद्यमानेन 'सत्त्वेन' इत्यनेन दूरस्थेन सहान्वयो बोध्य. ।

घटन इत्यादिनोपदर्शिताया सर्वदेवतोपास्यत्वातिशयित * चेतनत्वयुक्तेस्तदनादित्वसाधिकाया', ( ३ ) 'असम्भवस्तु सतोऽनुपपत्तेः' ( ब्र० सू० २ । ३ । ९ ) इत्यधिकरणे 'असतः सदजायत' 'सदेव सौम्येदमग्र आसीत्' इतिश्रुति-

---

* चेतनत्वयुक्तेरिति । अय भाव—सर्वोत्पादको हरिरित्यभिहितम् । परन्तु मुख्यवायोरुत्पत्त्यनङ्गीकारे तन्न सगच्छेत । अतस्तदुत्पत्ति समर्थनीया । एवं च मुख्यवायुर्विषयोऽत्र । तत्र सदेह । उत्पत्तिमान्न वेति । कुतः सदेह । 'तासां वायुर्वत्स' 'सा वा एषा देवताऽनादिर्योऽय पवते' इति श्रुतिद्वये परस्परविरुद्धार्थप्रतिपादनात् । किं तावद्युक्तम् । वायोरनुत्पत्तिरेव युक्ता । कुत इति चेत् । उच्यते—'वायुर्वाव नित्यो वायुना हि सर्वाणि भूतानि नीयन्ते' 'सा वा एषा देवताऽनादि' इत्यादिश्रुतीनामेव प्रमाणत्वात् । न चाऽऽकाशानुत्पत्तिश्रुतिवद्गौणार्थत्वमेवोक्तश्रुतीनामिति वाच्यम् । तथा सत्याकाशादिवन्मुख्यवायोरप्युत्पत्तिमत्त्वेन नित्यत्वाभावात् । 'तेजोबन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्य' इति श्रुतौ तेजोबन्नाकाशानामनित्यत्वमुक्त्वा वायोर्यन्नित्यत्वमुक्त तद्विरुध्येत । किंच यदि वायोरनुत्पत्तिर्गौणी तर्हि स्वरूपमात्रविषयेत्यवश्य वक्तव्यम् । तथा सति तस्य सर्वचेतनसाम्येन 'अथ ह चेतनाश्चाचेतनाश्च तेजोबन्नान्याकाश इति तान्यचेतनानि वायुर्वाव चेतन' इति श्रुतौ वायोरतिशयितचेतनत्व यदुक्त तद्विरुध्येत । किंचोत्पत्तिमत्त्वे सर्वदेवतोपास्यता न घटेत । किंच तदुत्पत्त्यङ्गीकारेऽनुमत्यभावोऽपि स्यात् । तस्मादनुभूतियुक्तिबहुवाग्भिरो वायोरुत्पत्त्ययोगात्तदुत्पत्तिश्रुतिरप्रमाणमिति पूर्वपक्षे प्राप्तेऽभिधीयते—मुख्यवायुरप्युत्पत्तिमानेव । अनुत्पत्तिप्रतिपादकश्रुतेरभावात् । 'प्राणाद्वायुरजायत' इत्यादौ तदुत्पत्ते श्रुतत्वाच्च । न च पूर्वोदाहृतश्रुते सत्त्वात्कथमेतदिति वाच्यम् । तस्याः स्वरूपविषयत्वेनोत्पत्तिश्रुतेस्तु शरीरविषयत्वेन व्यवस्थोपपत्ते । न चैतद्विषये प्रमाणाभावः । 'अनेता युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्ते' इति वचनस्यैव प्रमाणत्वात् । ननु पूर्वोक्तरीत्या वायोर्मुख्यानुत्पत्त्यभावे सत्युत्पत्त्यनुत्पत्तिमद्भ्यो वियदादिभ्यो विशेषेण तदनुत्पत्तिश्रुतिर्मुख्यचेतनत्वादियुक्तिश्च विरुध्येतेति चेत् । मैवम् । 'नित्यः परमनित्यश्च' इत्यादिश्रौतस्मृतावपि निरुक्तव्यवस्थाया सत्त्वेनोत्पत्तिश्रुते प्राबल्यात्तदनुत्पत्तिश्रुतियुक्त्योर्दौर्बल्येन मुख्यवायुरप्युत्पत्तिमानेवेति सिद्धान्त इति ।

विरोधनिरासके ब्रह्मणः सादित्वसाधिकाया असंभवदुत्पत्तिकनभोनभस्वत्साम्यरूपाया * असंभवदुद्भवयोर्नभोनभस्वतोरित्यादिना जन्मश्रुते सयुक्तिकत्वेन प्राबल्यादित्यन्तेन त्वदुक्ताया युक्तेः, (५) 'आपः' (ब्र० सू० २ । ३ । ११ ) इत्यधिकरणे 'अग्नेरापः' 'तदपोऽसृजत' इतिश्रुतिविरोधपरिहारपरेऽपां तेजोजनिसाधिकाया विमता आपस्तेजसो जाता अप्त्वात्स्वेदादिवदित्यादिना = त्वदुक्ताया

---

* असंभवदुद्भवयोरिति । अयमभिसंधि —सकलजगत्कारण ब्रह्मेत्युक्तम् । तस्य चोत्पत्तिमत्त्वे कारणत्वानुपपत्ति. । अतस्तन्निराकार्थम् । एव च ब्रह्मात्र विषय । तच्चोत्पत्तिमन्न वेति सशय । कुतश्चाय सदेह. । 'असत. सदजायत' 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिविप्रतिपत्ते. । किमत्र युक्तम् । अस्त्येव ब्रह्मण उत्पत्तिरिति । कुत इति चेत् । उच्यते—'असत. सदजायत' इति श्रुतेरेव प्रमाणत्वात् । न चानादित्वेऽपि 'सदेव सोम्य' इत्यादि श्रुति. प्रमाणमिति भ्रमितव्यम् । 'नभोनभस्वतोरुत्पत्तिर्दुर्वचाऽपि पूर्वाधिकरणयो. साधिता । एव च नादित्वेन तत्समस्य ब्रह्मणोऽप्युत्पत्तिरुचिता' इति युक्तेर्विद्यमानत्वेन जन्मश्रुते प्राबल्यात् । तथा च ब्रह्मणोऽप्युत्पत्तिमत्त्व सिध्यतीति पूर्वपक्षे सिद्धान्त —ब्रह्मण सर्वात्मनाऽनुत्पत्तिरेव । न तु वियदादिवद्व्यवस्थया । कुत इति चेत् । ब्रह्मण स्वातन्त्र्यादनुत्पत्तिर्वियदादेस्त्वस्वातन्त्र्यादुत्पत्तिरिति गृहाण । ननु 'असत. सदजायत' इति श्रुतौ ब्रह्मणोऽप्युत्पत्तिश्रवणात्कथ सर्वात्मनाऽनुत्पत्तिरुच्यत इति चेत् । उच्यते—असत सकाशात्पदार्थोत्पत्ते काष्ठदृष्टत्वेन प्रातीतिकस्यापि पदार्थस्य तत्सकाशादुत्पत्तिर्नोपपद्यते । ननु तर्हि तच्छ्रुतेरप्रामाण्य स्यादिति चेत् । मैवम् । 'तद्वा एतद्ब्रह्माऽऽहुर्ब्रह्मेति बृहयति चेति । तद्वा एतदसदाहुर्न ह्यासादयति कश्चनेति । तद्वा एतत्परमाहु परतो हि तदुदीक्षते' इति श्रुतौ ब्रह्म वाच्येवासच्छब्द इत्युक्तत्वात् । एव च ब्रह्मण सकाशादेव सर्वेषामुत्पत्ते. स्वस्वातन्त्र्याच्च ब्रह्मण उत्पत्तिर्नास्तीति सिद्धमिति ।

= त्वदुक्ताया इति । तथा हि—सकलकारणत्वेन ब्रह्म स्वीकृतम् । परत्वपा तेजस. सकाशाज्जातत्वेन तन्न सगच्छेतेति तन्निराकरणीयमेवेति तेजसोऽनन्तर प्राप्ता आपोऽत्र विषय. । कश्चात्र सदेह । किमापस्तेजसो जायन्तेऽथवा ब्रह्मण. सकाशादिति । कुतो वा सदेह. । 'अग्नेराप.' 'तदपोऽसृजत'

युक्त, (७) 'तदभि यानादेव तु तल्लिङ्गात्सः' (ब्र० सू० २।३।१३) इत्यधिकरणे 'यत्प्रयन्त्यभिसंविशन्ति' 'रुद्रो माऽऽविशान्तक.' इति श्रुत्योर्विरोधपरिहारपरे विष्णोः संहारकर्तृत्वाभावसाधिकाया विष्णोर्जगदुत्पादकत्वाल्लोके पितुरन्यस्यैव = मारकत्वदर्शनादिति त्वदुक्ताया उत्पादकयुक्तेः,

---

इति श्रुतिविगानात्। किं तवेष्टम्। अग्नेरापो जायन्त इति। कुत इति चेत्। 'अग्नेराप' इति श्रुते। किं वक्तव्यमेतत् 'तदपोऽसृजत' इति श्रुतिविरोधस्य सत्त्वेन त्वदुक्तस्यानौचित्यात्। नोक्तश्रुतिविरोध। तथा हि—'विमता अप पक्षीकृत्य तेजोजातत्व साध्यतेऽप्त्वात्स्वेदादिवत्' इत्यनुमानरूपयुक्तियुक्तत्वेन तेजोजातत्वश्रुते प्राबल्यात्। एव च सयुक्तिकत्वेन 'तत्तेज ऐक्षत बहु स्या प्रजायेय' इति श्रुत्यन्तरसंवादाच्च तेजस· सकाशादेवापामुत्पत्तिरिति पूर्वपक्षे प्राप्ते सिद्धान्त.—'अग्नेराप' इति श्रुतेरपामुत्पत्तिरन्यतो न ग्राह्या। किंत्वापोऽपि ब्रह्मण सकाशादेव जायन्ते। 'ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत' इति श्रुतिप्रामाण्यात्। ननु निरुक्तयुक्तिसाहित्यवती श्रुतिस्तर्हि कथमुपपद्येतेति चेत्। उच्यते—'तत्र तत्र स्थितो विष्णुस्तत्तच्छक्ती प्रबोधयन्। एक एव महाशक्ति कुरुते सर्वमञ्जसा' इति वामनपुराणोक्तवचनानुरोधेन महाशक्तिरपि हरिर्लोकैव.श्यादिषु स्थित्वाऽबादिक जनयतीति स्वीकारान्नोक्तश्रुत्यनुपपत्ति। तस्माच्छ्रुत्यविरोधेनापा ब्रह्मण. सकाशादेवोत्पत्तिरिति सिद्धमिति।

— मारकत्वदर्शनादिति। इदमत्र बोध्यम्,—जगत्सृष्ट्यादिकर्ता हरिरित्यभिहितम्। यदि च संहारकर्तृत्वम यस्मिन्रुद्रे स्यात्तर्हि हरौ तदभावात्पूर्वोक्त न सगच्छेत। अतस्तन्निषेध्यमेवेति प्रकृताधिदैवाधिभूतानि विषयोऽस्मिन्नधिकरणे। उत्पत्तिमत्त्वात्तानि लीयन्त इति निर्विवादमिति तानि किं भगवता लीयन्त आहोस्विद्रुद्रेणेति संदेह। संदेहबीज तु 'यत्प्रयन्त्यभिसंविशन्ति' 'रुद्रो माऽऽविशान्तक' इति श्रुत्योर्विप्रतिपत्तिरेव। पूर्वपक्षस्तु—रुद्र एव संहारक। श्रुतौ तस्यान्तकत्वश्रवणात्। ननु रुद्रादिनाम्नामपि विष्णुप्रतिपादकत्वेन 'प्राणाना ग्रन्थिरसि रुद्रो माऽऽविशान्तकस्तेनान्नेनाऽऽप्यायस्व' इति श्रुतिरपि विष्णुपरैव। रुद्रविषयत्वे वा रुद्रस्य संहारद्वारत्वाभिधात्री स्यादिति चेत्। मैवम्। विष्णो. कथंचित्संहर्तृत्वाभ्युपगमे तस्य जगदुत्पादकत्वेन लोकदृष्टिविरोधात्। तथा हि—लोके जनको न पुत्रादीना हन्ता।

(९) 'अन्तरा विज्ञानमनसी०' (ब्र० सू० २ । ३ । १५) इत्यधिकरणे 'अक्षरात्परमादेव' [इति] श्रुतेः 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' इति पूर्वावस्थितमनस्तत्त्वस्य पूर्वमेव लय इति लिङ्गदर्शनस्य चोत्पत्तिक्रमेण व्युत्क्रमेण च लयविषये विरोधपरिहारपरे "न सर्वेषां व्युत्क्रमेणैव लयः। किंतु केषांचित्क्रमात्केषांचिद्व्युत्क्रमेण । तथा हि—विज्ञानतत्त्वं तावन्मनस्तत्त्वादुत्पन्नं श्रूयते—'मनसश्च विज्ञानम्' इति श्रुतौ। तस्य च पश्चादुत्पन्नस्य विज्ञानतत्त्वस्य पश्चादेव लयः पूर्वावस्थितस्य मनस्तत्त्वस्य पूर्वमेव लयः" इति पूर्वपक्षोपपादिकाया + ज्ञानत्वयुक्तेः 'तस्याः सयुक्तिकलिङ्गदर्शन०'

---

किंतु पितुरन्यस्यैव मारकत्वं दृश्यते । तद्वदेव जनकस्य विष्णोर्मारकत्वं नोचितम्। अपि तु संहर्तृत्वेन सुप्रसिद्धे रुद्र एव तदुचितम् । तथा सति न कश्चिद्विरोधः । नापि पूर्वोक्तश्रुतेरन्यार्थता। तस्माद्विष्णोरन्यस्मिन्नेव संहर्तृत्वमिति। अयमत्र सिद्धान्तः—विष्णुरेव संहारकर्ता । 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतौ ह्यनादेर्बन्धस्य लयकर्ता विष्णुरिति प्रतीयते। एवं चानादेर्बन्धस्य लयकर्ता यदि विष्णुस्तर्हि सादेर्जगतः संहारकर्ता सुतरां स एव सिध्यतीति किमु वक्तव्यम्। शक्तस्यैव तत्समत्वात्। ननु प्रागुक्तश्रुतिविरोधो दुर्वार इति चेत् । उच्यते—'स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः । स्रष्टृत्वादिकमन्येषां दारुयोषावदुच्यते' इति स्कान्दे स्पष्टमुक्तत्वाद्विष्णोरन्येषां भाक्तमेव तत् । न च पूर्वोक्तयुक्तिविरोध इति वाच्यम् । ममत्वादिदोषराहित्येन लोकपितृवैलक्षण्येन विष्णोस्तदौचित्यात्। तस्माच्छ्रुत्यविरोधेन संहारस्य कर्तृत्वमपि भगवत्येव सिध्यतीति।

+ ज्ञानत्वयुक्तेरिति । अयमाशयः—सकललयकर्ता हरिरित्युक्तम् । परंतु लयविषये क्रमबोधकश्रुतिविप्रतिपत्तौ तत्र संगच्छेतेति सा परिहरणीयैव। एवं च प्रकृताविभूतानि विषयः । किं तानि सर्वाण्युत्पत्तिक्रमवैपरीत्येन लीयन्त उत कानिचिदिति संशयोऽत्र। कुतोऽयं संशयः। 'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात्। व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि' इति श्रुतेरथ च "विज्ञानतत्त्वं तावन्मनस्तत्त्वादुत्पन्नमिति 'मनसश्च विज्ञानम्' इति श्रुत्या प्रतीतते । तस्य च पश्चादुत्पन्नस्य विज्ञानतत्त्वस्य पश्चादेव लयः ।

---

१ क °क्षम्तु ।

इत्यादिना त्वनुक्तायाः, (११) 'ज्ञोऽत एव' (ब्र० सू० २।३।१८) इत्यधिकरणे 'नित्यो नित्यानाम्' 'सर्व एते चिदात्मनो व्युच्चरन्ति' इति श्रुत्योर्विरोधपरिहारे जीवानु-

---

'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' इति श्रुतौ पूर्वावस्थितस्य मनस्तत्त्वस्य पूर्वमेव लय । पश्चाच्च विज्ञानस्येति प्रतीयते" इति लिङ्गदर्शनस्य विरोधात् । अत्र 'मनसी' इति सप्तम्यन्तम् । छान्दस ईकारादेश । तथा च वाङ्मनसि यच्छेन्नाम लीयत इति स्मरेदित्यर्थ । किं तावत्प्राप्तम् । न सर्वेषां व्युत्क्रमेण लय किंतु केषांचित्क्रमेण केषांचित्तु व्युत्क्रमेणेति । कुत इति चेत् । 'यच्छेद्वाङ्मनसी' इति श्रुतौ विज्ञानतत्त्वात्पूर्वमेव मनस्तत्त्वस्य लयो भवतीति प्रतिपादनेन पश्चादुत्पन्नस्य विज्ञानतत्त्वस्य पश्चादेव लय उचित । एव च विज्ञानतत्त्व मनस्तत्त्व च वर्जयित्वाऽन्येषां व्युत्क्रमेण लय इति सिद्धम् । लोकानुकूल चैतद्भवति । लोकेऽपि हि केषांचित्क्रमेण केषांचिच्च व्युत्क्रमेण लयो दृश्यते । न चेतरश्रुतिविरोध । तस्या सयुक्तिकलिङ्गदर्शनविरुद्धाया अप्रामाण्यादिति प्राप्ते ब्रूम'— सर्वेषां विपरीतक्रमेणैव लयो भवति, न तु विज्ञानतत्त्व मनस्तत्त्व च वर्जयित्वा । कुत इति चेत् । उच्यते—विज्ञानतत्त्वस्य मनस्तत्त्वस्य च यथोत्पत्तिलयो भवतीत्येतद्विषये प्रमाणाभावात्सर्वेषा च व्युत्क्रमेण लयो भवतीति 'व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि' इति श्रुत्या प्रतिपादनाच्च । ननु 'यच्छेद्वाङ्मनसी प्राज्ञ' इत्यादिलिङ्गदर्शनस्य जागरूकत्वे कथ प्रमाणाभाव इत्युच्यत इति चेत् । नैवम् । मनस्तत्त्वस्य विज्ञानतत्त्वादेवोत्पन्नत्वात् । किं तत्र प्रमाणमिति चेत् । शृणु । 'परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा । विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम्' इति स्कान्दवचन गृहाण । न च 'मनसश्च विज्ञानम्' इति पूर्वोक्तश्रुतिविरोध इति वाच्यम् । मन शब्दो हि मनस्तत्त्वेऽन्त करणे च वर्तते । तथा विज्ञानशब्दोऽपि विज्ञानतत्त्वे चक्षुरादिजन्यबोधे च वर्तते । 'मनसश्च विज्ञानम्' इत्यय व्यपदेशस्त्विन्द्रियावबोधाख्यो यो भागस्तत्र वर्तते । न तु मनस्तत्त्वविज्ञानतत्त्वाख्यभागेऽपि । न चोक्तव्यपदेशस्येन्द्रियादिविषयकत्वे काचनानुपपत्ति । चराचरविषयमनोभावेनाऽऽलोचनेनावबोधस्योत्पद्यमानत्वात् । न चोक्त वाक्य मनस्तत्त्वविज्ञानतत्त्वाख्यभागविषयक कुतो न स्यादिति वाच्यम् । पूर्वोक्तस्कान्दवचनविरोधात् । एव च श्रुत्यविरोधेन सर्वेषा व्युत्क्रमेणैव लय इति सिद्धान्त ।

त्पत्तिसाधिकायाः ‘ न जीव उत्पत्तिमाननादित्वादीश्वरवत् । न च साध्याविशिष्टता हेतोः । प्रागभावशून्यताया विवक्षितत्वात् । न च तत्र विवादः । उत्पत्तेरेवाभावप्रसङ्गात् । कारणशून्यतां वाऽनादित्वं ब्रूमः । न च तत्रापि विवादः । कारणानुपलब्धेः ’ इत्यादिना स्वदुक्तायाः * कारणराहित्ययुक्तेः,

---

* कारणराहित्येति । अत्र भाव – सर्वजगत्कर्ता विष्णुरित्युक्तम् । यदि च जीवोऽप्यनादिस्तर्हि तन्न सगच्छेत । अतस्तद्दूष्यमेवेति जीवोऽस्मिन्नधिकरणे विषय । तत्र सशय —किं जीव उत्पद्यते न वेति । किं पुन सशयकारणम् । ‘ नित्यो नित्यानाम् ’ ‘ सर्व एते चिदात्मनो व्युच्चरन्ति ’ इति श्रुत्योर्विप्रतिपत्तिरेव । किमत्र तवाभीष्टम् । न जीव उत्पद्यत इति । तथा हि—जीव पक्षीकृत्योत्पत्तिमत्त्वाभाव साध्यतेऽनादित्वादीश्वरवत् । न च साध्याभिन्नो हेतुरिति दुष्टमेतदनुमानमिति वाच्यम् । अनादित्व नाम प्रागभावशून्यत्वमिति विवक्षणात् । न च तत्र प्रमाणाभावः । यदि हि प्रागभावशून्यत्व जीवे न स्यात्तर्हि प्रमितत्वाविशेषाद्घटादेरप्युत्पत्तिर्न स्यात् । अथवा प्रागभावशून्यत्वमनुत्पत्तितो भिन्न स्यात्तर्हि प्रागभाव उत्पत्तितो भिन्नो न स्यात् । एव चोत्पत्तेरेव प्रागभावरूपत्वेन घटादेरप्युत्पत्तित पूर्वं प्रागभावाभावात्प्रागभावहीनस्य तस्याऽऽत्मलाभरूपोत्पत्तिरेव न सिध्यतीत्यस्यैव प्रमाणत्वात् । अथवाऽनादित्व नाम कारणशून्यत्वमिति ब्रूम । न च तत्रापि विवाद । कारणानुपलब्धेरेव निर्णायकत्वात् । न चैवभूतानामप्याकाशादीनामुत्पत्तिमत्त्वेन व्यभिचार इति वाच्यम् । उत्पत्तिमता भूताकाशादीना कारणशून्यत्वे कारणशून्याना चाव्याकृताकाशादीनामुत्पत्तिमत्त्वेऽसप्रतिपत्ते । किंच ‘ नित्यो नित्यानाम् ’ इति श्रुतिरपि जीवस्यानुत्पत्तिं ब्रूते । न च श्रुत्यन्तरविरोध । अनादित्वश्रुतेर्युक्त्युपेताया प्राबल्यात्तद्विरोधेनाप्रामाण्यादिति प्राप्तेऽभिधीयते—उत्पद्यत एव जीव ईश्वरसकाशात् । किमत्र प्रमाणमिति चेत् । ‘ ते वा एते चिदात्मानो विनष्टा पर ज्योतिर्निविशन्त्यविनष्टा एवोत्पद्यन्ते । न विनश्यन्ति कदाचन ’ इति कात्यायनश्रुतिरेव प्रमाणम् । न च पूर्वोक्तानादिनित्यत्वश्रुत्यादिविरोध इति वाच्यम् । नित्यत्वाविरोधेनैवोपपत्तेरुक्तश्रुत्युक्तत्वात् । नन्वनादिनित्यस्य जीवस्योत्पत्ति पूर्वोक्तश्रुत्युक्ताऽपि कथ सगच्छते । नहि वन्ध्यात्वमभ्युपगम्य मातृत्व युज्यते । तथा च जीवस्य नित्यत्वमभ्युपगम्योत्पत्तिमत्त्वस्य व्याहतत्वात्पूर्वोक्ता श्रुतिरप्रमाणमिति चेत् । नैवम् । अनादेरपि जीवस्योत्पत्तिर्युज्यत

( १२ ) उत्क्रान्तिगत्यधिकरणे ' व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मानः सर्वरूपा अनन्ताः ' इति काषायणश्रुतेः ' अणुर्ह्येष आत्माऽयं वा एति सिनीतः पुण्य चापुण्य च ' इति गौपवनश्रुतेश्च जीवस्य व्याप्तत्वाणुत्वविषये विरोधनिरासके जीवव्याप्तित्वसाधिकाया 'न तावदणुरात्मा सर्वदेहगतस्पर्शज्ञानात् ' इत्यादिना त्वदुक्ताया + देहव्यापिसुखाद्युपलब्धिश्च

---

एव । जीवस्वरूपस्य सोपाधित्वेन तदुपाधेरुत्पत्तिमत्त्वाज्जीवस्याप्युत्पत्तिमत्त्वाक्षते । तथा च व्याससहितायाम्—' उत्पद्यन्ते चिदात्मानो नित्यानित्यास्परात्मन । उपाध्यपेक्षया तेषामुत्पत्तिरपि गीयते ' इति । एव च श्रुत्याविरोधेन जीवस्य ब्रह्मजातत्वसिद्धिरिति सिद्धान्त ।

+ देहव्यापीति । इदमत्रावधेयम्—श्रुतिसमन्वय पूर्वं हरावुक्त । यदि च जीवपरिमाणविषये श्रुतीना विरोधस्तर्हि तासामप्रामाण्येन स न सगच्छेत । अतोऽसौ विरोध. परिहरणीय एवेति प्रकृतो जीव एव विषय । किमसौ व्याप्तोऽणुर्वेति सशय । तद्बीज तु ' व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मान सर्वरूपा अनन्ता ' इति काषायणश्रुतेरथ च ' अणु ह्येष आत्माऽय वा एते सिनीत पुण्य चापुण्य च ' इति गौपवनश्रुतेर्विरुद्धप्रतिपादनम् । किं तावत्प्राप्तम् । जीवो व्याप्त एवेति । कुत इति चेन् । ' व्याप्ता ह्यात्मानश्चेतना ' इति श्रुतिरेव प्रमाणम् । न चेय श्रुतिर्न जीवविषया किंत्वीश्वरविषयेति वाच्यम् । बहुवचनानुरोधेन जीवविषयिकैवेति निर्णयात् । न च पूर्वोक्ताया अणुत्वबोधकश्रुतेर्विरोध इति वाच्यम् । व्याप्तत्वबोधकश्रुतेर्युक्तियुक्तत्वेन बलवत्त्वात् । तथा हि—आत्मान पक्षीकृत्याणुत्वाभाव साध्यते सर्वदेहगतस्पर्शज्ञानवत्त्वाद्रूपादीना तत्तदिन्द्रियैर्युगपज्ज्ञानाच्च । न हीद ज्ञानमणावात्मनि सभवति । न हि कश्चिदप्राप्तकरणेन क्रिया निर्वर्तयितु शक्नोति । न चाऽऽत्मा देहपरिमाण इति वाच्यम् । शरीरपरिमाणत्वे ह्यात्मन शरीरवत्सांशत्व स्यात् । मध्यमपरिमाणवस्तुनस्तन्नियमदर्शनात् । ततश्च तेषामशाना प्रत्येक चेतनत्वेन विरुद्धयुगपत्क्रिय शरीरमुन्मथ्येताथवाऽक्रियमापद्येत । नहि युगपदनेकेषामैकमत्य सभवति । न च समुदायो नाम कश्चिद्धर्मी भवति । अशेरारब्धेंऽशिनि स्वीकृतेऽनित्यत्वप्रसङ्गात् । तस्मात्परिशेषादात्मनो व्याप्तत्वमेव सिध्यति । तथा च प्रयोग —सर्वमिद मूर्तजात पक्षीकृत्याऽऽत्मस्पृष्टत्व साध्यते मूर्तत्वाच्छरीरवदिति । एव च सयुक्तिकव्याप्तिश्रुतेर्बलीयस्त्वेनाणुश्रुतेरप्रामा-

पयुक्तेः, (१३) व्यतिरेको गन्धवत्तथा च दर्शयति' (ब्र० सू० २।३।२७) इत्यधिकरणे 'स नित्यो निरवयवः पुण्ययुक्पापयुगिमं लोकममुं चाऽऽवर्तते स विमुच्यते स एकधा न सप्तधा न शतधा' इति गौपवनश्रुतिः 'स पञ्चधा स सप्तधा स दशधा भवति। स शतधा च सहस्रधा स गच्छति स मुच्यते' इति पाराशर्या[1]य[ ]णश्रुतेश्च जीवस्यैकत्वबहुत्वविषये विरोधपरिहारपरे जीवस्यैकरूपत्वसाधिकायाः 'युज्यते खलु विभावात्मनि योगप्रभावेन शरीरबहुतया वा' इत्यादिना त्वदुक्ताया *अनेकशरीरयोगित्वरूपयुक्तेः, (१५) 'यावदात्मभा-

---

व्याज्जीवस्य व्यापत्वमेवेति प्राप्ते सिद्धान्त —न व्यापको जीव किंत्वणुरेव। तथा हि—जीव पक्षीकृत्य णुत्व साध्यत उत्क्रान्तिगत्यागतिमत्त्वात्पतत्रिशरीरवत्। तथा च श्रुति —'सोऽस्माच्छरीरादुत्क्रम्यामु लोकमभिगच्छत्यमुष्मादिम लोकमागच्छति स गर्भी भवति स प्रसूयते स कर्म कुरुते' इति। नहि व्यापद्रव्यस्य व्योमादेरुत्क्रान्त्याद्यस्ति। तस्मान्निराकृतमध्यमपरिमाणस्याऽऽत्मनो व्याप्त्यनुपपत्तौ सत्यामणुत्वमेव पर्यवसन्नमिति।

* अनेकशरीरयोगित्वेति। अय भाव —जगत्कारणे विष्णौ श्रुतिसमन्वय इत प्रागुक्त। परतु जीवस्वरूपप्रतिपादकश्रुतीना परस्परविरोधे सत्यप्रामाण्यात्सर्वासा श्रुतीनामप्रामाण्यशङ्कया हरौ श्रुतिसमन्वयो न सगच्छेत। अतः स परिहरणीय। एव च प्रकृतो जीव एव विषयोऽत्र। तत्र सदेह —किमय जीव एकरूप आहोस्विदनेकस्वरूप इति। कस्मादय सशय। 'स नित्यो निरवयव पुण्ययुक् पापयुक्च स इम लोकममु चाऽऽवर्तते स विमुच्यते स एकधा न सप्तधा न दशधा न शतधा' इति श्रुतौ तथा 'स पञ्चधा स सप्तधा स दशधा भवति। स शतधा च सहस्रधा स गच्छति स मुच्यते' इति श्रुतौ च जीवस्यैकरूपत्वमनेकरूपत्व च परस्परविरुद्ध प्रतीयते। अत सशय। किमत्र युक्तम्। जीव एकरूप एवेति। किं तत्र प्रमाणमिति चेत्। शृणु। बहुत्वबोधकश्रुतेर्निर्युक्तिकत्वादेकत्वबोधकश्रुतेश्च सयुक्तिकत्वादेकरूप एव जीव.। तथा हि—आत्मनि विभुत्वे स्वीकृते सति योगप्रभावेण शरीरबहुतया बाहुरूप्य सगच्छेत। परतु जीवस्य पूर्वोक्तरीत्याऽणुत्वमेव सिद्धम्। एव च विभुत्वाभावाद्बाहुरूप्याभाव स्पष्ट एव। न चाणोरप्यात्मनोऽशबाहुल्या-

---

1 क. 'धा हि द'।

वित्वाच्च न दोषस्तद्दर्शनात् ' ( ब्र० सू० २।३।३० ) इत्यधि-
करणे ' लयमभ्युपैति ', ' स चाऽऽनन्त्याय कल्प्यते ' इत्यनि-
त्यत्वनित्यत्वयोः श्रुतिविरोधनिरासके जीवोत्पत्तिसाधिकाया
उपाधेरुत्पत्तिमत्त्वे प्रतिबिम्बस्योत्पत्तिनियमादित्यनेन त्वदु-
क्ताया * उत्पत्तिमदुपाधिप्रतिबिम्बितत्वरूपाया युक्ते , ( १६ )

---

बहुरूपत्वमिति वाच्यम् । ' स नित्यो निरवयव ' इति श्रुतौ तस्य निरव-
यवत्वस्यैव प्रतिपादनात् । न च योगिनोऽघटितघटकत्वसामर्थ्येन बहुरूपत्वमुप
पन्न स्यात् । तथा च समाधिसामर्थ्यादगस्त्यादीना समुद्रपानादि पुराणादिषु
प्रसिद्धमिति वाच्यम् । तथा सति जीवस्य परमेश्वरेण सह साम्यापत्ति स्यात् ।
तदेव हि परमेश्वरस्यैश्वर्य यत्कर्तुमकर्तुमन्यथा कर्तुं च सामर्थ्यमिति । न चैतादृशीं
युक्तिं बहुत्वबोधकश्रुते पश्याम । एव च सयुक्तिकैकत्वबोधकश्रुतिविरोधेन
बहुत्वबोधकश्रुतेरप्रामाण्यात् ' स मुच्यते ' इति जीवलिङ्गेन परमेश्वरविषय-
ताया वक्तुमशक्यत्वादेकत्वबोधकश्रुतिप्रामाण्येन जीव एकरूप एव सिद्ध इति
प्राप्ते सिद्धान्त.—जीवस्य बहुरूपत्वमस्त्येव । तथा हि—जीवस्याणुस्वरूपत्वेऽ-
पि योगसपदा बहूनामशाना सपादनेन बहुरूपत्वोपपत्तिर्भवत्येव । न चाशिन
विहायान्यत्राशस्य गमनमनुपपन्नमिति वाच्यम् । गन्धादौ दृष्टत्वात् । यथा
पुष्पाद्गन्ध. पृथग्गच्छत्येवमशिनो जीवादशा पृथग्गच्छन्तीति तात्पर्य बोध्यम् ।
तथा च श्रुति —' अनेक एव सन्गन्धवद्व्यतिरिच्यते । अथैको भवति ।
अथ बहुर्भवति । स यथा यथेश्वर. प्रकुरुते तथा तथा भवति । सोऽचिन्त्य.
परमो गरीयान् ' इति । न चैकरूपत्वबोधकश्रुतिविरोध इति वाच्यम् । तस्याः
स्वरूपैक्यविषयत्वेनाविरोधात् । न चेश्वरेण सह साम्यापात. । योगिना-
मपि बहुरूपत्वशक्तेर्योगाराधितेश्वरप्रसादायत्तत्वेनादोषात् । तथा च प्राप्ते—
' अचिन्त्ययेशशक्त्यैव ह्येकोऽवयववर्जित. । आत्मान बहुधा कृत्वा क्रीडते
योगसपदा ' इति । एव च श्रुत्यविरोधेन जीवस्य बहुरूपोपपत्त्या युक्तो हरौ
श्रुतिसमन्वय इति ।

* उत्पत्तिमदुपाधीति । तथा हि—श्रुतिसमन्वयो हरावुक्त. । जीवनित्यत्व-
बोधकश्रुते श्रुत्यन्तरविरोधेन प्रामाण्याभावे सति तदनुपपत्ति स्यात् । अतोऽ-
सौ विरोध परिहरणीय. । एव च प्रकृतो जीव एव विषय. । तत्र सदेह.—
नित्यो वाऽनित्य इति । कुत. पुन. सशयोऽयम् । ' ब्रह्मलयमभ्युपैति ' ' सोऽ-
नादिना पुण्येन पापेन चानुबद्ध. । परेण निर्मुक्त आनन्त्याय कल्प्यते ' इति

'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' (ब्र० सू० २।३।३१) इत्यधिकरणे 'विज्ञानात्मा सह देवैश्च सर्वैः स आनन्दः स बलः स ओजः' [इति] श्रुतेः 'स तु खाद्विमुक्त आनन्दी भवति। सोऽज्ञानाद्विमुक्तो ज्ञानी भवति' इत्यादिपैङ्गिश्रुतेश्च परस्परविरोधनिरासके जीवस्यानानन्दत्वसाधिकायाः *सर्वदा

---

श्रुत्योर्विरोधात् । किं तावत्प्राप्तम् । अनित्य एव जीव इति । कुत इति चेत् । अनित्यत्वबोधकश्रुतेः प्रमाणत्वात् । न च नित्यत्वेऽपि श्रुतिः प्रमाणमस्तीति वाच्यम् । अनित्यत्वश्रुतेः सयुक्तिकत्वेन बलीयस्त्वात् । तथा हि—'ज्ञोऽत एव' इत्यत्र जीवस्योत्पत्तिस्तावदुक्तैव । उत्पत्तिमतश्चानित्यत्वं नियतमेव । घटादौ दृष्टत्वात् । न च तत्र तदुपाधेरेवोत्पत्तिरुक्ता न तु जीवस्येति वाच्यम् । उपाधेरुत्पत्तिमत्त्वे प्रतिबिम्बस्योत्पत्तिनियमात् । न ह्युपाधेरुत्पत्तिमत्त्वेऽपि प्रतिबिम्बस्यानादित्वं क्वचिद्दृष्टम् । अतोऽस्त्येव जीवस्योत्पत्तिर्विनाशश्च । तस्मादनित्य एव जीव इति प्राप्ते सिद्धान्तः—नित्य एव जीवः । प्रतिबिम्बस्य बिम्बोपाधितत्संनिधिविनाशं विना नाशानुपपत्तेः । बिम्बस्य परमात्मनोऽनाद्यनन्तत्वादुपाधेश्च यावत्परमात्मभावि[त्वा]त्सर्वगतबिम्बस्योपाधिसंनिधेश्च नित्यत्वं बोध्यम् । अतो जीवस्यानाद्यन्तत्वाज्ज्ञानादिकर्मसंबन्धाद्यनुपपत्त्या श्रुतेरप्रमाणताऽपि । न चानित्यत्वश्रुतिविरोध इति वाच्यम् । तच्छ्रुतेरुपाधिविषयत्वेनाविरोधात् । न चोपाधेरनित्यत्वे जीवस्याप्यनित्यत्वापत्तिरिति वाच्यम् । न वयं येनोपाधिना जीवः प्रतिबिम्बस्तस्यैवोत्पत्तिविनाशौ ब्रूमः । अपि तु गात्रादिपदो[प]पादितबाह्योपाधेरेव तौ ब्रूमः । किं तत्र प्रमाणमिति चेत् । 'नित्यः परो नित्यो जीवो नित्यास्तस्य धातवः । अन उत्पद्यन्ते च म्रियन्ते च विमुच्यन्ते च' इति श्रुतिस्तथा 'आत्मा नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो धातुरस्य त्वनित्यः' इति भारतं च प्रमाणं बोध्यम् । स्मृतं चैतद् यत्र—जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ॥ सर्वोपाधिविनाशे तु प्रतिबिम्बः कथं भवेत् । कश्च चाऽऽत्मविनाशाय प्रयत्नः सत्स्वपि क्वचित् ॥ इति । तथा—उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम् । इति च । तस्माच्छ्रुत्यविरोधेन जीवस्य नित्यत्वसिद्धौ हरौ श्रुतिसमन्वयो युक्त एवेत्याशयः ।

* सर्वदा तदनुभवोति । इदं बोध्यम्—परमेश्वरे श्रुतिसमन्वय उक्तः । परंतु जीवस्य ज्ञानाद्यात्मकत्वबोधकश्रुतेः श्रुत्यन्तरविरोधे सत्यप्रामाण्यात्-

दनुपपत्ति स्यादत स विरोध परिहरणीय । एव च प्रकृतो जीव एव विषयोऽत्र बोध्य । तत्राय सशय —किं जीवो ज्ञानरूपो न वेति । तद्बीज तु 'विज्ञानात्मा सह देवैश्च सर्वे स आनन्द स बल स ओज स परेणामु लोक नीयते स विमुच्यते ' ' स दु.खाद्विमुक्त आनन्दी भवति । सोऽज्ञानाद्विमुक्तो ज्ञानी भवति । सोऽबलाद्विमुक्तो बली भवति । स नित्यो निरातङ्कोऽवतिष्ठते ' इति श्रुत्योर्विधानमेव । किं तावद्युक्तम् । जीवो ज्ञानरूपो नेति । कुत इति चेत् । आनन्दादिरूपत्वाभावबोधकश्रुत्या तथैव निर्णयात् । न च वैपरीत्यबोधकश्रुतिरप्यस्तीति वाच्यम् । आनन्दादिरूपत्वबोधकश्रुत सयुक्तिकत्वेन तद्वैपरीत्यबोधकश्रुत्यपेक्षया बलीयस्त्वात् । नह्यानन्दादिरूपत्व जीवस्यानुभूयते । प्रत्युत लेशमात्रमेव प्रायश प्रतीयत । न च विद्यमानमप्यानन्दादिरूपत्व प्रतिबन्धकसत्त्वान्नानुभूयत इति वाच्यम् । जीवस्य सर्वदाऽहमित्यभिव्यक्तत्वेन तत्स्वरूपभूतानामानन्दादीना व्यवधानानुपपत्ते. । किंच जीवस्याऽऽनन्दादिरूपत्वे मोक्षाय न केनापि प्रयतितव्यम् । ननु जीवस्याऽऽनन्दादिरूपत्वेऽप्यावरणादिदानी तदननुभव । मोक्षे त्वावरणाभावात्तदभिव्यक्त्याऽनुभवो भवतीति चेत् । इद तावदत्र प्रष्टव्य । किं तदावरणमज्ञान शरीरादि वा । नाऽऽद्य । जीवस्य सर्वदा ' अहम् ' इत्याकारिका प्रतीतिः सर्वैरनुभूयतेऽतस्तत्स्वरूपभूतानामानन्दादीनामज्ञानानुपपत्ते. । नान्त्य । शरीरस्याऽऽनन्दाद्यनुभवरूपभोगायतनत्वेन भोगप्रतिबन्धकत्वायोगात् । तस्मात्सयुक्तिकश्रुतिविरोधेनाप्रमाणमेवान्या श्रुति । अतो नेत्थरे श्रुतिसमन्वयो युक्त इति पूर्वपक्षे प्राप्ते ब्रूम —भवत्येवाऽऽनन्दादिरूपो जीव । न च पूर्वोक्तश्रुतियुक्तिविरोध इति वाच्यम् । यथा हि पुस्त्वयौवनादीनामपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि कालवशात्तदभिव्यक्त्या ' पूर्व नाय पुमानिदानीं तु पुमान् ' इत्यादिव्यवहारो युज्यते तद्वदेव मुक्ते पूर्वमपि जीवस्वरूपत्वेन सता ज्ञानानन्दादेरीश्वरप्रसादादभिव्यक्त्या ' आनन्दी भवति ' इत्यादिश्रुत्युक्तव्यवहारोपपत्त्या विरोधाभावात् । तथा च तदभिव्यक्त्यर्थं मुमुक्षुणा प्रयत्नोपपत्तिरपि भवति । नाप्यावरणानुपपत्ति । ज्ञानाभावातिरिक्तायास्तन्निमित्तभूताया अविद्याया आवरणत्वेन स्वीकारात् । ननु प्रागसतामानन्दादीनामुत्पत्तिवादिनी पूर्वोक्ता श्रुति. किं न स्यात्किमभिव्यक्तिकल्पनयेति चेत् । उच्यते—' बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभो. ॥ ' इति गौपवनश्रुतौ तदभिव्यक्तेरेवोक्तत्वेन न तत्कल्पनागौरवम् । तस्माज्जीवो ज्ञानरूप एवेति सिद्धान्त इति ।

तदनुभवप्रसङ्गरूपयुक्तेस्त्वदुक्तायाः, (१७) + 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र० सू० २।३।३३) इत्यधिकरण ईश्वरस्यैव कर्तृत्वबोधकश्रुतेः फलसंपत्त्या जीवकर्तृत्वाबोधिकायाः 'स यत्कर्म कुरुते तदभिसंपद्यते' इति श्रुतेश्च विरोधनिरासके जीवस्य कर्तृत्वाभावसाधिकाया लाघवरूपयुक्तेः "समर्थित ईश्वरस्यैवानन्ययोगेन कर्तृत्वम् 'इतरव्यपदेशात्' (ब्र० सू० २।१।२१) इत्यादौ । अत एव द्वयोः कर्तृत्वमपि प्रत्युक्तम् ।

---

+ कर्ता शास्त्रार्थेति । अयमाशयः—परमेश्वरे श्रुतिसमन्वय उक्त । परन्तु जीवकर्तृताबोधकश्रुतिविरोधे सति स न सगच्छेतेति तन्निरास कार्य एवेति प्रकृतो जीव एव विषयोऽस्मिन्नधिकरणे । तत्र सशय —किं स कर्ता न वेति । किं तावत्प्राप्तम् । न जीव कर्तेति । कुत इति चेत् । उच्यते— 'नान्य कर्ता' इति श्रुतौ जीवकर्तृत्वाभाव एव प्रतीयते । ईश्वरस्य च सर्वजगत्कर्तृत्व श्रुतौ सुप्रसिद्धमेव । ननु 'स यत्कर्म कुरुते तदभिसपद्यते' इति श्रुतौ जीवकर्तृत्वमपि प्रतीयते । न चेय श्रुतिरीश्वरविषयेति वाच्यम् । 'तदभिसपद्यते' इति तत्र फलसपत्तिश्रवणेन परमेश्वरविषयकत्वाभावादिति चेत् । मैवम् । कर्तृत्वाभावबोधकश्रुते सयुक्तिकत्वेन प्राबल्यात् । तथा हि—'इतरव्यपदेशात्' इत्यत्र 'यदि जीवकर्तृत्वस्य श्रुतौ व्यपदेशादिसिद्धत्वाज्जीव स्वतन्त्र कर्तेत्युच्यते तर्हि तस्य हिताकरणमहिताकरण च न स्यात् । नहि स्वतन्त्रस्य ते सभवत । विद्येते च ते जीवे । अतोऽसौ न स्वतन्त्र कर्ता । अपि तु परमेश्वर एव' इत्यनया रीत्या परमेश्वरस्यैव कर्तृत्व समर्थितम् । न च द्वयोरपि कर्तृत्वमिति शङ्कनीयम् । उक्तयुक्त्यैव तस्यापि निरस्तत्वात् । किंचेश्वरस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघव भवति । जीवस्यापि तदङ्गीकारे तु गौरव स्यात् न च जीवस्यैव कर्तृत्व नत्वीश्वरस्यापीति वैपरीत्य शङ्क्यम् । श्रुत्यादिसिद्धस्येश्वरकर्तृत्वस्य लाघवाय हातुमशक्यत्वात् । अत सयुक्तिक श्रुतिविरोधेन कर्तृत्वश्रुतेरप्रामाण्याज्जीवो न कर्तेति पूर्वपक्षे प्राप्ते सिद्धान्त — जीवस्यापि कर्तृत्वमस्त्येव । अ यथा विधिनिषेधशास्त्रवैयर्थ्यप्रसङ्गात् । नहि कर्तारमन्तरेणारण्यरोदनायमानस्य शास्त्रस्य सार्थक्य वक्तु शक्यते । न च जड प्रति तौ विधिनिषेधौ सभवत । नापि परमेश्वर प्रति । तथा सति पुण्यपापलेपप्रसङ्गेन तस्यानीश्वरत्वापत्ते । तस्माज्जीवस्य कर्तृत्वाङ्गीकारे सत्येव शास्त्रस्यार्थवत्त्वेन सोऽपि कर्ताऽङ्गीकार्य इति ।

ईश्वरस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवं च स्यात्" इति त्वदुक्तायाः, (१९) 'आभास एव च' (ब्र० सू० २।३।५०) इत्यधिकरणे 'रूपं रूपम्' इति श्रुतेः प्रकरणवशादनुमितप्रतिबिम्बत्वाभावबोधकश्रुतेश्च विरोधनिरासक एकेश्वरप्रतिबिम्बत्वाभावसाधिकायाः प्रतिबिम्बानामेक+जातीयत्वाभावरू-

---

+ जातीयत्वाभावेति। अयमाशय—सर्वासा श्रुतीना हरौ समन्वयो निरूपित। परतु जीवप्रतिबिम्बताविषयकश्रुतीना विरोधेन प्रामाण्याभावे सति तदनुपपत्ति स्यात्। अतोऽसौ निरसनीय एवेति प्रकृतो जीव एव विषयोऽत्राधिकरणे। तत्र सशय—भगवत्प्रतिबिम्बो (जीवो) न वेति। कुत पुन सशय। 'रूप रूपम्' इति श्रुतेरथ च प्रकरणवशात्तर्किताया 'अशो नाना' इत्यधिकरणोक्ताया 'नैवाशो न सबन्धो नापेक्ष्यो जीव परस्य' इति श्रुतेर्विगानात्। किं तावत्प्राप्तम्। न भगवत्प्रतिबिम्बा जीवा इति। कथमेतद्विज्ञायते। तादृशार्थबोधकश्रुतेर्विद्यमानत्वात्। न च प्रतिबिम्बत्वबोधकश्रुतेर्विरोध इति वाच्यम्। अन्यश्रुते सयुक्तिकत्वेन बलीयस्त्वात्। अस्ति हि खल्वय जीवाना सुरनरतिर्यगादिरूपो भेदः। न ह्येकप्रतिबिम्बाना मिथो वैचित्र्य सभवति। प्रतिबिम्बो भवति चेद्भवत्वेक एव कश्चिज्जीव। न तु सर्वेऽपि। तदत्र प्रयोग—जीवान्पक्षीकृत्य प्रतिबिम्बाभाववत्त्व साध्यते भेदवत्त्वाद्घटपटवदिति। तस्मात्सयुक्तिकश्रुतिविरोधात्प्रतिबिम्बत्वबोधकश्रुतिरप्रमाणमिति प्राप्ते ब्रूम — भगवत्प्रतिबिम्बा एव जीवा। तादृशश्रुतेर्विद्यमानत्वात्। न चोक्तश्रुतियुक्त्योर्विरोधः। अनादिविद्याकर्मादिवैचित्र्येण प्रतिबिम्बवैचित्र्योपपत्त्या युक्त्य(क्ति)विरोधाभावात्। नापि प्रतिबिम्बत्वाभावबोधकश्रुतिविरोध। तस्या उपाध्यायत्तत्वादिरूपप्रतिबिम्बत्वनिषेधपरत्वेन विरोधाभावात्। तथा हि—ननु सूर्यकादिवज्जीवो ब्रह्मप्रतिबिम्ब इति मत न युक्तम्। कुत इति चेत्। इद तावदयं प्रष्टव्यः। किमसौ जीव सूर्यकादिवदुपाध्यायत्तत्वादिधर्मवान्न वेति। नाऽऽद्य। अनित्यत्वादिदोषप्रसङ्गात्। न द्वितीय। सूर्यकाद्युपमाया असभवापातात्। तस्मान्न जीवो ब्रह्मप्रतिबिम्ब इति चेत्। मैवम्। 'रूप रूप प्रतिरूपो बभूव' 'बहव सूर्यका यद्वत्सूर्यस्य सदृशा जले। एवमेवात्मका लोके परात्मसदृशा मता' इत्यादिप्रमाणैर्जीवो ब्रह्मप्रतिबिम्ब इति निर्णयात्। न च सूर्यकाद्युपमाया असभव इति वाच्यम्। 'पृथगुपदेशात्' 'तद्गुणसारत्वात् ०' 'सध्ये सृष्टिराह हि' इत्यादिसूत्रेषु प्रतिपादितैर्भिन्नत्वादिभिस्त-

पयुक्तेस्त्वदुक्तायाः सत्त्वेनैषामधिकरणानां युक्तिविरोधनिरासके प्रथमपाद एव निवेश उचितः ।

अत्र च प्रमाणवाक्यस्य स्वविरोध्यर्थविषयकज्ञानकरणत्व व्यापकाप्रामाण्यक(र)त्वनियमाद्वेदान्तनिष्ठस्योक्तप्रमाशक्तत्वस्य तद्विषयकविरुद्धविषयबोधकसांख्यस्मृत्यप्रामाण्य विनाऽनुपपद्य मानतया तादृश(शा)प्रामाण्यापादकत्वमप्रत्यूहम् । तादृशप्रामाण्यापादकापत्तेश्च ब्रह्मप्रमाशक्तत्वज्ञानविरोधितया 'वेदान्ता यद्युक्तब्रह्मपराः स्युस्तदा स्वविरोध्यर्थकज्ञानकरणत्वव्यापकाप्रामाण्यवन्तः स्यु' इति तर्क स्वपक्ष*साक्षाद्विरोधीति तन्निरासकत्वादस्याधिकरणस्याध्यायपादसंगतिः । तत्र वेदान्तानामुक्तब्र-

---

दुपमोपपत्ते । नाप्यनित्यत्वाद्यापत्ति । उपाध्यायत्तत्वादिसर्वप्रतिबिम्बधर्मानभ्युपगमेनानित्यत्वप्रसङ्गाभावात् । यौ हि साध्यसाधनधर्मौ विवक्षितौ तत्सद्भावेनैव दृष्टान्तदार्ष्टान्तिकयो साम्य द्रष्टव्यम् । अ यथा सर्वानुमानलोपप्रसङ्गात् । अत्र च भिन्नत्व साध्य तदधीनत्व तत्सादृश्य च प्रतिबिम्बपदोपात्त साधन च दृष्टान्तदार्ष्टान्तिकयोर्विद्यत इति न कश्चिद्दोष । ननु बिम्बप्रतिबिम्बयोरभेद एव सर्वसमत इति कथ तन्मूल तदधीनत्वादिति चेत् । मैवम् । प्रत्यक्षेणानुमानेन श्रुत्या स्मृत्या च बिम्बप्रतिबिम्बयोर्भेदस्यैव सिद्धत्वात् । तत्र प्रत्यक्ष तावत्—'न दर्पणे मम मुख किंतु मम प्रतिमुखमेव वर्तते' इत्याकारक सर्वैरनुभूयते । अनुमान श्रुतिस्मृती चेति त्रय चन्द्रिकाया स्पष्टम् । तदेव श्रुत्यविरोधेन जीवस्य प्रतिबिम्बत्वसिद्धेर्युक्तो नारायणे श्रुतिसमन्वय इति ।

* साक्षाद्विरोधीति । अय भाव —प्रमाणवाक्यस्य स्वविरोध्यर्थविषयकज्ञानकरणत्वव्यापकाप्रामाण्यकरत्वनियमस्य सर्वसमतत्वेन यथा स्वत प्रमाणभूतानां वेदान्तवाक्याना सांख्यस्मृत्यप्रामाण्यकरत्व निष्प्रत्यूहमस्मत्समत तद्वदेव सांख्यस्मृतिप्रामाण्यापादकाना प्रमाणाना वेदान्ताप्रामाण्यापादकत्वमपि निराबाधमेवेति कापिलादिसमतमिति वाच्यमेव । एव च 'वेदान्ता यद्युक्तब्रह्मपरा स्युस्तर्हि स्वविरोध्यर्थकज्ञानकरणत्वव्यापकाप्रामाण्यवन्त स्यु' इत्याकारक कपिलादिसांख्यस्मृतिप्रवर्तकाचार्ये कल्पितस्तर्कोऽस्मत्पक्षस्य साक्षाद्विरोधी भवति । अतस्तन्निरासकत्वेनास्याधिकरणस्याध्यायपादसगतिर्बोध्येति ।

परत्वमयुक्तमुत युक्तमिति तदर्थं सांख्यस्मृतिप्रामाण्ये साधकमस्त्युत नास्तीति तदर्थं च सांख्यस्मृतिः किमदुष्टकरणजन्यज्ञानमूला, उत नेति संशये—वेदान्ता नोक्तब्रह्मपरा । तथा सति सांख्यस्मृतेरप्रामाण्यप्रसङ्गात् । न चेष्टापत्तिः । सर्वज्ञप्रणीताया महाजनपरिगृहीतायाश्च वेदवदेव प्रामाण्यस्य निरपवादत्वात् । आप्तिर्हि प्रामाण्यबीजम् । सा च वेद इव तन्त्रेऽपि तुल्या । तत्प्रणेतुरिव तन्त्रप्रणेतुरपि । 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्' (श्वे० ५ । २) इतिश्रुतिसिद्धसर्वज्ञताकत्वात् । न चेश्वरज्ञानस्य नित्यतयाऽसंभावितदोषकरणत्वेन तन्मूलकानां वेदानां प्रामाण्यं निश्चेतुं शक्यते कपिलादिसिद्धज्ञानानां च जन्यतया संभावितदोषकरणत्वान्न प्रामाण्यनिश्चयसंभव इति वाच्यम् । भगवदनुग्रहाविर्भूतविज्ञानानां कपिलादीनां ज्ञाने दोषमूलकत्वशङ्काया अयुक्तत्वात् । नहि तेषां प्रतारणादिदोषकल्पने किंचिद्बीजमस्ति । न च 'विरोधे × त्वनपेक्षं[1] स्यादसति ह्यनुमानम्'

---

× त्वनपेक्षं स्यादिति । ज्योतिष्टोमे हि त्रयो मण्डपाः प्रतिपादिताः । तत्र दार्शिकीं वेदिं मध्येऽन्तर्भाव्य प्राचीनवंशो नाम मण्डप आदाववस्थितः । ततः पूर्वस्यां दिशि सदो नाम मण्डपः । ततः पूर्वस्यां हविर्धानो नाम मण्डपः । ततः पूर्वस्यामुत्तरवेदिर्भवति । तत्र सदोनामकस्य मण्डपस्य मध्ये काचिदौदुम्बरी शाखा निखन्यते । तस्याश्च वाससा वेष्टनं स्मर्यते—'औदुम्बरी सर्वा वेष्टयितव्या' इति । सेयं स्मृतिर्विषयः । तत्र संशयः—किमियं स्मृतिः प्रमाणं न वेति । किं तावत्प्राप्तम् । प्रमाणमिति । कुत इति चेत् । उच्यते—यथा ह्यष्टकादिस्मृतीनां मूलभूता श्रुतिरनुमीयते तद्वदेव सर्ववेष्टनस्मृतेरपि मूलभूता श्रुतिरनुमातव्या । तथा च श्रुतिमूलकत्वाद्वेष्टनस्मृतेरपि प्रामाण्यमिति पूर्वपक्षे प्राप्ते सिद्धान्तः—'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिवाक्यस्य सत्त्वात्सर्ववेष्टनस्मृतिरप्रमाणम् । नहि सर्ववेष्टने सति स्पर्शः संभवति । एवं च यथा 'वह्निरनुष्णो द्रव्यत्वात्' इत्यनुमानं बाधितं भवति तथैव सर्ववेष्टनस्मृतिमूलभूतश्रुतिविषयकानुमानमपि प्रत्यक्षश्रुत्या बाधितं भवतीति । अथवा—स्पर्शसर्ववेष्टनविषययोः प्रत्यक्षानु-

---

1 क 'पेक्ष्यं स्या' ।

( जै० सू० १ । ३ । ३ ) इति न्यायस्यात्रावकाशोऽस्ति । निर्णीततात्पर्यकश्रुतिविरोध एव तत्प्रसरात् । न च तत्राप्युपक्रमादिभिस्तात्पर्यनिर्णयः शक्यशङ्कः । बलवत्तर्कावष्टम्भेन साङ्ख्याचार्यैः स्वाभिमतार्थ एव तस्य तात्पर्यस्य वर्णितत्वात् । नन्वे(चै)वं सति मन्वादिस्मृत्यप्रामाण्यप्रसङ्गस्तत्रापि महाजनपरिगृहीतत्वस्य प्रामाण्यबीजस्य तुल्यतयेष्टापत्त्ययोगादिति वाच्यम् । तासामनुष्ठेयार्थे सावकाशतया साङ्ख्यस्मृतिविरुद्धार्थे तात्पर्याकल्पनात् । साङ्ख्यस्मृतीनां त्वध्यात्मदर्शनमधिकृत्यैव प्रवृत्तानां निरवकाशत्वात् । अत एव वेदतन्त्रयोः समबलत्वे निर्णयो वाच्यो न तु तन्त्रानुरोधेन निर्णय इति परास्तम् । वेदस्यापि धर्मादौ सावकाशत्वात् । न चोपनिषदां निरवकाशता । तासामपि साङ्ख्यरीत्या सावकाशताया उपपादनीयत्वात् । तथा हि—न तावत्कारणवाक्यानां ब्रह्मणि जगदुपादानताबोधकत्वं तद्गतकर्तृताबोधकत्वं वा । वक्ष्यमाणतर्कविरोधात् । नापि प्रत्यगभिन्नपरमात्मबोधकवाक्यानां यथाश्रुतार्थकत्वम् । हिताकरणबन्धमुक्तिव्यवस्थाभावप्रसङ्गात् । इत्थमेवाद्वितीयत्वादिपक्षे दोषा उन्नेयाः । एवं च साङ्ख्यप्रवचनोक्तरीत्या सृष्टिवाक्येषु प्रकृतिताबोधकवाक्यानां जगत्प्रकृतिभूतप्रधानस्वामितामात्रेणौपचारिकत्वम् । कर्तृताबोधकवाक्यानां केषांचिदन्तरेश्वरबोधकत्वं केषांचिदौपचारिकत्वम् । तत्त्वमस्यादिवाक्यानां चिन्मण्डलान्तःपातित्वबोधकत्वमित्येवागत्याऽनुसा(स)रणीयम् । तथा च साङ्ख्यसूत्राणि—'तत्सन्निधानादधिष्ठातृत्वं मणिवत्' ( सां० सू० १।९६ ) 'मुक्तात्मनः प्रशंसा, उपासा सिद्धस्य वा' ( सां० सू० १ । ९५ ) 'नाद्वैतश्रुतिविरोधो जातिपरत्वात्' ( सां० सू० १ । १५४ ) एवमादीनि । तत्र भाष्यम्—ननु तथाऽपि प्रकृत्याद्यखिलाधिष्ठातृत्वं श्रूयमाणं नोपपद्यते । लोके संकल्पादिना परिणममानस्यैवाधिष्ठातृत्वव्य-

---

मितश्रुत्योः परस्परविरोधादुभयोरप्यप्रामाण्यमिति पूर्वपक्षे प्रत्यक्षया स्पर्शाविषयकश्रुत्या सर्ववेष्टनस्मृतिमूलभूतश्रुत्यनुमानस्य बाधितत्वाद्वेष्टनस्मृतिरप्रमाणमिति सिद्धान्तः ।

वहारादिति। तत्राऽऽह—तादिति। यदि संकल्पेन स्रष्टृत्वमाधि-ष्ठातृत्वमुच्यते तदाऽयं दोषः स्यात्। अस्माभिस्तु पुरुषस्य संनिधानादेवाधिष्ठातृत्व स्रष्टृत्वादिरूपमिष्यते मणिवत्। यथाऽयस्कान्तमणेः सांनिध्यमात्रेण शल्यनिष्कर्षकत्व न संकल्पादिना तथैवाऽऽदिपुरुषस्य संयोगमात्रेण प्रकृतेर्महत्तत्त्वादिरूपेण परि-णमनम्। इदमेव सोपाधिकस्रष्टृत्वमित्यर्थः।

नन्वेवमीश्वरप्रतिपादकश्रुतीनां का गतिस्तत्राऽऽह—मुक्तेति। यथायोगं काचिच्छ्रुतिर्मुक्तात्मनां केवलात्मसामान्यस्य ज्ञेयता-विधानाय संनिधिमात्रेश्वर्येण स्तुतिरूपा प्ररोचनार्था। काचिच्च संकल्पपूर्वकस्रष्टृत्वादिप्रतिपादिका श्रुतिः सिद्धस्य ब्रह्मविष्णुह-रादेरेवानित्येश्वरस्याभिमानादिमतोऽपि गौणानित्यत्वादिमत्त्वा-न्नित्यत्वाद्युपासनापरेत्यर्थं। नन्वेव पुरुषनानात्वे सति—

एक एव हि भूतात्मा भूते भूते व्यवस्थित।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः स भिद्यते शक्त्या मायया न स्वभावतः॥

इत्याद्या श्रुतिस्मृतय आत्मैक्यप्रतिपादिका नोपपद्यन्त इति। तत्राऽऽह—नाद्वैतश्रुतीति। आत्मैक्यश्रुतीनां विरोधस्तु नास्ति। तासां जातिपरत्वात्। जाति सामान्यमेकरूपत्वम्। तत्रैवाद्वैतश्रुतीनां तात्पर्यात्। नत्वखण्डत्वे। तत्र प्रयोजनाभावा-दित्यर्थं।

नन्वयं पूर्वपक्षो न युक्तः। उक्तदोषाणां समन्वयाध्याय एव तत्र तत्रोद्धृतत्वात्। तथा हि—ईक्षत्यधिकरणे पूर्वपक्षभाष्ये ‘प्रधानस्यानेकात्मकस्य परिणामसंभवात्कारणत्वोपपत्तिर्मृदादि-वत्, नासंहतस्यैकात्मकस्य ब्रह्मण.’ इत्युपादानत्वस्य ब्रह्मणि

१ क ‘षप्रकृतिष’। २ क ‘कृतिर्मे’। ३ क ‘मते। इ’। ४ क ‘योग्य का’। ५ क. ‘ष्ठत्वम’। ६ क ‘पासाप’। ७ क ‘जातिसा’। ८ क ‘न्यस्यैक’। ९ क ‘त्पर्ये न। १० क.

प्रतिक्षिप्तत्वात्तत्साधनं विना न सिद्धान्तोत्थितिरिति '*कृत्स्न-प्रसक्ति' इति न्यायाभासोऽपि तत्र निरसनीयतया विव-

* कृत्स्नप्रसक्तिरिति। अयं भावः—'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (ब्र० सू० २।१।२६) एतद्धि सूत्रं पूर्वस्मिन्नधिकरणे 'चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्च बाह्यं साधनमनपेक्ष्य स्वयमेव परिणममानं जगतः कारणम्' इति सिद्धान्तितत्वेन ब्रह्म परिणामीति भ्रमः स्यात्तद्वारणार्थं पूर्वपक्षमुखेन विवर्तवाद एव सिद्धान्तमतो न परिणामवाद इति बोधनार्थम्। अत्र निरवयवाद्ब्रह्मणः सकाशाज्जगत्सर्गं ब्रुवन्समन्वयो विषयः। तत्र संशयः—स किम् 'यन्निरवयवं तन्न परिणामि' इति न्यायेन सह विरुध्यते न वेति। किं तावत्प्राप्तम्। विरुध्यत इति। यदि हि ब्रह्मणो निरवयवत्वं तर्हि कृत्स्नस्य ब्रह्मणः कार्यरूपत्वेन परिणामः स्यात्। तथा सति मूलोच्छेदः प्रसज्येत। यदि तु पृथिव्यादिवत्सावयवं ब्रह्माभविष्यत्ततोऽस्यैकदेशः पर्यणंस्यदेकदेशश्चावास्थास्यत। न च तथा ब्रह्म कल्पयितुं शक्यते। किंतु निरवयवमेव ब्रह्म 'निष्कलं निष्क्रियम्' (श्वे० ६।१९) इत्यादिश्रुतिभ्योऽवगम्यते। यदि च निरुक्तदोषपरिजिहीर्षया सावयवमेव ब्रह्माभ्युपगम्येत तर्हि निरवयवत्वप्रतिपादिकाः श्रुतयः प्रकुप्येयुः। सावयवत्वे त्वनित्यत्वप्रसङ्ग इति सर्वथाऽयं पक्षो न समञ्जसीति प्राप्ते ब्रूमः—निरवयवाद्ब्रह्मणः सकाशाज्जगत्सृष्टौ स्वीक्रियमाणायामपि न कश्चिद्दोषः। यदुक्तं कृत्स्नस्य ब्रह्मणः कार्यरूपेण प्रसक्तिरिति। नैतद्युक्तम्। यथा हि ब्रह्मणः सकाशाज्जगदुत्पत्तिः श्रूयते तथैव विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानमपि श्रूयते। तथा च श्रुतिः—'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति। किंच यदि कृत्स्नं ब्रह्म कार्यरूपेणोपयुक्तं स्यात्तर्हि 'सता सोम्य तदा सपन्नो भवति' इति सुषुप्तिगतं विशेषणमनुपपन्नं स्यात्। विकृतेन हि ब्रह्मणा नित्यसंपन्नत्वादविकृतस्य च ब्रह्मणोऽभावात्। तस्मादस्त्यविकृतं ब्रह्म। न च निरवयवत्वबोधकश्रुतिव्याकोपः। श्रुत्या निरवयवत्वस्यापि प्रतिपादनात्तादृशस्यापि ब्रह्मणः स्वीकारात्। ननु निरवयवं ब्रह्म परिणमते परंतु न कृत्स्नमिति श्रुत्याऽपि बोधयितुं न शक्यम्। यदि हि निरवयवं ब्रह्म स्यात्तर्हि नैव परिणमेत। अथवा कृत्स्नं परिणमेत। यदि तु केनचिद्रूपेण परिणमते केनचिद्रूपेणावतिष्ठत इत्युच्येत तर्हि सावयवं ब्रह्म प्रसज्येत। तस्माद्दुर्घटमेतदिति चेत्। सत्यम्। अविद्याकल्पितरूपभेदाभ्युपगमेन दोषाभावो बोध्यः। नह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु संपद्यते। तस्मान्न कश्चिद्दोष इति।

क्षितः । एव कचिदीक्षणस्यौपचारिकत्वमित्यपि तत्रैव निरस्तम् । एवमदृश्यत्वाधिकरणे—

चिदात्मना तु सारूप्यं जडानां नोपपद्यते ।
जडं प्रधानमेवातो जगद्योनिः प्रतीयताम् ॥

इति निबन्धे पूर्वपक्षोत्थापनात् ।

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः ।
अनादिवासनोद्भूतो न सारूप्यमपेक्ष्यते ॥

इति सिद्धान्तप्रणयनाच्च 'न विलक्षणत्वात्' (ब्र० सू० २ । १ । ४) इत्याद्यधिकरणार्थ एवोक्तः । जिज्ञासासूत्र एव च सर्वज्ञत्वसर्वकर्तृत्वतदभावादिविरुद्धधर्माध्यासाज्जीवब्रह्मभेदमाशङ्क्य तन्मिथ्यात्वसाधने विषयः समर्थित इति तदनन्यत्वाधिकरणार्थोऽपि स्पष्टीकृतः । 'प्रकृतिश्च' (ब्र० सू० १ । ४ । २३) इत्यत्रापि कार्यं चेदं जगत्सावयवमचेतनमशुद्धं च दृश्यत इत्यादिना 'न विलक्षणत्वात्' इत्यादि सूत्रार्थ एव दर्शित इति तदनुगुणेन सिद्धान्तेन भवितव्यमेवेति चेत् । अत्र वदन्ति—ईक्षत्यधिकरणे नित्यचैतन्यरूपस्य परमात्मनो मुख्यं सर्वज्ञत्वासंभवात्तन्निर्वाहाय जन्यज्ञानोपगमे सशरीरत्वापत्तेश्च सिद्धान्तहेतारस्वारस्यमुपपाद्य पूर्वपक्षोपाद्धलनाय्येतत्पादीयनिरसनीयस्य निरवयवत्वादिप्रयुक्तोपादानत्वासंभवस्योपदर्शितत्वेऽपि तन्निरासकन्याय एतत्पादीयसिद्धान्तस्यैव समाश्रयणात् । यथोक्तं तत्र सिद्धान्तभाष्ये—यथा तु तर्केणापि ब्रह्मण एव कारणत्वं निर्वोढुं शक्यते न प्रधानादीनां तथा प्रपञ्चयिष्यते 'न विलक्षणत्वात्' इत्येवमादिनेति । एतेनोक्तनिबन्धः प्रकृत्यधिकरणभाष्यं चाविरोधेन व्याख्यातम् । एवमन्यत्रापि द्रष्टव्यम् ।

यत्तु चन्द्रिकायाम्—यत्तु वेदान्तानां बहुमुखतया परतन्त्रप्रज्ञानां पुंसां तैः स्वतोऽर्थनिश्चयायोगेन स्मृत्या तदर्थे निश्चेतव्ये सति मन्वादिस्मृतीनामनुष्ठेयपरत्वेन सावकाशत्वात्कापिलस्मृतेस्तु सिद्धार्थनिष्ठाया मोक्षसाधनसम्यग्दर्शनमधिकृत्य प्रवृत्ताया अन्यपरत्वायोगान्निरवकाशत्वरूपदोषप्रसङ्गात्तदनुसारेण वेदान्ता अचेतनकारणपरतया व्याख्येया इति प्राप्ते मन्वादिस्मृतिषु

पुराणादिषु च बहूनां ब्रह्मकारणत्ववादिवाक्यानां सत्त्वा त्तेषामनवकाशत्वरूपदोषप्रसङ्गात्तदनुरोधेन चेतनकारणत्वपर तया वेदान्ता व्याख्येया इति सिद्धान्त इत्यस्मद्रीत्या पूर्वपक्ष-सिद्धान्तावनूद्य तत्र, वेदान्तानां चेतनकारणतायामैकमुख्यस्य 'गतिसामान्यात्' (ब्र० सू० १।१।१०) इत्यत्रोक्तत्वेन समन्वयाध्याय उपपादितत्वेन च बहुमुखशङ्कानुदयादिति पूर्व-पक्षे दूषणमुक्तं तदत एव निरस्तम्। प्रसिद्धानां वेदान्तानां यादृशक(का)रणपरत्वमन्येषामपि न तद्विरुद्धत्वमिति * प्रागुक्त त्वेऽप्युक्तरीत्या सर्वेषामेव वेदान्तानां सांख्याचार्योक्तरीत्या न ब्रह्मपरत्वमिति शङ्कायामनुपपत्त्यभावात्।

यदपि चन्द्रिकायाम्—स्पर्शनश्रुतिविरोधेन सर्वज्ञत्वादिस्मृ त्यप्रामाण्यस्य पूर्वतन्त्र एवोक्तत्वेनेह स्मृतिविरोधेन श्रुत्यस्वार स्यशङ्कानुदयाच्चेति पूर्वपक्षे द्वितीयं दूषणमुक्तम्। तदपि न सत्।

---

* प्रागुक्तत्वेऽपीति। 'गतिसामान्यात्' इत्यत्र हि भाष्य एव प्रतिपादि-तम्—यथा तार्किकाणां सिद्धान्ते परस्परभिन्नान्येव जगत्कारणानि सिध्यन्ति तथैव यदि वेदान्तसिद्धा तेऽपि क्वचिच्चेतनं ब्रह्म जगत्कारणं क्वचिदचेतनं प्रधानं क्वचिच्चान्यदेव किंचिदिति सिध्येत्तर्हि 'तदैक्षत' इत्यादिश्रुत्युक्तमीक्षणमपि 'सत्त्वगुणधर्मेण ज्ञानेन प्रधानस्यापि सर्वज्ञत्वाद्वा साक्षिनिमित्तत्वेनेक्षितृत्वम्' इत्यनया प्रधानकारणानुवादीयरीत्योपपद्येत। परंतु न तादृश सिद्धान्तो वेदा-न्तानाम्। अपि तु सर्वेषु वेदान्तेषु चेतनं ब्रह्मैव जगत्कारणमिति प्रतीयते। अतो न प्रधानकारणानुवादेनेक्षणस्योपपत्तिरुचितेति। अत्र भाष्ये च 'समानैव हि सर्वेषु वेदान्तेषु चेतनकारणावगतिः' इत्युक्त्वा 'यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ० ३।३) 'तस्माद्वा एतस्मा-दात्मन आकाशः सम्भूतः' (तै० २।१) 'आत्मत एवेदं सर्वम्' (छा० ७।२६।१) 'आत्मन एष प्राणो जायते' (प्र० ३।३) इति प्रसिद्धान्येव वेदान्तवाक्यान्युदाहृतानि। एवं च यान्यप्रसिद्धानि वाक्यानि तेषु यदि भिन्नकारणवादः प्रतीयेत तर्हि प्रसिद्धानुरोधेनैव तान्यपि व्याख्येयानीति सूचि-तम्। अत्र तु सर्वेषां वेदान्तवाक्यानां सांख्यमतानुरोधे ब्रह्मपरत्वं नास्त्येवेति पूर्वपक्षोपपत्तिर्भवत्येवेति भावः।

निर्णीततात्पर्यश्रुतिविरोध एव ' विरोधे त्वनपेक्षं स्यात् ' इति पूर्वतन्त्रीयन्यायप्रवृत्तेः पूर्वपक्ष एवोपपादितत्वात् ।

यदपि चन्द्रिकायाम्—अस्याधिकरणस्य सौत्रस्मृतिशब्दा सङ्कोचायावैदिकस्मृतिमात्रविषयत्वसंभवे तत्सङ्कोचेन कापिल स्मृतिमात्रविषयत्वोक्त्ययोगाच्चेति पूर्वपक्षे तृतीयं दूषणमुक्तम् । तत्परिहारश्च—सतीष्वध्यात्मविषयासु बहुषु स्मृतिषु सांख्य योगस्मृत्योरेव निराकरणे यत्नः कृतः । सांख्ययोगौ हि परम पुरुषार्थसाधकत्वेन लोके प्रख्यातौ । शिष्टैश्च परिगृहीतौ । लिङ्गेन च श्रौतेनोपबृंहितौ । ' तत्कारणं सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः ' ( श्वे० ६ । १३ ) इति सांख्यस्मृति-मात्र×निरासनिर्बन्धबीजकथनपरश्रीमद्भाष्यदर्शिनां स्पष्ट एव ।

यदपि चन्द्रिकायाम्—' = महद्दीर्घवद्वा ' ( ब्र० सू० २।२। ११ ) इत्यादौ काणादिमतं दूष्यते, तथा ' रचनानुपपत्तेश्च नानुमानम् ' ( ब्र० सू० २।२।१ ) इत्यत्र सांख्यमतमपीति चतुर्थदूषणमुक्तम् । तदपि न । निर्दोषश्रुतिमूलकस्मृतिविरोधान्नि-र्मूलत्वान्महत्तत्त्वादिकार्यस्मृतेरिव तत्सधर्मतया कारणस्मृतेरप्रा-माण्यस्यैतदधिकरणप्रमेयत्वेन वक्ष्यमाणानुमानाद्यदुष्टप्रमाणमूल-कत्वादमूलत्वासिद्धिशङ्कायां तत्साध्यकानुमानदुष्टत्वस्य ' रच-नानुपपत्तेश्च ' इत्यधिकरणप्रमेयत्वेन चादोषात् । अयमत्र सि-द्धान्तनिष्कर्षः—तुल्यबलयोर्विरोधे निरवकाशेन सावकाशस्य संकोचो वक्तव्यः । न चैवं प्रकृतेऽस्ति । वेदानुसारिस्मृतीनां क्लृप्तमूलतया निश्चितप्रामाण्यकत्वात् । वेदविरुद्धानां च सांख्य-स्मृतीनां मूलं य.वदनुमीयते तावत्प्रत्यक्षश्रुतिविरोधेनाप्रामाण्य-

---

× निरासनिर्बन्धेति । ननु बौद्धार्हतकणादादिस्मृतीनामपि सर्वज्ञप्रणीतत्वे नाऽऽप्तमूलत्वादिना बलवत्त्वाद्भाष्योक्तं निरासनिर्बन्धबीजकथनमयुक्तमिति चेन् । नैवम् । कासाचिच्छिष्टैरगृहीतत्वात्कासांचिच्च शिष्टैर्गृहीतत्वेऽपि प्रधान-मल्लनिबर्हणन्यायेन सांख्ययोगस्मृत्योः खण्डने कृते सति सर्वासां स्मृतीनां ख-ण्डितप्रायत्वेनादोषात् ।

ननु स्मृत्यन्तरं द्वितीयपादे निरासिष्यत इति न तासामत्र चिन्त्यत्वमिति चेत्सम कापिलस्मृतेरपीत्याशयेनाऽऽह— = महद्दीर्घवद्वेति ।

येव भ्रमप्रतारणादिकल्पनमूलं निश्चीयत इति * न मूलश्रुतिक-ल्पनावकाशः । तथा च नाऽऽसां प्रामाण्यनिश्चयः सम्भवतीत्यु-क्ततर्कस्येष्टापत्तिशङ्कापराहतत्वान्नास्मत्पक्षविरोधिता । तदेतद-न्यस्मृतीनामप्रामाण्यमापादयता सूत्रकारेणैव सूचितम् । अन्य-स्मृतीनां प्रामाण्यानभ्युपगमे तासामप्रामाण्यापादनायोगात् । सांख्यस्मृतेः प्रमाणविरुद्धार्थकत्वस्याप्रामाण्यहेतोर्लाभात् । ननूक्तं समबलत्वं श्रुतिस्मृत्योः । दुरुक्तं तत् । श्रुतेः प्रमाणान्तरप्राप्ति-निरपेक्षाया एव प्रमाणत्वात् । स्मृतेश्च तत्सापेक्षत्वात् । कपि-लादिसिद्धाः प्रमाणान्तरेणार्थमुपलभ्य तद्बुबोधयिषया स्मृतीः प्रावोचन् । अन्यथा स्मृतीनां कथमाप्तमूलकत्वम् । कथं वा तदभावे प्रामाण्यम् । स्वतःसिद्धज्ञप्तिमूलकता च नानपेक्षत्वभ-ञ्जिका । यतो ज्ञप्तेरुत्पद्यमानाया एव दोषजन्यत्वशङ्काया अप्रामाण्यशङ्काया प्रसरात् । नन्वेवं तार्किकवद्वेदपौरुषेयत्वा-भ्युपगमापत्तिरिति चेत् । न । यतस्तार्किका वेदप्रामाण्यमाप्तप्रणी-तत्वान्न स्वत इति मन्यन्ते । तथा हि सूत्रम्—'तद्वचनादा-म्नायप्रामाण्यम्' (      ) इति । इदं च सर्वज्ञेश्वरसिद्धौ तदुक्ततया वेदप्रामाण्यसिद्धिस्तस्यां च सत्यां प्रमाणवेद-प्रसिद्धसर्वज्ञेश्वरसिद्धिरित्यन्योन्याश्रयदुष्टम् । औपनिषदास्तु—उत्पत्तौ प्रामाण्यस्य स्वतस्त्वाभ्युपगमान्न तथेति विशेषात् । न च नित्यज्ञानेऽपि भ्रमत्वं शक्यशङ्कम् । असति बाधके ज्ञानानामुत्सर्गतः प्रामाण्यात् । नन्वेतत्सिद्धान्तविरुद्धम्, दृश्य-सामान्यस्य मिथ्यात्वेनेश्वरज्ञानस्यापि मिथ्याविषयत्वलक्षण-भ्रमत्वानपवादत्वादिति चेत् । नहि मिथ्याविषयकत्वमात्रं भ्रम-त्वम् । 'इदं रजतमनिर्वाच्यमसद्वा' इति ज्ञानस्याप्यप्रामाण्य-प्रसङ्गात् । किंतु तद्वति तदनवगाहित्वम् । न चानिर्वाच्यमनि-

---

* न मूलश्रुतीति । यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र । तत्र हि 'कदा-चन स्तरीरसि' इत्यैन्द्र्या ऋचो लिङ्गाद्यावदिन्द्रोपस्थानाङ्गत्वबोधकश्रुतिं कल्प-यित्वेन्द्रोपस्थानाङ्गत्वं प्रकल्प्यते तावदेव प्रत्यक्षया 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थानाङ्गत्वस्य सिद्धत्वान्नैन्द्रीन्द्रोपस्थानाङ्गं तद्वत्प्रकृतेऽ-पि बोध्यम् ।

ग्रौत्सुक्यवादिना विषयीकुर्वतो भगवज्ज्ञानस्य तत्संभवः । न च कपिलादिज्ञानस्य नित्यतायां किंचित्प्रमाणमस्ति । तस्मान्निरस्तसमस्तदोषशङ्कया श्रुत्या तन्मूलया स्मृत्या वा न सम बाधस्य कापिलस्मृतेरिति न सावकाशत्वनिरवकाशत्वाभ्यां व्यवस्था युक्ता । किंच वेदविरुद्धसांख्यप्रवक्तुः कपिलस्य श्रुतिप्रतिपाद्यत्वं प्रसिद्धम् । कपिलमिति सामान्यश्रुतेरन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्वासुदेवनाम्नः स्मरणात् । न च तावताऽपि कपिलशब्दार्थसंदेह एवेति वाच्यम् । 'ऋषिं प्रसूतम्' इति वचनं श्वेताश्वतरगतम् । तस्याद्वितीयब्रह्मप्रतिपादन एव स्वरसामिति = चमसाधिकरणे निर्णीतम् । तेन चाद्वैतानुसारी वासुदेवांशः कपिल एव प्रतिपाद्यत इति निर्धारयितु शक्यत्वात् । किंच 'यद्वै किंचन मनुरवदत्तद्भेषजम्' ( तै० सं० २ । २ । १० । २ ) इति मनूक्तिमात्रस्य प्रामाण्यबोधकश्रुतेर्जागरूकत्वेन तदुक्तिसावकाशत्वकथनमसंगतम् । अन्यथा 'किंचन' इतिपदवैयर्थ्यापत्तेः । मनुना तु—

सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि ।

---

= चमसाधिकरण इति । अयमाशय —'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' ( श्वे० ४ । ५ ) इति श्रुतिरत्र विषयः । तत्र संशयः— किमियं श्रुतिः कापिलमुनिसंमतं स्वतन्त्रं प्रधानं प्रतिपादयत्याहोस्वित्पारमेश्वरीं तेजोबन्नान्याक्रियाकारणभूतां मायाशक्तिं ब्रूत इति । किं तावत्प्राप्तम् । सांख्यसंमतं स्वतन्त्रं प्रधानमेवेति । तथा हि—यादृशं प्रधानं सांख्यैः स्मर्यते तादृशमेवास्यां श्रुतौ प्रतीयते । तच्च प्रधानं स्त्रीलिङ्गेन प्रकृतिशब्देनापि सांख्यैर्व्यवह्रियते । अतोऽत्रत्ये स्त्रीलिङ्गे शब्दे सैव प्रकृतिः प्रतिपाद्यत इत्युक्तौ न कश्चिद्दोषः । अजाशब्दो यद्यपि च्छागायां रूढस्तथाऽप्यध्यात्मविद्याधिकारान्न तत्र वर्तितुं प्रभवति । तथा च न जायत इत्यजा किंचैका लोहितशुक्लकृष्णा च प्रकृतिर्भवत्येव । यद्यपि लोहितत्वादयो वर्णा न प्रकृत्यन्तर्भूतेषु रजःप्रभृतिषु सन्ति तथाऽपि यथा लोहितं कुसुम्भादि रञ्जयति तथा रजोगुणोऽपि रञ्जयतीति लोहित इत्युच्यते, यथा च प्रसन्नं पाथः शुक्लं भवति त-

---

१ क 'च म' इत्याकारक एव पाठ इदानींतनवैदिकानाम् ।

सर्वं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ( १२ । ९१ ) ॥ इति सार्वात्म्यं प्रशंसता कापिलं मतं निन्दितमिति गम्यते ।

---

थैव सत्त्वगुणोऽपि प्रसन्नत्वसाम्याच्छुक्ल इत्युच्यते, एवमावरकं मेघादि यथा कृष्णं भवति तथैव तमोगुणोऽप्यावरकत्वसाम्यात्कृष्ण इत्युच्यते । सा च त्रैगुण्यान्विता प्रकृतिर्बह्वीः प्रजा महदादिरूपा जनयति । तां च प्रकृतिं जीवरूपोऽनादिः पुरुषोऽनुशेते । नाम, अविद्ययाऽऽत्मत्वेन तामुपगम्य सुखी दुःखी मूढोऽहमित्यविवेकेन संसरति । अन्यस्त्वनादिः पुरुष ईश्वर उत्पन्नविवेकज्ञानत्वेन विरक्तः सन्, तां जहातीत्यर्थः । तस्माच्छ्रुतिमूलैव प्रधानपदवाच्या साङ्ख्यसंमता प्रकृतिरिति प्राप्ते सिद्धान्तः—नानेन मन्त्रेण कपिलमतं श्रुतिसंमतमिति प्रतिपादयितुं शक्यते । अयं हि मन्त्रो न स्वातन्त्र्येण कंचिदपि वादं ब्रूते । सर्वेष्वपि वादेषु यथा कथंचिद्रीत्याऽजात्वादेः कल्पयितुं शक्यत्वात् । यथा हि गिरिगुहादावपि कथंचिदर्वाग्बिलत्वादेः सत्त्वात् 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इत्यस्मिन्मन्त्रेऽयमेव प्रसिद्धश्चमसोऽभिप्रेत इति न निरूपयितुं शक्यते तथैव निरुक्तमन्त्रेऽपि विशेषो न प्रतिपादयितुं शक्यते । ननु तत्र 'इदं तच्छिर एष ह्यर्वाग्बिलः' इति वाक्यशेषाच्चमसविशेषप्रतीतिः स्यादेव । प्रकृते तु तादृशप्रमाणाभावात्साङ्ख्यसंमतं प्रधानं नैतन्मन्त्रप्रतिपाद्यमिति निश्चेतुमशक्यमिति चेत् । उच्यते—तेजोबन्नात्मकभूतत्रयलक्षणैवास्मिन्मन्त्रेऽजा विज्ञेया न तु कपिलसंमता गुणत्रयलक्षणा प्रकृतिः । तथा हि—छान्दोग्ये हि तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपाणि 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इत्यनेन वाक्येन प्रतिपादितानि । तान्येव तेजोबन्नानि 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यस्मिन्मन्त्रे प्रत्यभिज्ञायन्ते । रोहितादिशब्दसामान्यात् । असंदिग्धेन हि संदिग्धस्य निगमनं कर्तव्यम् । सर्वशाखाप्रत्ययन्यायात् । किंच श्वेताश्वतरोपनिषद्यपि 'ब्रह्मवादिनो वदन्ति । किं कारणं ब्रह्म' इत्युपक्रम्य 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' ( श्वे० १ । ३ ) इत्यनेनोपक्रमवाक्येन समस्तजगद्विधायिनी पारमेश्वरी शक्तिरेव प्रतिपाद्यते । तथोपसंहारेऽपि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यत्र 'यो योनिं योनिमधितिष्ठत्येकः' ( श्वे० ४ । १०—११ ) इत्यत्र च पारमेश्वरी शक्तिरेव प्रतीयते । तस्मान्न कापिलसंमतं प्रधानम् 'अजामेकाम्' इत्यनेन मन्त्रेण प्रतिपाद्यते । किंत्वद्वैतिसंमता सैव परमेश्वरी शक्तिरेवेति सिद्धम् ।

कपिलो हि न सार्वात्म्यं मन्यते। आत्माभेदानुपगमात्। श्रुत्यनुरोधिन्यः स्मृतयश्च—'यत्तत्सूक्ष्ममविज्ञेयम्' इति परं ब्रह्म प्रकृत्य 'स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते' इति चोक्त्वा 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इत्याहुः। तथाऽन्यत्रापि 'अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते' इत्याहु।

अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः।
स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूयः॥

इति पुराणे। भगवद्गीतासु च—

अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा॥ इति।

परमात्मानमेव च प्रकृत्याऽऽपस्तम्ब पठति—'तस्मात्कायाः प्रभवन्ति सर्वे मूलं शाश्वतिकः स नित्यः' (ध० सू० १।८।२३।२) इतीश्वरकारणत्ववादिन्य.। महाभारते—

बहवः पुरुषा राजन्नुताहो एक एव तु। इति विचार्य—
बहवः पुरुषा राजन्सांख्ययोगविचारिणाम्॥

इति परपक्षमुपन्यस्य तद्व्युदासेन—

बहूनां पुरुषाणां हि यथैका योनिरुच्यते।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्॥ इत्युपक्रम्य—

ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित्॥
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः।
एकश्चरति भूतेषु स्वैरचारी यथासुखम्॥

इति सर्वात्मतायां च भाष्योक्ताः॥ १॥

अमूलत्वाच्च सांख्यस्मृतेरप्रामाण्यमाह—

इतरेषां चानुपलब्धेः॥ २॥ इति।

इतरेषां प्रधानादितरेषां महदादितत्त्वानां लोकवेदयोरनुपलब्धेः। तथा च स्वतन्त्रप्रधानवादिनी कापिलस्मृतिरप्रमाणं मूल-

१ क. 'निष्कले सं'।

शून्यत्वान्महत्तत्त्वादिबोधककापिलस्मृतिवत् । महत्तत्त्वादयो यथा न श्रुत्यादिसिद्धास्तथोपपादितम् 'न सङ्ख्योपसङ्ग्रहात्०' (ब्र० सू० १।४।११) इत्यत्र भाष्यव्याख्यानयोः। अत्र निर्दोषश्रुतिमूलकस्मृतिविरोधात् साङ्ख्यस्मृतेरप्रामाण्यं प्रथमसूत्र उक्तम् । द्वितीये च निर्मूलत्वादप्रामाण्यम् । निर्मूलत्वं च स्वसमानविषयकादुष्टकरणजन्यज्ञानमूलकत्वरूपसमूलत्वाभावो प्रामाण्ये हेतुः। वेदे व्यभिचारवारणाय स्मृतित्वमन्यद्वा हेतु विशेषणमवसेयम् ।

यत्तु चन्द्रिकायाम्—यच्चोक्तं परैः प्रधानादितरेषां महदादीनामनुपलब्धेश्च साङ्ख्यमतमयुक्तमिति 'इतरेषाम्' इतिसूत्रार्थं मनूद्य तत्र, 'न सङ्ख्योपसंग्रहात्' इत्यत्रैव श्रुत्यादिषु महदादीनामनुपलब्धेर्+दर्शितत्वादिति दूषणमुक्तम् । तदपि न सत् । निर्मूलमहत्तत्त्वादिकार्यस्मृतिसधर्मतया कारणस्मृतेरप्रामाण्यस्यैतत्सूत्रार्थस्य दूषणासंशितत्वात् । कार्यस्मृतेरप्रामाण्या-

---

+ दर्शितत्वादिति । अयमाशयः—'अजामेकाम्' इत्ययं मन्त्रो यद्यपि पूर्वोक्तरीत्या कापिलमतानुकूलो न भवति तथाऽपि 'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्' (बृ० ४।४।१७) इत्ययं मन्त्रस्तन्मतानुकूलो भवत्येवेत्ययं मन्त्रोऽत्र विषयः । तत्र संशयः—किमयं मन्त्रः साङ्ख्यतत्त्वपरो वाऽन्यपर इति । कुतः पुनरयं संशयः । पञ्चजनशब्दे योगरूढ्यानिश्चयाभावात् । योगो नामावयवशक्तिः । रूढिर्नाम समुदायशक्तिः । अत्र ह्यवयवशक्त्या साङ्ख्यीयतत्त्वानि प्रतीयन्ते । समुदायशक्त्या च रथकारपञ्चमाश्चत्वारो वर्णा ब्राह्मणक्षत्रियादयः प्रतीयन्ते । अतः संशयः । किं तावत्प्राप्तम् । कापिलमतसमतानि पञ्चविंशतिसङ्ख्याकानि तत्त्वान्येव । तथा हि—'योगाद्रूढिर्बलीयसी' इति न्यायेन यद्यपि रूढेः प्राबल्यं तथाऽपि यथा तत्त्वविद्याधिकारे छागाया तात्पर्याभावादजापदे रूढित्यागस्तथा पञ्चविधमनुष्येषु तात्पर्याभावात्पञ्चजनशब्देन रूढिं त्यक्त्वा तत्त्वानि ग्राह्याणि । जनशब्दश्च कथंचित्तत्त्वेषु व्याख्येयः । तत्त्वानि चेह पञ्च प्रत्येकं पञ्चसङ्ख्यायोगीनि पञ्चविंशतितत्त्वानि भवन्ति । पञ्चशब्दद्वयश्रवणात् । तानि च 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः' (सा० कौ० ३) इत्यनया कारिकया परिगणितानि ।

अस्यार्थः—सङ्क्षेपत एतच्छास्त्राभिमेयतत्त्वग्रामस्यावान्तरप्रकाराश्चत्वारो बोध्याः। तत्र कश्चिदर्थः प्रकृतिरेव। कश्चिदर्थो विकृतिरेव। कश्चित्प्रकृतिविकृतिः। कश्चिदनुभयरूपः। तत्र 'मूलप्रकृतिरविकृतिः' इत्यनेनाऽऽद्योऽर्थः प्रतिपाद्यते। मूलं चासौ प्रकृतिश्चेति विग्रहः। विश्वस्य कार्यसंघातस्य सा मूलम्। न त्वस्या मूलान्तरमस्ति। अनवस्थाप्रसङ्गादिति तदर्थः। 'महदाद्याः प्रकृतिविकृतयः सप्त' इत्यनेन तृतीयोऽर्थः प्रतिपाद्यते। प्रकृतयश्च ता विकृतयश्चेति विग्रहः। महत्तत्त्वं ह्यहङ्कारस्य प्रकृतिर्मूलप्रकृतेस्तु विकृतिः। तथाऽहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणां च प्रकृतिर्महत्तत्त्वस्य च विकृतिः। पञ्चतन्मात्राणि तत्त्वान्याकाशादीनां भूतानां प्रकृतयो विकृतयश्चाहङ्कारतत्त्वस्येति तदर्थः। 'षोडशकस्तु विकारः' इत्यनेन द्वितीयोऽर्थः प्रतिपाद्यते। षोडशसङ्ख्या परिमाणं यस्येत्यर्थे 'तदस्य परिमाणम्' इत्यधिकारस्थेन 'सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इत्यनेन सङ्घार्थे कन्प्रत्यये व्युत्पादितः षोडशकशब्दः। तुशब्दोऽवधारणे भिन्नक्रमः। ततश्च पञ्च महाभूतान्येकादशेन्द्रियाणि चेति षोडशको गणो विकार एव। न कस्यचित्प्रकृतिः। ननु पृथिव्यादीनामपि गोघटवृक्षादयस्तथा तद्विकारभेदानां पयोबीजादीनां दध्यङ्कुरादयो विकृतयः सन्त्येवेति विकार एवेत्यवधारणं न सङ्गच्छत इति चेत्। मैवम्। गोघटादीनां पृथिव्यादिभ्यस्तत्त्वान्तरत्वाभावादवधारणस्य युक्तत्वात्। ननु किमिदं तत्त्वान्तरत्वं नामेति चेत्। शृणु। स्ववृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्। अत्र स्वशब्द उपादानत्वाभिमततत्त्वपरः। तथा च यथाऽहङ्कारादेः स्वोपादानमहदावृत्तिद्रव्यत्वसाक्षाद्व्याप्याहङ्कारत्वादिजातिमत्त्वेन महदादिभ्यस्तत्त्वान्तरत्वं भवति न तथा गोघटादीनां पृथिव्यादिभ्यस्तत्त्वान्तरत्वम्। तेषां हि स्वोपादानपृथिव्यादिवृत्तिद्रव्यत्वसाक्षाद्व्याप्यपृथिवीत्वादिजातिमत्त्वेनोपादानावृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वाभावात्। 'न प्रकृतिर्न विकृतिः पुरुषः' इत्यनेन तु चतुर्थोऽर्थः प्रतिपाद्यते। एवं च कापिलमतं श्रुतिसम्मतमिति प्राप्ते ब्रूमः—सङ्ख्योपसङ्ग्रहादपि प्रधानादीनां श्रुतिमत्त्वप्रत्याशा न कर्तव्या। कुत इति चेत्। नानाभावात्। नाना ह्येतानि पञ्चविंशतिस्तत्त्वानि। न ह्येषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति। येन पञ्चविंशतिसङ्ख्याकेषु तत्त्वेष्ववान्तरसङ्ख्याकानि तत्त्वानि निविशेरन्। यथा द्वावश्विनौ सप्तर्षयोऽष्टौ वसवश्चेति सप्तदशेत्यत्राश्वित्वादिकमागाय द्वित्वादिविशिष्टाः प्रविशन्ति नान्यथा। ननु पञ्चशब्दद्वयेन स्वव्याप्यन्यूनसङ्ख्याद्वारेण पञ्चविंशतिसङ्ख्यैव लक्ष्यते। यथा 'पञ्च सप्त च वर्षाणि

स्कारणस्मृतेरप्रामाण्यं युक्तमित्यभिप्रायकं श्रीमद्भाष्ये निरुक्तसू-त्रार्थस्यातिस्पष्टत्वेन दर्शितत्वादन्यस्मिन्नर्थे शङ्कानुदयाच्च ॥२॥

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

अत्र ब्रह्मवादसाक्षाद्विरोधियोगस्मृतिविरोधादध्यायपादसं-गतिः । संशयपूर्वपक्षावाह—

योगस्मृत्याऽस्ति सङ्कोचो न वा वेदे समन्वये ।
धर्मे वेद सावकाशः सङ्कोचोऽनवकाशया ॥

इति संशयपूर्वपक्षादिकं प्रागुक्तदिशाऽवसेयम् ।

यत्तु चन्द्रिकायाम्—यच्चोक्तम् 'विद्यामेतां योगविधिं च कृत्स्नम्' (का० २ । ६ । १८) इत्यादिश्रुत्या योगस्य परिगृहीतत्वेन न सांख्यतुल्यतेत्यधिकाशङ्कायाम्—एतेनेति । तन्न । 'तत्कारण सांख्ययोगाधिगम्यं ज्ञात्वा देव मुच्यते सर्व-पाशैः' (श्वे० ६ । १३ ) इत्यादिषु श्रुतिषु सांख्यस्यापि परि-गृहीतत्वेनाधिकाशङ्काभावात् । तत्र वैदिक ज्ञानमेव सांख्यश-ब्दार्थश्चेदिहापि ज्ञानोपाय एव योगशब्दार्थेऽस्त्विति दूषणमु-क्तम् । तच्छ्रीमद्भाष्यहृदयापरीक्षानिबन्धनम् । तथा हि—योग विषये 'तां योगम्' (का० २ । ६ । ११ ) इति 'विद्या मेतां योगविधिं च' ( का० २ । ६ । १८ ) इत्यादिना वैदि कानि लिङ्गा युक्त्वा "योगशास्त्रेऽपि 'अथ तत्त्वदर्शनोपायो योगः' इति सम्यग्दर्शनार्थत्वेनैव योगोऽङ्गी क्रियते । अतः स-प्रतिपन्नार्थैकदेशत्वादष्टकादिस्मृतिवद्योगस्मृतिरप्यनपवदनीया भ-विष्यतीति । इयमप्यधिकाशङ्काऽतिदेशेन निवर्त्यते" इति । अधिकाशङ्कोपपादने 'अथ तत्त्वदर्शनोपायो योग' इति हि-रण्यगर्भप्रणीतयोगशास्त्रीयसूत्रस्य भाष्ये प्रदर्शितत्वाद्धैरण्यगर्भ-स्मृत्यवष्टम्भेनायं पूर्वपक्ष इति गम्यते । तत्र च संभवत्येवाप्य-धिकाशङ्का । सा चेत्थम्—ऋषिं प्रसूत कपिलं यस्तमग्रे'

---

न ववर्ष शतक्रतु' इत्यनेन द्वादशवार्षिकीमनावृष्टिं कथयन्ति तद्वदत्रापीति चेत् । नैवम् । लक्षणावृत्तिसमाश्रयणरूपदोषात् । एवं च न कापिलमत श्रुति-समतामिति सिद्धान्त इति ।

---

१ क °ते । तत्स्प्र° ।

( श्वे० ५ । २ ) इत्यादिश्रुतिर्न वासुदेवावतारकपिलपरा । तस्याऽऽजानसिद्ध्या घोरेयस्येतरानुग्राह्यत्वायोगात् । लीलापरत्व च संभवत्यां गतावनुचितम् । नापि तन्त्रप्रणेतृकपिलपरा । अग्रेपदासगते । तस्य हिरण्यगर्भपुत्र(पर)त्वनैव प्रसिद्धेः । किंतु 'हिरण्यगर्भः समवर्ततताग्रे' 'हिरण्यगर्भं पश्यत जायमानं यो ब्रह्माण विदधाति पूर्वम्' इत्यादिबहुश्रुतिसिद्धप्रथमजत्वादिलिङ्गमत्यभिज्ञानुरोधेनैका कपिलश्रुतिरतिप्रसिद्धमपि तन्त्रप्रणेतार परित्यज्य प्रसिद्धमपहायैककपिलवर्णहिरण्यगर्भपरतया नेया। न च निरपेक्षवेदविरोधादुक्तस्मृतेरप्रामाण्यम् । 'यद्वै किंचन मनुरवदत्तद्भेषजम्' इति श्रुत्या हिरण्यगर्भवचनमात्रस्य प्रामाण्योक्त्यनुरोधेन वेदान्तानामेव तदनुरोधेन व्याख्येयत्वात्। अन्यथा किंचनेतिपदवैयर्थ्यापत्तेः । न चोक्तश्रुतिः प्रसिद्धमनूक्तीनामेव प्रामाण्य बोधयति, न हिरण्यगर्भोक्तीनामिति कथमेतदिति शङ्क्यम् । तस्यां मनुशब्दस्य समष्टिमनोभिमानिहिरण्यगर्भपरत्वात् । तथा हि—तैत्तिरीशाखास्थ[स्य] 'मानवी ऋचौ धाय्ये कुर्यात्' इति विधेश्चयमर्थवादः—'यद्वै किंचन मनुरवदत्' इति । तद्विधिविधेययो[र्ऋ]चो 'देवानां य इन्मनो यजमान इयक्षति' ( ऋ० सं० ६ । २ । ४० ) इति श्रवणादेव मनोभिमानिहिरण्यगर्भप्रकाशकताऽवगम्यते । तथा च विधिगतस्य मानवी इतिपदस्य मनुप्रकाशिके इत्यर्थपरत्वात् । मनुपदस्य स्मृतिप्रणेतृमनुपरत्वे तदसंभवात् । विधिपद(गत)स्य मनुगत(पद)स्य हिरण्यगर्भपरत्वे तदैकार्थ्याय विधिवाक्योपात्त ऋग्विशेषस्तदानुगुण्येन व्याख्येयः । तदर्थवादगतमनुशब्दस्यापि हिरण्यगर्भपरत्वमेव युक्तम् । ईश्वरप्रतिपादकत्वाच्च वेदान्तपक्षानुसारित्वेऽप्यस्य हैरण्यगर्भयोगशास्त्रस्य स्फुटम् " न च 'इतरेषां चानुपलब्धे' इति न्यायेन तन्निरासस्य ( तन्निरासः ) । 'यद्वै किंचन' इति हिरण्यगर्भोक्तिमात्रप्रामाण्यमभिदधानायाः श्रुतेरेव कार्यस्मृत्यादे' समूलव्यवस्थापकत्वात् । अन्यथा ' किंचन ' इतिपदवैयर्थ्यस्योक्तत्वात् " इत्युक्ताऽ

---

ऽभ्यधिका शङ्का च परिहृता भाष्ये— अर्थैकदेशसंमतिपत्तावप्य- र्थैकदेशविप्रतिपत्तेरिति । सिद्धान्तमाह—

प्राप्ताऽपि योगतात्पर्याद्वातत्पर्याञ्च सा प्रमा ।
अवैदिकप्रधानादावसंकोचस्तथाऽप्यनः ॥ इति ।

अथ भावः—अस्तु तादृशर्चोर्हिरण्यगर्भप्रकाशकता तथाऽपि विधिगतस्य तद्धितप्रत्ययस्य न प्रकाश्यप्रकाशकसबन्धपरत्वम् । अपि तु ' यद्वै किंच ' इतिवाक्यशेषानुसारेण तासां मनुना दृष्टा मानवीत्यर्थ एवाऽऽश्रयणीयः । तथा च हिरण्यगर्भप्रकाशकयो- रपि मनुसूक्तान्तर्गतया मनुना दृष्टत्वसभवान्न क्लेशेन मनुशब्द स्य प्रसिद्धमनुत्यागेन हिरण्यगर्भपरत्व युक्तमिति । तथा च प्रधानाद्यंशे प्रत्यक्षविरोधेन तदंशे योगशास्त्रस्य तात्पर्यकल्पनेऽ- सङ्गनिर्गुणपुरुषप( प्र )व्रज्याद्युपदेशेन निवृत्तिनिष्ठत्वादिरूपभा ष्योक्ताशान्तप्रामाण्यस्य रक्षितुमशक्यतया तदंशे यथाश्रुतार्थे तात्पर्यमेव नास्तीति कल्प्यते । तात्पर्याभावेऽपि तत्प्रतिपादनं परमात्मनोऽतिसूक्ष्मतया तस्मिन्सहसा चित्तस्य योजयितुमश क्यतया प्रथम[त]स्तदुपयोगितया स्थूलविषयं योग वक्तुम् । तत्-

* पूर्वपक्षासमुन्थानमात्रे हेतोरासिद्धता ।
द्वितीयेऽभ्यधिका शङ्काऽनुपपत्तिस्तृतीयके ॥

इति चन्द्रिकाकारोक्त सर्वं परास्तमिति दिक् ।

आनन्दतीर्थीयास्तु—'स्मृत्यनवकाश० ' इत्यादिसूत्रत्रयमे- कमधिकरणं स्मृतिविरोधनिरासकम् । तत्र घुर्णा(णा)क्षरतुल्यानां वेदानामाप्तमूलकत्वाभावात्सर्वज्ञप्रणीतानां च पाशुपतादिस्मृतीनां च रुद्रादिप्रत्यक्षमूलकत्वेन श्रुतितो बलवत्त्वात्तदनुसारेणैव वेदार्थो वर्णनीय इति न विष्णोर्जगत्कारणत्व युक्तम् । पाशुप- तादिस्मृतिषु रुद्रादेरेव जगत्कारणत्वोक्तेरिति प्राप्ते–विष्ण्वादि- प्रत्यक्षमूलकपाञ्चरात्रादिस्मृतीनां समबलत्वे प्रतिरोधाद्विष्ण्वाद्यु-

---

* पूर्वपक्षासमुत्थानमिति । अनेन हि श्लोकेन ' स्मृत्यनवकाश० ' इत्यादिसूत्रत्रये परमतनिरासार्थं दत्तस्य दूषणत्रयस्य सग्रहश्चन्द्रिकाया कृत । आद्ये सूत्रे पूर्वपक्षस्यासमुत्थान दोष । द्वितीये सूत्रे हेतोरासिद्धता । तृतीये त्वभ्यधिकाया शङ्काया अनुपपत्तिर्दोष इति तदर्थ. ।

कस्य श्रुतिषु संवाददर्शनेन रुद्राद्यपेक्षया तत्तद्विष्ण्वादिप्रणीत-त्वादधिकबलत्वे बाधात्। तादृशस्मृतिसचिवया श्रुत्याऽतितरां बाधाच्च न पाशुपतादिस्मृतीनां प्रामाण्यम्। अतो नोक्तवेदप्रामा-ण्येन विष्णोर्जगत्कारणत्वसमन्वयानुपपत्तिः। अत्र च विशेषे-णावैदिकनिखिलस्मृतिमत्येकावलम्बनेन पूर्वपक्षा बहव चन्द्रि काद्युक्ताः। तथा हि चन्द्रिकायाम्—अत्र च येषां पाशुपतसां ख्यादीनां मते वेदस्यापौरुषेयत्वप्रामाण्ये तन्मते स्मृत्यनुसारेण श्रुतिर्नेयेति श्रुतिप्रामाण्येन × पूर्वपक्षः। येषां तु कणादादीनां मते वेदस्य पौरुषेयत्वप्रामाण्ये तेषां कणादादीनां स्मृतेः स्पष्टा-र्थत्वं सयुक्तिकत्वं चेति तत्र बीजमिति तेऽपि पूर्वपक्षिणः। बौद्धादिमते स्वाप्तप्रणीतबौद्धाद्यागमविरोधादाप्तामणीतो वेदोऽ प्रमाणमित्येव पूर्वपक्षः। अत एव सुधायाम्—'पाशुपतसांख्य बौद्धार्हतादि' इति बौद्धादिशब्द एवमादि। संकोचे प्रमाणा-भावादवैदिकत्वेन संकोचस्तु न्यायप्राप्तत्वात्सह्य इत्याहुः।

तदसत्। रुद्रप्रणीतानामपि परस्परविरुद्धानां बहूनामागमाना-मुपलम्भेन तत्प्रणीतागमान्तरविरुद्धायाः पाशुपतस्मृतेराप्तमूल कत्वमाश्रित्यापौरुषेयश्रुतिस्वारस्यभङ्गस्य शङ्कितुमशक्यत्वात्। कणादादिस्मृत्यवलम्बी पूर्वपक्षोऽपि न युक्तः। तेषामपि रुद्रो-पदेशादेव तादृशशास्त्रप्रणेतृत्वस्मरणात्। कपिलकमलासनयो राप्तौ तु श्रुतिरुपदर्शिता। नन्वेवं सांख्ययोगयोः परस्परविरो धादप्रामाण्यप्रसक्त्या तन्मतेऽपि कथं पूर्वपक्षसिद्धिरिति चेत्। आशयानवबोधात्। तथा हि—आद्याधिकरणे योगाधिकरण-सिद्धान्तन्यायेन योगस्मृतेरीश्वरांशे न्याये तात्पर्यम्। इतरांशे तु न विरोधः। तयोरुपायभूतयोगप्रतिपादकतया मन्वादिस्मृति-वत्सावकाशतेति वा द्वितीयेऽप्याद्यसिद्धान्तन्यायेन प्रयोक्तुरना-प्तत्वमाश्रित्य पूर्वपक्षोत्थितेरप्रत्यूहत्वात्। पशुपतिप्रणीतानां च स्मृतीनां परस्परविरुद्धत्वादेकतरप्रामाण्यनिर्धारणे कारणाभा-वात्। तत्प्रामाण्यावलम्बनेन पूर्वपक्षो न युक्त इत्युक्तम्। पाश्च

---

× पूर्वपक्ष इति। समूलस्मृतिविरोधे निर्मूलश्रुतिप्रामाण्यायोगात्स्मृत्यनुसारेण श्रौतोपक्रमादि नेयमिति तेषां भाव।

रात्रादिस्मृतिविरुद्धबौद्धादिस्मृत्यवलम्बी पूर्वपक्षोऽप्यनयैव सरण्या निरस्तः । भगवत्प्रणीतपाञ्चरात्रादिस्मृतिविरुद्धायास्तत्प्रणीतशाक्यादिस्मृतेराप्तमूलताया दुर्निश्चेयत्वादिति । रुद्राद्युक्तस्य रुद्रादेर्जगत्कारणत्वादे श्रुतिषु यथासवादस्तथोपपादितं प्रागिति जगत्कारणत्वांशे पाशुपतस्मृत्यपेक्षया पाञ्चरात्रादेरधिकबलत्वासिद्धेश्च । यश्च ‘ इतरेषां चानुपलब्धेः ’ इति सूत्रस्येतरेषां पाशुपतस्मृतिषूक्तामामतीन्द्रियेभ्य इतरेषां फलानुष्ठानात्तदुक्तकर्मानुष्ठानपरित्यागयो॰ कृतयोरपि प्रत्यक्षतोऽनुपलब्धेस्तदंशे पाशुपतादिस्मृतीनामप्रामाण्यमित्यर्थ इति । तन्न । वैगुण्यादपि फलानुपलम्भोपपत्तेः । ‘ न विलक्षणत्वात् ’ ( ब्र० सू० २.१.४ ) इत्यत्र कारीर्यादिस्थले त्वया तथैव फलानुपलम्भस्य समर्थितत्वाच्च । श्रुतौ प्रामाण्यनिश्चयेन तन्निर्वाहाय वैगुण्यं तत्र कल्पितं मयेति चेत् । अत्राप्यप्रामाण्यस्यानिश्चयेनोत्सर्गतः प्राप्तप्रामाण्यरक्षणाय तथा कल्पयितुं युक्तत्वात् । अत्राप्रामाण्यं प्रमाणान्तरेण निश्चितमिति चेत् । तर्हि सूत्रवैयर्थ्यात् । निश्चितेऽप्यर्थे हेत्वन्तराभिधान तदैवोचित भवति यदि प्राचीनं हेतुमनुपजीव्यास्य स्वसाध्यसाधनक्षमत्वम् । तच्च न संभवतीति । ‘ एतेन योग प्रत्युक्त ’ इत्यत्र योगस्मृतौ दृष्टार्थाविसंवादात्प्रामाण्यमाशङ्क्य प्रथमं स्वेदनं द्वितीयं गात्रभञ्जनमिति तदुक्तक्रमानुपलम्भान्न तत्प्रामाण्यमित्यर्थवर्णनमपि न युक्तम् । ‘इतरेषाम्’ इत्यत्र योग्याना फलानामिव क्रमस्यापि विवक्षासभवेन तृतीयसूत्रस्यापि त्वन्मते व्यर्थत्वात् ॥

मीमांसान्यायपञ्चास्यराघवाचार्यसूरिणाम् ।
शिष्यस्यैषा कृतिर्भूयाद्रघुनाथस्य सन्मुदे ॥

इति स्मृत्यधिकरण समाप्तम् ।

---

## अथ न विलक्षणाधिकरणम् ।

### न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ १ ॥

अत्र ब्रह्मणो जगदुपादानत्वसाक्षाद्विरोधिन्यायनिरासादभ्या-

यादिसंगतिः । यदुक्तं श्रुत्यनुरोधिस्मृत्यप्रामाण्यप्रसङ्गात्कापिलस्मृतेरप्रामाण्य इष्टापत्तिरिति । तदयुक्तम् । कापिलस्मृतेरेव श्रुत्यनुरोधित्वात् । नहि ब्रह्मणो वियदादिप्रकृतितावादिश्रुतिविरोधात्सांख्यस्मृतेरप्रामाण्यं संभवति । विलक्षणत्वादितर्कविरोधेन श्रुतिभिर्ब्रह्मणि वियदादिप्रकृतिताया एव बोधयितुमशक्यत्वात् । स्मृत्यधिकरणपूर्वपक्षोपष्टम्भकसांख्याचार्योक्तरीत्या ब्रह्मणि वियदादिप्रकृतिताबोधकश्रुतीनां तात्पर्यस्य समर्थनीयत्वादिति प्रत्यवस्थानादनन्तरसंगतिः । यद्वाऽमूलानां स्मृतीनां समन्वयाविरोधित्वेऽप्यव्याहतव्याप्तिपक्षधर्मताकानां न्यायानां समन्वयविरोधिता निरपवादैवेति * सा बोध्या । अत्रोक्तसमन्वयो न युक्त उत युक्त इति, तदर्थं ब्रह्मणो जगदुपादानत्वाभावसाधने विलक्षणत्वादिहेतवो दुष्टा उतादुष्टा इति संशये— प्रधानमेव सुखदुःखमोहात्मकत्वात्तादृशजगदुपादानं न तु ब्रह्म । अतादृशत्वात् । सजातीययोरेव प्रकृतिविकारभावात्मकोपादानोपादेयभावदर्शनात् । अत्र विशेषव्याप्ताविद्या दृष्टान्त । यद्यद्विलक्षणं तन्न तत्प्रकृतिकमिति सामान्यव्याप्तौ यथा हिरण्यविलक्षणो घटो न हिरण्यप्रकृतिक इति दृष्टान्त इति पूर्वपक्षस्तादिदमुक्तम्—'न विलक्षणत्वात्' इति । अस्य जगतोऽचेतनत्वादिना वैलक्षण्यात्साधर्म्याभावान्न ब्रह्मोपादानम् । यद्वाऽस्य ब्रह्मणो न तथात्वं न जगत्प्रकृतित्वम् । विलक्षणत्वात् । तथात्वं च वैलक्षण्यं च शब्दाच्छ्रुतेरिति सूत्रार्थः । श्रुतिश्च—'विज्ञानं चाविज्ञानं चाभवत्' (तै० २ । ६) इति चेतनाचेतनविभागेन ब्रह्मजगतोर्वैलक्षण्यं बोधयन्ती भाष्योदाहृता । + यत्तु चन्द्रिकायाम्—

---

* सा बोध्येति । अनन्तरसंगतिर्बोध्येत्यर्थः ।

+ यत्तु चन्द्रिकायामिति । 'अभदिति चेन्न०' ( ब्र० सू० २ । १ । ७ ) इत्यस्मिन्सूत्रस्थचन्द्रिकायामित्यर्थः । अत्रेदं बोध्यम्—आनन्दतीर्थीयमते 'स्मृत्यनवकाश०' इत्यारभ्य 'एतेन योग०' इत्यन्तं सूत्रत्रयात्मकं प्रथममधिकरणम् । न 'विलक्षणत्वात्' 'दृश्यते तु' इति सूत्रद्वयात्मकं द्वितीयमधिकरणम् । 'अभिमानिव्य०' 'दृश्यते च' इति सूत्रद्वया-

= अस्मद्रीत्या स्वीयप्रमाणविरोधेन परकीयप्रमाणाप्रामाण्ये पूर्वत्रोक्तेऽत्र स्वीयप्रमाणाप्रामाण्यनिरास एव युक्तो न स्वपक्षे न्यायविरोधपरिहार इति उक्तरीत्या पूर्वपक्षे दूषणमुक्तम् । तदसत् । सांख्योक्तन्यायानां श्रुत्यर्थनिर्णाय(र्णाय)कानां बलवत्त्वस्य पूर्वं शङ्कितया तेषां दुर्बलत्वानुपपादने सांख्यस्मृति विरोधनिरासापर्यवसानेन तन्निर्वाहाय तादृशन्यायानां दौर्बल्यस्याप्यवश्यवक्तव्यत्वेनोक्तपूर्वपक्षावश्यकत्वात् । अन्यथा प्रक्रान्तस्मृत्यविरोधपरीक्षामपरिसमाप्य केवलयुक्तिविरोधेन समन्वयाक्षेपचिन्ताया असंगतत्वापत्तेः । स्वीयप्रमाणाप्रामाण्यपरिहारस्त्वत्र न युक्तः । वेदप्रामाण्यवादिभिः कपिलकणभक्षादिभिस्तदप्रामाण्यस्य शङ्कितुमशक्यत्वात् । बौद्धार्हतादीनां पूर्वपक्षित्वे च तदनभ्युपगतेन वेदप्रामाण्याधीनसिद्धिकेन वेदनित्यत्वादिना तत्प्रामाण्यसाधनस्याशक्यत्वात् । वर्णनित्यतया च बौद्धाद्यागमानामपि प्रामाण्यापत्तिः । आनुपूर्वीनित्यता च न वेदप्रामाण्यमन्तरा सेत्स्यति । युक्तिमात्रस्य बौद्धाद्यागमसाधारण्यात् । प्रामाण्यस्य स्वतस्त्वादिना तत्साधने च नित्यत्वरूपवैलक्षण्यानुसरणं तस्य श्रुतिसिद्धत्वकथनं च व्यर्थम् । श्रुतिप्रामाण्यायावश्यानुसरणीयेन स्वतःप्रामाण्येनैव कार्यं ।

त्मकं तृतीयमधिकरणम् । 'असदिति चेन्न' इत्यारभ्य 'एतेन शिष्टा०' इत्यन्तं सूत्रषट्कात्मकं चतुर्थमधिकरणम् । अन्यमते तु—'स्मृत्यनवकाश०' 'इतरेषां चा०' इति सूत्रद्वयात्मकं प्रथममधिकरणम् । 'एतेन योगः प्रत्युक्तः' इत्येकसूत्रात्मकं द्वितीयमधिकरणम् । 'न विलक्षणत्वात्०' इत्यारभ्य 'तर्काप्रतिष्ठाना[०' इत्यन्तं सूत्राष्टकात्मकं तृतीयमधिकरणम् । 'एतेन शिष्टा०' इत्येकसूत्रात्मकं चतुर्थमधिकरणमिति ।

= अस्मद्रीत्येति । एतच्च पदं चन्द्रिकायामनद्दूषणारम्भे नास्ति । किंतु "अपि चास्मद्रीत्या 'अभिमानिव्यपदेश' इत्यादेरवश्य०" इत्यादिद्वितीयदूषणपङ्क्त्यारम्भे वर्तते । 'उक्तरीत्या' इत्युक्तत्वाद्विरिहस्थितमत्र तद्दानींतनचन्द्रिकापुस्तकपाठभेदेन पतितमिति कल्पयाम । 'स्वीयप्रमाण-विरोधेनेत्यादि विरोधपरिहार इति' इत्यन्तम् 'दूषणम्' इत्यस्य विशेषणं बोध्यम् ।

दिश्रुतिप्रामाण्यस्यापि सिद्धेः । न च तत्राप्यस्ति विषयबाधः । येन तत्रापवादकसत्त्वमाशङ्क्येत । स्वरूपयोग्यतालक्षणस्य श्रुतिबोधितकारणत्वस्य क्वचित्कार्यानुत्पत्त्या विरोधाभावात् । प्रत्युत वाक्यनित्यतायामेवास्ति प्रत्यक्षविसंवादः । तस्यान्यथा-सिद्धिकल्पनं च वेदप्रामाण्यमन्तरा न सुकल्पनम् ।

यदपि चन्द्रिकायाम्—वैलक्षण्यादनुपादानत्वशङ्कायास्त्व-न्मते*ऽदृश्यत्वाधिकरण एव निरासा[1]च्चेनास्य पुनरुक्ततेति

* अदृश्यत्वाधिकरण एवेति । अयमाशयः—तदधिकरणे हि 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इतीयं श्रुतिर्विषयः । तत्र संशयः—किमयमद्रेश्यत्वादिगुणको भूतयोनिः साङ्ख्यसंमतं प्रधानं स्यादथवा शारीरो जीवः स्यादाहोस्वित्परमेश्वर इति । किं तावत्प्राप्तम् । प्रधानं जीवो वेति । कुत इति चेत् । उच्यते—'परिणामो विवर्तो वा सरूपस्योपलभ्यते । चिदात्मना तु सारूप्यं जडानां नोपपद्यते ॥ जडं प्रधानमेवातो जडयोनिः प्रतीयताम् । योनिशब्दो निमित्तं चेत्कुतो जीवनिराक्रिया ॥' लोके हि परिणममानसरूपा एव परिणामा उपलभ्यन्ते । यथोर्णनाभिलालापरिणामा लूतातन्तवस्तत्सरूपाः । विवर्ता अपि विवर्तमानसरूपा एवोपलभ्यन्ते न तु विरूपाः । यथा रज्जुविवर्ता उरोरगादयो रज्जुसरूपा एव भवन्ति । न तु कदाऽपि रज्ज्वां कुञ्जर इति कश्चिदपि विपर्यस्यति । नापि हेमपिण्डपरिणामो लूतातन्तुर्भवति । अत्यन्तवैरूप्यात् । तस्माज्जडं प्रधानमेव जडस्य जगतो योनिरिति सिद्धम् । यदि तु योनिशब्दो निमित्तकारणपरस्तदा तद्धर्माधर्मद्वारा भूतजातस्योपार्जनाज्जीवोऽपि जगत्कारणं संभवतीति पूर्वपक्षे प्राप्ते सिद्धान्तः—योऽयमदृश्यत्वादिगुणको भूतयोनिः स परमेश्वर एव स्यान्नान्यः । कथमेतदवगम्यत इति चेत् । उच्यते—परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते 'यः सर्वज्ञः सर्ववित्' इति । नहि प्रधानस्याचेतनस्य बोधादिपरिच्छिन्नदृष्टेर्जीवस्य सर्वज्ञत्वं सर्ववित्त्वं वा संभवतीति । ननु सारूप्याभावात्कथं चिदात्मनः परिणामः प्रपञ्च इति चेत् । उच्यते—विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः । अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥ इति । तस्मात्परमेश्वर एव भूतयोनिरिति ।

१ क 'निरस्तत्वेन'।

दूषणमुक्तम् । तदप्यसत् । तत्रत्यपूर्वपक्षसिद्धान्तोपोद्बलनाय निबन्धादौ प्रकृतपूर्वपक्षसिद्धान्तन्यायोपदर्शनेऽपि तस्य तदधिकरणप्रमेयत्वाभावात् ।

यच्च चन्द्रिकायाम्—केवलोपादानस्य कार्यसालक्षण्यनियमेऽपि त्वन्मते तन्तून्प्रत्यूर्णनाभ्यादेरिव जगत्प्रति ब्रह्मवैलक्षण्येऽपि सिद्धान्त्यभिमतस्य निमित्तत्वे सत्युपादानत्वस्य सम्भवेन पूर्वपक्षः सिद्धान्ताविरुद्ध इति दूषणमुक्तम् । तदप्यसत् । ऊर्णनाभिस्थलेऽप्यचेतनांशस्य तदीयलालादेरेवोपादानत्व बुद्धेरेव च कर्तृत्वम् । तदससर्गाग्रहमात्रेणाऽऽत्मनः कर्तृत्वव्यवहार इति वदत पूर्वपक्षिण सांख्यस्य मते चेतनस्याचेतनोपादानतायामसप्रतिपत्तेः । मदभ्युपगमश्च न सांख्यरीत्या पूर्वपक्षानुत्थितिप्रयोजकः ।

यच्च चन्द्रिकायाम्—किंच त्वन्मतेऽविद्यादेस्तद्विशिष्टस्य वोपादानत्वात्तस्य च जगत्सालक्षण्याच्छुद्धस्य विलक्षणत्वेऽपि जगद्भ्रमाधिष्ठानत्वादात्मनि चानात्मादिभ्रमस्य सांख्यादिभिरपि स्वीकारात्कथं पूर्वपक्षोदय इति दूषणमुक्तम् । तदप्येतेन परास्तम् । उपाधिभेदेऽप्युपाधिविशिष्टस्य शुद्धानतिरिक्तत्वात्तस्योपादानता न युक्तेति सांख्यरीत्या पूर्वपक्षोदयस्य बालेनापि सुबोधत्वात् । कार्याभिन्नकारणतारूपमुपादानत्व शुद्धस्यापि । पर तद्विवर्तोपादानतारूपमिति द्योतनाय शुद्धस्य भ्रमाधिष्ठानत्वमुच्यते । तादृश चोपादानत्वं न सांख्यानामनुमतम् । तैरन्यथाख्यातेरिवानिर्वचनीयाख्यातेरपि निषेधात । तथा च सांख्यसूत्राणि—'जन्मादिव्यवस्थात पुरुषबहुत्वम्' ( सां० सू० १ । १४९ ) 'उपाधिर्भिद्यते न तु तद्वान्' ( सां० सू० १ । १५१ ) 'नाविद्यातोऽप्यवस्तुना बन्धायोगात्' ( सां० सू० १ । २० ) 'वस्तुत्वे सिद्धान्तहानिः' ( सां० सू० १ । २१ ) 'विरुद्धोभयरूपा चेत्' ( सां० सू० १ । २३ ) 'न तादृक्पदार्थाप्रतीतेः' ( सां० सू० १ । २४ ) । तत्र भाष्यम्—ननु चैतन्यैक्येऽपि तत्तदुपाधिविशिष्टस्यातिरिक्ततामभ्युपगम्य व्य-

---

१ क 'तन्तुभ्र'। २ क गता साल'।

वस्थोपपादनीया। तत्राऽऽह—उपाधिरिति। उपाधिरेव नाना न तु तद्वानुपाधिविशिष्टोऽपि नानाऽभ्युपेयः। विशिष्टस्यातिरिक्तत्वे नानात्मता सत्ताया एवं शास्त्रान्तरेऽप्यभ्युपगमापत्तेरित्यर्थः। विरुद्धोभयम्—सद्विलक्षणमसद्विलक्षणं चेति। किंचा निर्वचनीयख्यातिपक्षेऽपि कुम्भकाचादौ सर्वत्र रजताध्यासादर्शनेनाधिष्ठानारोप्ययोः सालक्षण्यस्याऽऽवश्यकतया विवर्तोपादानताऽपि न ब्रह्मणः संभवतीति पूर्वपक्षिणः परस्य शङ्काऽऽ-तिसुलभैव।

यदपि चन्द्रिकायाम्—किंच मम मते तथात्वशब्दोक्तस्यावैदिकस्मृतिसालक्षण्यस्य निषेध्यता। तव तु तदनुक्तस्य ब्रह्मकारणकत्वस्य तथा मम विलक्षणत्वादित्यत्र स्मृत्यनवकाशेति प्रकृतस्य परपक्षप्रमाणस्य प्रतियोगिता। तव तु तदप्रकृतस्य ब्रह्मण इति दूषणमुक्तम्। तदपि शिथिलम्। मम मतेऽपि पूर्वाधिकरणयोर्वेदान्ता जगत्कारणत्वेन ब्रह्मपरा इति साध्यघटकत्वेनोपस्थितस्य जगदुपादानत्वस्य तथात्वशब्देनोपस्थितस्यैव निषेध्यत्वात्। * यद्वेत्याद्युक्तद्वितीयसूत्रार्थे साध्यघटककर्तृत्वोपादानत्वनिरूपकतया प्रकृतस्य जगतो वैलक्षण्यस्य प्रतियोगित्वाच्च। न चोक्तद्वितीययोजना न भाष्यकारानुमता। 'यदुक्तं चेतनं ब्रह्म जगतः कारणं प्रकृतिरिति तन्नोपपद्यते कस्माद्विलक्षणत्वादस्य विकारस्य' इति तत्र योजनादर्शनादिति वाच्यम्। 'अत आगमवशेनाऽऽगमानुसारितर्कवशेन च चेतनं ब्रह्म जगतः कारणं प्रकृतिश्च' इत्येतदधिकरणोपसंहारभाष्यानुरोधेन [1]ईदृशयोजनाया एव भाष्यसंमतत्वात्। जगतो न ब्रह्म प्रकृतिकत्वमिति प्रथमोपदर्शितोपक्रमभाष्यानुसारियोज-

* यद्वेत्याद्युक्तेति। 'न विलक्षणत्वात्०' इत्यस्य वाक्यार्थद्वयं पूर्वं प्रतिपादितम्। तच्च यथा—अस्य जगतोऽचेतनत्वादिना वैलक्षण्यात्साधर्म्याभावान्न ब्रह्मोपादानम्। यद्वाऽस्य ब्रह्मणो न तथात्वं न जगत्प्रकृतित्वं विलक्षणत्वात्। तथात्वं च वैलक्षण्यं च शब्दाच्छ्रुतेरिति सूत्रार्थ इति।

१ क 'द्वान्। नोपा°। क २ व शब्दान्तरेणाभ्यु°।

नायामपि न क्षतिः । 'जन्माद्यस्य यत.' ( ब्र०सू०१।१।२ ) इति सूत्र इवात्रापीदशब्देन प्रत्यक्षादिसिद्धजगत्परामर्शसंभवात् । परमप्रकृतस्य ब्रह्मणो वैलक्षण्यप्रतियोगित्वसंभवात् । ब्रह्मनिष्ठोपादानतानिरूपकत्वस्य पूर्वाधिकरणयोः साध्यघटकत्वेनोपस्थितस्य तथात्वशब्देन परामर्शसंभवाच्च । त्वन्मते पर स्मृतिशब्देन स्त्रीलिङ्गेनोपस्थितायाः पाञ्चरात्रादिस्मृतेः सर्वनाम्ना श्रुतिबुबोधयिषायाम् ' नाऽऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्य ' ( ब्र० सू० २ । ३ । १७ ) इत्यत्र स्त्रीलिङ्गेनैव तेन निर्दिश्यमानायाः * श्रुतेश्चातथाभूतेनेदशब्देन परामर्शो न स्वरसः ।

यदपि चन्द्रिकायाम्— जगतो ब्रह्मवैलक्षण्यस्य प्रत्यक्षसिद्धत्वात्तत्र ' शब्दात् ' इति शब्दोक्तिरयुक्तेति दूषणमुक्तम् । तत्परिहारश्च भाष्यदर्शिनामतिस्पष्ट एवेति भाष्यादर्शनमूलकमेव तत् । तथा हि—'प्रसिद्धश्चायं चेतनाचेतनविभागो लोके । तस्माद्ब्रह्मविलक्षणत्वान्नेद जगद् ब्रह्मप्रकृतिकम्' इति 'न विलक्षणत्वात्' इति सौत्रभाग व्याख्याय ' योऽपि कश्चिदाचक्षीत श्रुत्वा जगतश्चेतनप्रकृतिकतां तद्बलेनैव समस्त जगच्चेतनमवगमिष्यामि । प्रकृतिरूपस्य विकारेऽन्वयदर्शनात् । अविभावन तु चैतन्यस्य परिणामविशेषाद्भविष्यति । यथा स्पष्टचैतन्यानामप्यात्मनां स्वापमूर्छाद्यवस्थासु चैतन्य न विभाव्यत एव काष्ठलोष्टादीनामपि चैतन्यं न विभावयिष्यते ' इति शङ्काविशेषनिराकरणपरतया तादृशसौत्रभागस्य ' अनवगम्यमानमेव हीदं लोके समस्तस्य वस्तुनश्चेतनत्वम् । चेतनप्रकृतिकत्वश्रवणाच्छब्दशरणतया केवलयोत्प्रेक्ष्यते । तच्च शब्देनैव विरुध्यते ' इति व्याख्यातत्वात् ।

यदपि चन्द्रिकायाम्—किंच यदि ' विज्ञान चाविज्ञान च ' ( तै० २ । ६ । १ ) इति श्रुतिर्वैलक्षण्ये प्रमाणम् । कथं तर्हुपादानत्वे न प्रमाणम् । ' सच्च त्यच्चाभवत् ' ( तै० २ । ६ ।

---

* श्रुतेश्चातथेति । सर्वनाम्नेत्यस्य ' अतथाभूतेनेदशब्देन ' इत्यनेन सहान्वय । परामर्शो न स्वरस इत्यत्र हेतु —श्रुतिबुबोधेत्यारभ्य श्रुतेश्चेत्यन्त ।

---

१ क 'क्षत्वा' । २ क 'शब्दो' ।

१ ) इति पूर्ववाक्येनोपादानत्वप्रतीतेः । अपि च विज्ञानावि-ज्ञानशब्दौ न कार्यकारणपरौ । किंतु त्वत्पक्षे सत्यदादिशब्दव-त्कार्यपरावेव । + चशब्दाभ्यां प्रत्येकं भवनान्वयप्रतीतेरिति दूषणमुक्तम् । तदपि न सत् । विज्ञानं चेतनं निर्दिश्य ततः पार्थक्येनाविज्ञाननिर्देशे कृते चेतनपदार्थप्रतिसंबन्धी ततोऽन्यो बाधकाभावादचेतनः सिध्यति । उपादानतायां च निर्विकारश्रुतिरूपबाधकसद्भावादुपादानत्वश्रुतिर्गौणी भवतीति विशेषस्य शङ्कायां संभवात् । अत एवापि चेत्याद्यपि निरस्तम् । चेतनातिरिक्तवस्तुसिद्धिमात्रेण प्रकृतपूर्वपक्षसंगत्या विज्ञानाविज्ञानशब्दयोः कार्यकारणपरताया अस्माभिरप्यनाश्रयणात् । कारणस्य चेतनता तु ब्रह्मवाद्यनुमता ' सत्यं ज्ञानम् ' ' यः सर्वज्ञः सर्ववित् ' इत्यादिश्रुतिसिद्धा चेति ।

यदपि चन्द्रिकायाम्—अपि[२] चानुपादानत्वे यथाकथंचिद्वैलक्षण्य हेतुश्चेत् ' मृदब्रवीत् ' इत्यादेरभिमानिपरत्वाभावेऽपि शुद्ध्यशुद्ध्यादिनाऽपि वैलक्षण्यस्य प्रत्यक्षादिनाऽपि सिद्धेस्तदुपपादनार्थं द्वितीयसूत्रं व्यर्थम् । चेतनाचेतनत्वाभ्यामेव वैलक्षण्य हेतुश्चेदचेतनवृश्चिकादिकं प्रत्यचेतनस्य गोमयादेरेवोपादानतया चेतनस्याचेतनोपादानतायाः क्वाप्यदर्शनेन[३] तृतीयसूत्रप्रयुक्तं[४] स्यादिति दूषणमुक्तम् । तत्रोच्यते—वैलक्षण्येन कार्यकारण भावानुपपत्तिं वदतः पूर्वपक्षिणः संभावित वैलक्षण्यमात्र बाधकत्वेनेहाभिप्रेतम् । तच्च चेतनत्वाचेतनत्वरूपं शुद्ध्यशुद्ध्यादिरूपं च । शुद्ध्यशुद्धी च सुखदुःखमोहनात्मकत्वतदभावपर्यवसिते भाष्य एवोपदर्शिते । एवं च श्रुतिबलाद्ब्रह्मणि शुद्धेरनुभवानुसारेण जगतोऽशुद्धेश्चैकदेशिनाऽप्यङ्गीकाराच्चेतनत्वाचेतनत्वाभ्यां वैलक्षण्यस्य कथंचित्परिहारेऽपि शुद्ध्यशुद्धिभ्यां वैलक्षण्य तेन दुष्परिहारमिति ' न विलक्षणत्वादस्य तथात्वम् ' इत्यंशेन पूर्वपक्षो दृढीकृतः । परमार्थतस्तु चेतनाचेतनत्वाभ्यां वैल-

+ चशब्दाभ्यामिति । ' विज्ञानं चाविज्ञानं च ' इति प्रत्येकं श्रुताभ्यामित्यर्थः ।

१ क °वनक्रियययाऽन्व° । २ क °पि च य° । ३ क °र्शनात्तृती° । ४ क °सूत्रायोग° ।

क्षण्यमपि दुष्परिहारमेवेत्यभ्युपगमवादपरित्यागेन मुख्यं समाधानम् । 'तथात्वं च शब्दात्' इति प्रकृतसूत्रैकदेशेन द्वितीयसूत्रेण च समर्थ्यत इति नासंगतिवार्ताऽपि ॥ ४ ॥

ननु चेतनोपादानकत्वस्य श्रुतार्थापत्त्या जगतश्चेतनत्वं कल्प्यत इति न युक्तम् । 'विज्ञान चाविज्ञान च' इतिप्रत्यक्षश्रुतिविरोधेन * श्रुतार्थापत्तेरनुन्मेषादिति हि 'तथात्व च शब्दात्' इति

---

* श्रुतार्थापत्त्येति । अय भाव –अर्थापत्तिर्नाम, उपपाद्यज्ञानेनोपपादककल्पनम् । केनाचिद्वस्तुना विना यदनुपपन्न भवति तदुपपाद्यम् । यस्याभावे सति कस्यचिद्वस्तुनोऽनुपपत्तिर्भवति तदुपपादक बोध्यम् । तथा चोपपाद्यज्ञान करणमुपपादकज्ञान फलमिति पर्यवसन्नम् । यथा रात्रिभोजनेन विना दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृश पीनत्वमुपपाद्यम् । यथा वा रात्रिभोजनस्याभावे सति तादृशपीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकम् । अर्थापत्तिशब्दे च समासद्वय सभवति । अर्थस्याऽऽपत्ति कल्पनेति षष्ठीतत्पुरुष । अर्थस्याऽऽपत्ति कल्पना यस्मादिति बहुव्रीहिश्च । यदा षष्ठीतत्पुरुषस्तदा रात्रिभोजनकल्पनारूपाया प्रमितावर्थापत्तिशब्दो वर्तते । यदा च बहुव्रीहिस्तदा कल्पनाकरणे पीनत्वादिज्ञाने वर्तते । एव च फलकरयोरुभयोरप्यर्थापत्तिशब्दप्रयोगो भवतीति बोध्यम् । सा चार्थापत्तिर्द्विविधा । दृष्टार्थापत्ति. श्रुतार्थापत्तिश्चेति । तत्र दृष्टार्थापत्तिर्यथा—पुरावर्तिशुक्त्यादौ 'इद रजतम्' इति प्रतिपन्नस्य रजतस्य 'नेद रजतम्' इति निषिध्यमानस्य रजतस्य सत्यत्वे सत्यनुपपन्नमिति रजतस्य सद्भिन्नत्व सत्यत्वात्यन्ताभाववत्त्व वा मिथ्यात्व कल्पयतीति । श्रुतार्थापत्तिर्नाम श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तरकल्पनम् । यथा 'तरति शोकमात्मवित्' इत्यत्र श्रुतस्य शोकशब्दवाच्यबन्धजातस्य ज्ञाननिवर्त्यत्वानुपपत्त्या बन्धस्य मिथ्यात्व कल्प्यत इति । श्रुतार्थापत्तिश्च द्विविधा । अभिधानानुपपत्तिरभिहितानुपपत्तिश्चेति । तत्राभिधानानुपपत्तिर्नाम वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्याऽन्वयाभिधानोपयोगिपदान्तरकल्पनम् । यथा द्वारमित्युक्ते 'पिधेहि' इति पदान्तरस्याध्याहार क्रियत इति । अभिहितानुपपत्तिस्तु वाक्यावगतेऽर्थेऽनुपपन्नत्वेन ज्ञाते सत्यर्थान्तरकल्पनरूपा । यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र क्षणिकत्वेनावगतस्य ज्योतिष्टोमस्य स्वर्गसाधनत्वानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यत इति ।

सौत्रंभागेन विवक्षितम् । तच्चायुक्तम् । मृदादीनां भूतानामिन्द्रियाणां चाचेतनत्वाभिमतानाम् 'मृदब्रवीत्' 'ता आप ऐक्षन्त' 'तत्तेज ऐक्षत' 'ते हीमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः' (बृ० ६ । १ । ७) इति 'ते च वाचमूचुस्त्वं न उद्गायेति' [इति] वक्तृत्वादिलिङ्गेन चेतनत्वावगमात् । न च मृदादीनां वक्तृत्वं न शक्यशङ्कं प्रत्यक्षविरोधादिति वाच्यम् । सर्गाद्यकालीनमृदो वक्तृत्वाभिधायिश्रुतावुक्तविरोधशङ्कानवकाशात् । न चैवमप्याधुनिकमृदश्चेतनत्वासिद्धिरिति वाच्यम् । चेतनोपादेयत्वेन तत्सिद्धेः । चेतनकार्यादर्शने च हेतुः प्रागुक्त एव । तथा च चैतन्याभिव्यक्तितदभावावलम्बनेन 'विज्ञानं चाविज्ञानं च' इति श्रुतिर्नेया । एतेन—'किंच 'मृदब्रवीत्' इत्यादौ मृदादीनां वक्तृत्वेक्षितृत्वादिसिद्धावपि 'तथात्वं च शब्दात्' इति पूर्वसूत्रोक्तविज्ञानाविज्ञानादिवैलक्षण्यापरिहारान्मृदादीनां वक्तृत्वशङ्कायोगाच्चेति तत्परिहारार्थं द्वितीयसूत्रमयुक्तम्' इति चन्द्रिकोक्तमपास्तमित्याशङ्कां परिहरति—

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्दः पूर्वाक्षिप्तं प्रति प्रकृतामाकाङ्क्षामपनुदन्पूर्वपक्षमेव दूषयति न तत्तत्सूत्रगततुशब्द इव पूर्वपक्षमपवदति । 'मृदब्रवीत्' इत्यादिश्रुत्या भूतेन्द्रियाणां चेतनत्वं नाऽऽशङ्कनीयम् । यतो चेतनोचितवदनलपनादिरूपव्यवहारयोग्यमृदाद्यभिमानिचेतनदेवताव्यपदेशोऽयम् 'मृदब्रवीत्' इत्येवंजातीयकः । कस्मात् । विशेषानुगतिभ्याम् । विशेषश्च भोक्तॄणां भूतेन्द्रियाणां च चेतनाचेतनविभागलक्षणः प्रागभिहितः । सर्वचेतनतायां च नासावुपपद्यते । अत एव कौषीतकिनः प्राणसंवादे करणमात्राशङ्काविनिवृत्तयेऽधिष्ठातृदेवतापरिग्रहाय 'एता ह वै देवता अहंश्रेयसे विवदमानाः' इति 'ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा' (२ । १४) इति च पठन्ति । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ० आ० २ ४।२।४)

---

१ b 'त्यात्वज्ञातुं'। २ क 'नभिसयुं'।

इत्येवमादिका च श्रुतिः करणेष्वनुग्राहिकां देवतामनुगतां दर्शयति । विस्तरेण च सूत्रार्थो भाष्यनिबन्धादौ द्रष्टव्यः ।

यत्तु चन्द्रिकायाम्—यद्यपि पूर्वमीमांसादौ पूर्वपक्षसूत्राणि सन्ति तथाऽपि तत्राऽऽद्याध्यायाद्यपाद एव पूर्वपक्षसूत्रसद्भावादिह च त्वन्मतेऽपि प्रथमाध्याये तदभावेनान्यत्रापि सूत्रकृतः पूर्वपक्षत्वसूचकजैमिन्यादिग्रहणाभाव व्याकरणकल्पसूत्रादाविव तदकरणशैलीनिश्चये सति * सर्वं शास्त्रम् ।

पूर्ववादिमत किंचित्किंचित्तत्त्ववेदकम् ।
उपासनापरं किंचिदिति कस्माद्विनाश्यते ॥

अथैकः पादोऽध्यायो वा पूर्वपक्षः पादान्तरमध्यायान्तरं वा सिद्धान्त इति स्यादिति सूत्रद्वयस्य पूर्वपक्षप्रतिपादकत्वे दूषणमुक्तम् । तत्रेदं वक्तव्यम्—अत्रैव सूत्रान्तरेषु सर्वथा च तन्त्रान्तरेष्वदृष्ट चेदित्यादिशब्दादिपूर्वपक्षलिङ्गरहितस्य 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' (ब्र० सू० २।१।२१) इति सूत्रैकदेशपञ्चम्यन्तभागस्य पूर्वपक्षांशत्व कल्पयतो भवतः सम्प्रदायविरुद्धार्थप्रवक्तृमूर्धन्यस्य तन्त्रान्तरसिद्धशैल्यविरुद्धपूर्वपक्षरचनाप्रतिक्षेपोक्तिरुपहासास्पदैव । 'यदि जीवकर्तृत्वस्य श्रुतौ व्यपदेशादिसिद्धत्वाज्जीवः स्वतन्त्रकर्तेत्युच्यते तर्हि तस्य हिताकरणमहितकरणं च न स्यात्' इति हि 'इतरव्यपदेशात्' इति सूत्रस्य जयतीर्थादिभिरर्थो वर्णितः । त्वन्मतेऽपि पूर्वाध्यायाद्यपादद्वयादावदृष्टस्यापि प्रासङ्गिकविचारस्य तृतीयपादे 'तदुपर्यपि बादरायणः सम्भवात्' (ब्र० सू० १।३।२६) इत्यादावित्रमाध्यायान्तरेऽदृष्टस्यापि पूर्वपक्षसूत्रप्रणयनस्य द्वितीयाध्यायादावुक्तवायोगात् । पादान्तरेऽदर्शनस्यैवाध्यायान्तरेऽदर्शनस्याविशेषेणाकिंचित्करत्वात् । उक्तं च जयतीर्थेन—'तदुपर्यपि बादरायण संभवात्' इति सूत्र

* सर्वं शास्त्रमिति । अत्र श्लोकस्थेन विनाश्यत इत्यनेन सहान्वयो बोध्यः ।

१ क ये पूर्वपक्षसूत्राभा° । २ क °न्यत्रेत्यत्र° । ३ क °वेन व्या । क ४ °पाद पू° । ५ क °न्तर सि । ६ क °सक्त इ° ।

'अत्र देवानां ब्रह्मविद्याधिकारसमर्थनादस्ति शास्त्रादिसंगतिः । प्रासङ्गिकत्वान्नाध्यायादिसंगतिर्गवेषणीया' इति । दृश्यते च न्यायपञ्चाध्याय्यां प्रथमाध्यायेऽदृष्टमपि 'समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः' (गौ० सू० २ । १ । १) 'विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च' (गौ० सू० २ । १ । २) 'विप्रतिपत्तौ च संप्रतिपत्तेः' (गौ० सू० २ । १ । ३) 'तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः' (गौ० सू० २ । १ । ५) इत्यादिपूर्वपक्षसूत्रप्रणयनं द्वितीयाध्याय इति न किंचिदेतत् ॥ ५ ॥

## दृश्यते तु ॥ ६ ॥

यदुक्तं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकं, यद्यद्विलक्षणं तन्न तत्प्रकृतिकमिति व्याप्तेरिति । तन्न । लोके विलक्षणादपि गोमयादेर्वृश्चिकादेश्चेतनस्य, चेतनत्वेन प्रसिद्धाद्विलक्षणात्पुरुषादेरचेतनस्य केशलोमादेरुत्पत्तिदर्शनेन हेतोर्व्यभिचारात् । नन्वचेतनान्येव वृश्चिकादिशरीराण्यचेतनानां गोमयादीनां कार्याणि तथाऽचेतनान्येव पुरुषादिशरीराण्यचेतनानां केशनखादीनां कारणानीति चेत् । किं ततः । तावता वैलक्षण्यापरिहारात् । वैलक्षण्यं ह्यनौपाधिकभेदवत्त्वम् । अनौपाधिकत्वं च प्रतियोग्यवृत्तिधर्मावच्छिन्नानुयोगिताकत्वं परस्परावृत्तिधर्मवत्त्वं यथाकथंचिद्भेदवत्त्वं वा स्यात् । त्रिविधस्यापि गोमयपुरुषादिषु वृश्चिकादिशरीरकेशनखलोमादिषु च सत्त्वात् । तथाहि—अचेतनत्वेऽपि वृश्चिकपुरुषशरीरादिकं भोगायतनं भवति, न गोमयकेशनखादिकमिति । गोमयपुरुषादीनां रूपरसादिकमन्यदेवान्यदेव वृश्चिककेशनखलोमादीनामिति । पारिणामिकस्वभावानतिरेकस्य दुष्परिहरत्वात् । अत्यन्तसारूप्ये च प्रकृतिविकारभावस्यानुपपत्तेश्च । विपक्षे बाधकस्य सत्त्वाच्च । यद्वा हेतूक्तं वैलक्षण्यमनौपाधिकभेदवत्त्वं तत्प्रयोजकपरस्परावृत्तिधर्मवत्त्वं वा । तच्च प्रकृतिविकारयोः परमतेऽपि दृश्यत इत्यर्थः । इत्थं परेषां मतम्—तदेवं महदादिषु कार्यत्वं प्रसाध्य

---

१ क, °शास्त्रस° ।

सांप्रतं तैः प्रकृत्यनुमानेऽनुक्तं विशेषमाह—'कार्यात्कारणानुमानं तत्साहित्यात्' ( सां०सू०१।१३५ )। कार्यान्महत्तत्त्वादेर्लिङ्गात्सामान्यतो दृष्टं कारणानुमानं यदुक्तं तत्ताटस्थ्यनिवृत्तये तत्साहित्यात्कार्यसाहित्येनैव कर्तव्यम् । 'सदेव सोम्येदमग्र आसीत्' 'तम एवेदमग्र आसीत्' इत्यादिश्रुत्यनुसारात् । तद्यथा—महदादिकं स्वोपहितत्रिगुणात्मकवस्तूपादानकं कार्यत्वाच्छिलामध्यस्थप्रतिमावच्चैलादिवच्चेत्यर्थः । अत्रानुकूलतर्कः प्रागेव दर्शितः ॥ १३५ ॥ तस्याः प्रकृतेः कार्याद्वैलक्षण्यं विवेकार्थमाह—अव्यक्तं त्रिगुणलिङ्गात् ( सां० सू० १।१३६ ) । त्रिगुणलिङ्गान्महत्तत्त्वादिरूपात्कार्यादपि मूलकारणमव्यक्तं सूक्ष्मम् । महत्तत्त्वस्य हि सुखादिगुणः साक्षात्क्रियते । प्रकृतेश्च गुणोऽपि न साक्षात्क्रियत इति । प्रधानं परमाव्यक्तं महत्तत्त्वं तु तदपेक्षया व्यक्तमित्यर्थः ॥ १३६ ॥ ननु परमसूक्ष्मं चेत्तर्हि तस्यापलाप एवोचित इत्याकाङ्क्षायां पूर्वोक्तं स्मारयति—तत्कार्यतस्तत्सिद्धेर्नापलापः ( सां० सू०१।१३७ ] । सुगमः॥१३७। इत्येव रीत्या सांख्यसूत्रभाष्यपर्यालोचनायां हि कार्यकारणयोरुक्तानौपाधिकभेदवत्त्वादिकं दुर्वारमेव । अस्यां हि प्रक्रियायां तत्तत्कार्योपहितप्रकृतिजन्यत्वं तत्तत्कार्याणामुक्तम् । यद्यवस्थान्तरापन्ना प्रकृतिरेव कार्यं तदा कार्यात्प्रागभिव्यक्तकार्यावस्थावत्स्वोपहितत्वाभावेनोक्तानुमानं बाधितं स्यात् । न च यथाकथंचित्कार्यावस्थावत्स्वोपहितत्वं साध्यघटकमिति वाच्यम् । तथाऽप्यनभिव्यक्तकार्यावस्थावत्या प्रकृतौ तादृशस्वोपहितत्वाभावेनोक्तदोषस्य दुर्वारत्वात् । स्वोपधानाविवक्षायां न ताटस्थ्यनिवृत्तिरिति स्पष्टमेव । अन्यथा 'कार्यात्कारणानुमानं तत्साहित्यात्' ( सां० सू० १ । १३५ ) इति सूत्रभाष्यासंगतेः । ननु यद्यतो विलक्षणं तत्तदुपादानकं नेति सामान्यव्याप्त्युपष्टम्भानुमानस्य व्यभिचारादिदोषदुष्टत्वेऽपि वियदादि न ब्रह्मप्रकृ-

---

१ °द्वैधर्म्यम् । २ क °गुणाल्लिङ्गा° । ३ क °त् । अभिव्यक्तात्त्रिगुणान्म° । ४ ग °त्वाद° । ५ °दिर्गु° । ६ क °र्क्तं स्मा° । ७ °गमम् ।

त्विकं तदीययावत्स्वभावानुवृत्तिशून्यत्वात्तदीयस्वभावसामान्यशून्यत्वात्तत्तादात्म्यशून्यत्वाद्वाऽविद्यावदित्यनुमानानि निराबाधान्येवेति चेत्। न। परमतेऽप्युक्तरीत्या विकारे महदादौ यावत्स्वभावाननुवृत्त्या सर्वत्र प्रकृतिविकारभावोच्छेदप्रसङ्गेन तदीययावत्स्वभावाननुवृत्त्या तदनुपादानकत्वस्य साधयितुमशक्यत्वात्। सर्वत्र पक्षे सत्स्वभावस्य सिद्धान्तिनाऽभ्युपगमात्। द्वितीयानुमाने हेतोरसिद्धत्वात्। तृतीयानुमाने दृष्टान्ताभावः। सर्वस्य सच्चिद्ब्रह्मतादात्म्याभ्युपगमात्। अनादिभावत्वस्योपाधित्वाच्च। अधिकं भाष्यादावगन्तव्यम्।

यत्तु चन्द्रिकायाम्—तृतीयं चायुक्तम्। गोमयादिवद्ब्रह्मणः *पूर्वरूपहानेन जगद्भवनाभावेन दृष्टान्तोक्त्ययोगाच्चेति दूषणमुक्तम्। तदसत्। उपादानोपादेययोर्वैलक्षण्योपदर्शनमात्रेण प्रकृतसिद्ध्या गोमयादिदृष्टान्ते ब्रह्मात्यन्तसादृश्यविरहस्याकिंचित्करत्वात्॥ ६॥

## असदिति चेन्न प्रतिषेधमात्रत्वात्॥ ७॥

कार्यकारणयोरैक्ये ह्युत्पत्तेः प्राक्कारणसत्त्वे तदभिन्नस्य कार्यस्यापि सत्त्वावश्यंभावात्सदेव कार्यमुत्पद्यत इति शक्य वक्तुम्। वैलक्षण्येऽप्युपादानोपादेयभावः संभवतीति वदता त्वयाऽचेतनस्य जगतश्चेतनब्रह्मविलक्षणत्वाङ्गीकारात्। वैलक्षण्यस्याभेदपरिपन्थित्वाज्जगद्ब्रह्मणोरैक्यायोगेनोत्पत्तेः प्राक्कारणसत्त्वेऽपि कार्यसत्त्वस्य समर्थयितुमशक्यत्वादुत्पत्तेः प्रागसत्कार्यस्यासत्त्वं प्रसज्येत। इष्टापत्तौ सत्कार्यहानिरिति चेत्। प्रतिषेधमात्रत्वात्। त्वदुक्तवाक्यस्यार्थशून्यत्वेन प्रतिषेधवाक्यमात्रत्वान्नास्य किंचित्प्रतिषेध्यमस्ति। न ह्ययं प्रतिषेधः प्रागुत्पत्तेः कार्यस्य सत्त्वं प्रतिषेद्धुं शक्नोति। तथा हि—सत्कार्यवादो नाम प्राक्कारणात्मना परमार्थसतः कार्यस्योत्पत्तिरित्युपपत्तेः प्राक्सूक्ष्मरूपेण वर्तमानमेव कार्यमुत्पद्यत इति वा वाद। तत्राऽऽद्य-

* पूर्वरूपहानेनेति। यथा प्रच्युतगोमयत्वाद्यवस्थानामेवावयवाना वृश्चिकादिशरीरोपादानत्व भवति न तथा जगदुपादानभूतानामवयवाना ब्रह्मस्वभावरहिताना तत्त्वमिति भाव.।

पक्षस्तावन्निराबाध एव। इदानीमिवोत्पत्ते प्राक्कारणात्मना कार्यसत्त्वानपायात्। नहीदानीं कारणात्मानमन्तरेण कार्यसत्त्वाऽस्ति। 'सर्वं त परादाद्योऽन्यत्राऽऽत्मनः सर्वं वेद' (बृ० २।४।६) इत्यादिश्रवणात्। ननु प्राक्कारणात्मना परमार्थसत इत्यस्योत्पत्तेः प्राक्काले वर्तमान यत्परमार्थसत्कारणं तदात्मन इत्येवार्थ.। अन्यथा कार्याभिन्नकारणतारूपोपादानत्वानुपपत्तेः। तथा च विलक्षणयोः कथमभेद इति चेत्। आशयानवबोधात्। नहि वयमुपादानोपादेययोर्ब्रह्मजडयोः स्वरूपैक्यं वदामः। अपि तूपादाने ब्रह्मणि कल्पितस्य विलक्षणप्रपञ्चस्य पारमार्थिक रूप ब्रह्मैवेति ब्रह्मव्यतिरेकेणासत्त्वं शुक्तिकायां कल्पितविलक्षणरजतस्य शुक्तिकाव्यतिरेकेणासत्त्वमिव। तथा चोत्पत्तेः प्रागपि प्रपञ्चस्य पारमार्थिकस्वरूपभूत ब्रह्मास्तीत्येतावता सत्कार्यवादोक्तिरिति। द्वितीयकल्पस्तु विस्तरेणोपपादयिष्यते श्रीमद्भगवत्पादैः 'तदनन्यत्वमारम्भणशब्दादिभ्य' (ब्र० सू० २।१।१४) इत्यत्रेति न किंचिदनुपपन्नमिति।

यत्तु चन्द्रिकायाम्—+ममासत्कारणमिति चेत्। न। तस्य प्रतिषेधमात्रत्वादित्यध्याहारनैरपेक्षेण हेतुसाध्ययो सामानाधि

---

+ ममासत्करणमिति। अय भाव—आनन्दतीर्थीये 'असदिति चेन्न प्रतिषेधमात्रत्वात्' इति सूत्रस्य ह्येव व्याख्या कृता—ननु न विष्णोर्जगत्कारणत्वम्। प्रमाणाभावात्। किंत्वसदेव जगत्कारणम्। 'असदेवेदमग्र आसीत्' 'असत सदजायत' इत्यादिश्रुतिभ्य इति चेत्। न। असत. स्वरूपत एव प्रतिषेधबुद्धिविषयत्वात्। नहि शशविषाणादीना यत्किंचित्प्रति कारणत्व संभवति। एव च नासतो जगत्कारणत्व युक्त किंतु विष्णोरेवेति सिद्धमिति। अद्वैतिनस्त्वेव व्याचक्षते—ननु चेतन शुद्ध शब्दादिहीन ब्रह्म यदि तद्विपरीतस्य कार्यस्य कारणमिष्येत तर्ह्युत्पत्ते प्राक्कार्यमसदिति प्रसज्येत। अनिष्ट चैतत्सत्कार्यवादिनस्तवेति चेत्। न। प्रतिषेधमात्रत्वात्। असदिति प्रतिषेधस्य प्रतिषेध्यमेव नास्ति। न ह्यय प्रतिषेध प्रागुत्पत्ते कार्यस्य सत्त्व प्रतिषेद्धु शक्नोति। यथैव हीदानीमपि कार्यस्य कारणात्मनैव सत्त्व भवति तथैव प्रागुत्पत्तेरपि कार्यस्य सत्त्व बोध्यम्। न

---

१ क 'दिति बंहूवध्या'।

करण्येनान्वयः साक्षाद्ब्रह्मकारणत्वाक्षेपश्च । तव त्वसत्कार्यं प्रसज्येतेति चेत् । न । सत्कार्यप्रतिषेधस्य प्रतिषेधमात्रत्वादित्यध्याहारेण वैयधिकरणेन चान्वयः साक्षात्तदनाक्षेपश्चेति दूषणमुक्तम् । तत्तदीयरीत्या सूत्रव्याख्यानदूषणेन मदीयव्याख्यायामेव स्वारस्यस्य वक्ष्यमाणत्वाददूषणमेवेति विदुषा स्पष्टमेव ॥७॥

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

ननु 'नाश कारणलय' ( सां० सू० १ । १२१ ) इति साङ्ख्यसूत्रे कार्याणां कारणेनाविभाग एव लय इति प्रतिपादितम् । इष्टश्चायमर्थस्तवापि । 'स्वाप्ययात्' ब्र० सू० १ । १ । ९ ) इति सूत्रेऽविभागस्यैवापीतिशब्दार्थतायास्त्वया स्वीकृतत्वात् । एवं चापीतौ प्रलये कार्येणाविभागमापन्नस्य ब्रह्मणः कार्यधर्मस्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुद्ध्यादिमत्त्वप्रसङ्गात्सर्वज्ञं ब्रह्म जगत्कारणमित्यौपनिषदं मतमसमञ्जसम् । योजनान्तराणि भाष्ये द्रष्टव्यानि । न च कार्यस्याप्यये तद्धर्माणामप्ययात्कार्यधर्मसंसर्गापत्तिर्न ब्रह्मण्यापादयितुं शक्यत इति शङ्क्यम् । कार्यवदपीतानां तद्धर्माणां कारणे प्रसञ्जनस्य दुर्वारत्वात् । न च तदानीं कार्यधर्माणामसत्त्वात्कथं तत्संसर्गापादानसंभव इति वाच्यम् । यतो धर्माणां शशशृङ्गवन्नात्यन्तासत्त्वम् । किंत्वतीतावस्थापत्तिरेव । एवं चातीतावस्थापन्नतद्वत्तापत्तिर्दुर्वारैव । एवं वर्तमानावस्थापन्नाया अतीतावस्थायाः कार्यगताया ब्रह्मण्यापत्तिर्दुर्वारैवेति ।

यत्तु चन्द्रिकायाम्—*प्रलये ब्रह्मणः कार्यधर्मापत्तौ यदि कार्यनाशो हेतुस्तर्हि कार्यनाशे सुतरां तद्धर्माणां नष्टत्वेन ब्रह्मणस्त-

---

ह्यीदानीमपि कार्यस्य सत्त्वं कारणस्वरूपव्यतिरेकेणोपलभ्यते । तस्माद्ब्रह्मैव जगत कारणमिति सिद्धमिति । तत्र चन्द्रिकाकाराणामाशयस्त्वस्मदीयमतेऽध्याहारादिदोषो नास्ति । अद्वैतिमते तु तादृशदोषसत्त्वान्न तदीयं व्याख्यानं युक्तमिति ।

* प्रलये ब्रह्मण इति । अयमाशय—'अपीतौ तद्वत्०' इति सूत्रस्याऽऽनन्दतीर्थीयैरित्थं व्याख्यानं क्रियते—ननु यदुक्तं प्रतिषेधमात्रत्वाच्छश-

---

१ क० 'धर्मा'। २ क० 'दिति वहूवच्या ।

दापादानमयुक्तमिति दूषणमुक्तम् । तदसत् । 'नाशः कारणलयः' ( सां० सू० १।१२१ ) इति साङ्ख्यप्रवचनसूत्रे कार्याणां कारणेनाविभाग एव लय इति तद्भाष्ये च वर्णितत्वेन तदनुसारेणोक्तशङ्कासंगतेः ।

यदपि चन्द्रिकायाम्—अभेदेन तदापत्तौ स्थितावपि तुल्यत्वेन सूत्रे 'अपीतौ' इत्यस्य वैयर्थ्यमिति दूषणमुक्तम् । तदप्यसत् । कारणेनाविभागो लय इति वदता स्थितिकाले लयव्यवहारवारणाय तत्कालवृत्तेरतीतावस्थावत्कार्याविभागस्यैव लयशब्दार्थताया वक्तव्यत्वेनाविभागेन तद्धर्मापत्तौ स्थितिकाले तदसम्भवेनापीति ग्रहणसार्थक्यात् ॥ ८ ॥

समाधत्ते—

न तु दृष्टान्तभावात् ॥ ९ ॥

नैवास्मदीयदर्शने किंचिदसामञ्जस्यमस्ति । यदुक्तं प्रलये कार्येणाविभागमापन्नस्य ब्रह्मणः कार्यधर्मस्थौल्यासत्त्वप्रसङ्गादसमञ्जसमौपनिषदं दर्शनमिति । तददूषणम् । दृष्टान्तभावात् ।

---

विषाणादिवदसतो न कारणत्वमिति । नैतद्युक्तम् । युक्तिविरुद्धस्यापि श्रुतिबलात्कस्यचिदसतः कारणत्वस्याभ्युपगमे बाधकाभावात् । न च शशविषाणादीनामपि तथा त्वप्रसङ्ग इति वाच्यम् । सत्सु वैलक्षण्यवदसत्स्वपि वैलक्षण्योपपत्त्या न शशविषाणादीनां तथात्वप्रसङ्ग इति चेत् । मैवम् । असतः सकाशाज्जगदुत्पत्तौ स्वीकृतायां प्रलयेऽसन्मात्रावशेषः प्रसज्येत । कार्यनाशे सति कारणमात्रावशेषस्य नियमात् । अतो न समञ्जसमसन्मतमिति । अद्वैतिनस्त्वेवं व्याचक्षते—स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुद्ध्यादिधर्मकस्य कार्यस्य यदि ब्रह्म कारणमभ्युपगम्येत तर्हि प्रलये कारणाविभागमापद्यमानं कार्यं कारणं प्रत्यात्मीयेन धर्मेण दूषयेत् । एवं च प्रलये कारणस्यापि ब्रह्मणः कार्यभूतजगत इवाशुद्ध्यादिरूपप्रसङ्गात्सर्वज्ञं ब्रह्म जगतः कारणमित्यौपनिषदं दर्शनमसमञ्जसमिति । एतच्च मतं न युक्तमिति चन्द्रिकाकारा वदन्ति । तथा हि—प्रलये हि ब्रह्मणः कार्यधर्मापत्तौ किं कार्यनाशो हेतुः किंवा कार्यकारणयोरभेदः । नाऽऽद्यः । कार्यनाशे तद्धर्माणां सुतरां नष्टत्वेन ब्रह्मणस्तदनापत्तेः । नान्त्यः । अभेदेन तदापत्तेः स्थितावपि तुल्यत्वेन सूत्रे 'अपीतौ' इत्यस्य वैयर्थ्यादिति ।

सन्ति हि दृष्टान्ताः कार्येणाविभागमापन्नानि कारणानि न कार्यधर्मैः संसृजन्तीति। यथा शरावादयो मृत्प्रकृतिका विकारा विभागावस्थायामुच्चावचमध्यमप्रभेदाः सन्तः पुनः प्रकृतिमपि गच्छन्तः प्रकृत्याऽविभागमापन्ना नाऽऽत्मीयेन धर्मेण कारणं दूषयन्तीति। त्वत्पक्षे तु न कश्चिद्दृष्टान्तोऽस्ति। अपीतिरेव न संभवेद्यदि कारणे कार्यं स्वधर्मेणावतिष्ठेत। विस्तरस्तु भाष्यादौ द्रष्टव्यः।

यत्तु चन्द्रिकायाम्—विलक्षणयोरपि कार्यकारणभावे दृष्टान्तं कथयता 'दृश्यते तु' (ब्र० सू० २। १।६) इति सूत्रेणास्य पौनरुक्त्यम्। तेनैव कार्यवृश्चिकधर्माणां कारणे गोमयेऽनापत्तावपि दृष्टान्तस्यैवोक्तत्वादिति * दूषणमुक्तम्। तदसत्। तत्र वृश्चिकादीनां स्थितिकाले कारणाद्विभक्ततयैव स्थितत्वेन परस्परधर्मसांकर्याभावनिदर्शनेऽप्यविभागदशायां तस्याप्रदर्शितत्वात्। तत्प्रदर्शनायैतत्सूत्रप्रणयनायाससार्थक्यात्॥ ९॥

## स्वपक्षदोषाच्च॥ १०॥

स्वपक्षे चैते प्रतिवादिनः साधारणा दोषाः। कथमिति चेत्। यत्तावदभिहितं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकमिति प्रधानप्रकृतिकतायामप्येतत्समानम्। शब्दादिहीनात्प्रधानाच्छब्दादिमतो जगत उत्पत्त्यभ्युपगमेन प्रधानप्रतियोगिकानौपाधिकभेदवत्स्वरूपप्रधानवैलक्षण्यस्य जगति परमतेऽपि सत्त्वात्। अनौपाधिकत्वं च प्रातियोगिकवृत्तिधर्मावच्छिन्नानुयोगिताकत्वम्।

* दूषणमुक्तमिति। अत्र दुर्जीवा हि—न वस्मामिरपि प्रलयेऽसन्मात्रावशेषस्याभिलषितत्वान्नानिष्टापादनमसन्मात्रावशेषप्रसक्तिर्भवतीति चेत्। नैवम्। प्रलये पदार्थसत्त्वस्यैव दृष्टान्तबलेन साधयितुं शक्यत्वेन सर्वासत्त्वस्य दुर्वचत्वात्। कोऽसौ प्रलये पदार्थसत्त्वसाधने दृष्टान्त इति चेत्। उच्यते—लोके हि सत उत्पत्तिः सशेषविनाशश्च दृश्यते। तथा च प्रयोगौ—विमतोत्पत्तिः सतो भवितुमर्हत्युत्पत्तित्वाद्घटोत्पत्तिवदिति। विमतो विनाशः सशेषो विनाशत्वाद्घटविनाशवदिति च। एवं च विप्रतिपन्नोत्पत्तिविनाशयोः सपूर्वकत्वे सशेषत्वे च सिद्धे सति प्रलये पदार्थसत्त्वमेव सिध्यतीति 'न तु दृष्टान्तभावात्' इत्यस्य व्याख्यानं कृत्वाऽद्वैतिभिः कृता तत्सूत्रव्याख्या दूषयन्तीति।

स्पष्टीकृतं चैतत् 'न विलक्षणत्वात्' (ब्र० सू० २ । १ । ४ ) इति सूत्रयोजनायाम् । परमतेऽतीतानागतवर्तमानावस्थात्रययोगिनः कार्यस्य नित्यत्वेन तत्रोत्पत्तिव्यवहारस्य 'न भावे भावयोगश्चेत्' ( सां० सू० १ । ११९ ) 'नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ' ( सां० सू० १ । १२० ) इति सांख्यप्रवचनोक्तरीत्याऽभिव्यक्त्यैवोपपादनीयत्वेनाभिव्यक्तेश्च दुर्वचत्वेन सत्कार्यवादहानिः सांख्यस्यैव दोषः । तथा हि—अभिव्यक्तिः प्रागसतो न वा । आद्ये कारणव्यापारवैयर्थ्यम् । द्वितीये च सतः कार्याद्विलक्षणाया असत्या उत्पत्तस्य[1] मानाभिव्यक्तेरभ्युपगमात्तत्रैव सत्कार्यवादभङ्गः । न च कारणव्यापारात्प्राक्सर्वेषां कार्याणां सदसत्त्वोपगमेन नोक्तविकल्पावकाशः । घटादिवदभिव्यक्तेरपि वर्तमानावस्थाया प्रागसत्त्वेन तदसत्तानिवृत्त्यर्थं कारणव्यापारापेक्षणात् । अनागतावस्थया च सत्कार्यसिद्धान्तस्याक्षतेरेकस्यापि दर्शितरूपभेदेन सदसत्त्वे विरोधाभावाच्चेति वाच्यम् । एवमप्यभिव्यक्तेरप्यभिव्यक्तेर्वाच्यतयाऽनवस्थापत्तेरपरिहार्यत्वात् । अनवस्थाभियैवाभिव्यक्ते प्रागसत्त्वस्य त्वयाऽङ्गीकृतत्वाच्च । तथा चोक्तं सांख्यप्रवचने—'उत्पत्तिवद्वा दोषः' ( सां० सू० १ । १२३ ) इति । अत्र भाष्यम्—'यथा घटोत्पत्तेरुत्पत्तिं स्वरूपमेव वैशेषिकादिभिरसदुत्पत्तिवादिभिरिष्यते लाघवात्तथैवास्माभिरभिव्यक्तेरभिव्यक्तिः स्वरूपमेवोच्यते[2] लाघवात् । असदुत्पत्ताविवाभिव्यक्तावपि नानवस्थेत्यर्थः[3] । अथैवमप्यभिव्यक्तेरभिव्यक्त्यनङ्गीकारे कारणव्यापारात्प्राक् तस्याः सत्त्वानुपपत्त्या सत्कार्यवादक्षतिरिति चेत् । न । अस्मिन्पक्षे सत एवाभिव्यक्तिरित्येव सत्कार्यसिद्धान्त इत्याशयात् । अभिव्यक्तेश्चाभिव्यक्त्यभावेन तस्याः प्रागसत्त्वेऽपि नासत्कार्यवादत्वापत्तिरिति । न च मम तत्रैवासत्कार्यवादस्तव तु सर्वकार्येष्विति वाच्यम् । एकत्र प्रसक्तस्यासत्कार्यवादस्यासति बाधकेऽन्यत्रापि प्रसक्तेर्दुर्वारत्वाच्च । मम पक्षेऽनिर्वचनीयवादेनादोषाच्चेति[4] ।

---

1 क. °भिर्घटाभि° । २ क °मेवेष्टव्या ला° । ३ क अन उत्प° । ४ क °बस्यादोष इत्य° ।

तथा परेणाप्यपीतौ कारणस्य कार्येणाविभागाभ्युपगमात्कार्यधर्माणामतीतत्वादीनां प्रधाने प्रसङ्गः समान एव। अधिकं भाष्ये स्पष्टम् ।

यत्तु चन्द्रिकायाम्—जलाहरणाद्यसमर्थस्यापि मृन्मात्रस्य तत्समर्थघटं प्रतीव शब्दादिहीनस्यापि प्रधानस्य शब्दादियुक्तजगत्प्रत्युपादानत्वसंभवेऽपि न चेतनस्याचेतनोपादानत्वम् । क्वाप्यदर्शनान्निर्विकारत्वाच्चेति परेण त्वां प्रत्युक्तदोषस्य तत्पक्षेऽप्राप्तेर्दोषसाधारण्या=पादानमयुक्तमिति दूषणमुक्तम् । तदप्यसत् । उक्तरीत्याऽनौपाधिकभेदवत्त्वरूपहेतोः प्रकृतिविकारभावविरोधित्वे त्वन्मतेऽपि तदापत्तिः । ब्रह्म न जगदुपादानं चेतनत्वादित्यनुमानेन ब्रह्मणि जगदुपादानत्वनिरासे प्रधानं न शब्दवदुपादानमशब्दत्वादित्यनुमानविरोधेन प्रधानस्यापि वियदाद्यकरणत्वापत्तिः । व्यभिचारदर्शनस्योभयत्र तुल्यत्वादिति समानन्यायेन दोषसाम्यापादानस्य निष्प्रत्यूहत्वात् । नहि शब्दशून्यं शब्दवत उपादानं दृष्टं क्वापि लोके । यथा हि पर-

=पादानमयुक्तमिति । 'स्वपक्षदोषाच्च' इत्यस्याऽऽनन्दतीर्थीयैरेवं व्याख्या क्रियते—न केवलं प्रामाणिकपरित्यागप्राप्त्या प्रलये सर्वासत्त्वमनिष्टम् । किंत्वप्रामाणिकत्वादपि । तथा हि—न तावत्प्रलये सर्वासत्त्वं प्रत्यक्षसिद्धम् । नाप्यागमसिद्धम् । तस्याभावात् । नाप्यनुमानं तत्र प्रमाणम् । तद्धि किम् । 'प्रलयः सर्वासत्त्ववान्' इत्यादिरूपेण साक्षाद्बोधकमाहोस्वित् 'सर्वे भावाः प्रलयेऽसन्तो भावात्' इत्यादिरूपेण परम्परया । नाऽऽद्यः । प्रलये सर्वासत्त्वपक्षे दृष्टान्ताभावेनानुमानस्य दुष्टत्वात् । व्यतिरेके चातिप्रसङ्गः । अत एव न द्वितीयः । एवं च प्रलये सर्वासत्त्वस्याप्रामाणिकत्वात्तदभ्युपगमोऽनिष्ट इति । अद्वैतिभिस्तु प्रकारान्तरेण व्याख्यानं क्रियते । तथाहि—'न विलक्षणत्वात्' इत्यारभ्य ये दोषाः सांख्यैर्दत्तास्ते तत्र तत्र खण्डिता एव । किं च त एव दोषाः सांख्यानामपि प्राप्नुवन्तीति । तद्दोषनाभिश्च भाष्ये स्पष्टमभिहिता । तत्रत्यश्च 'न चेतनस्याचेतनोपादानत्वम् । क्वाप्यदर्शनात् । निर्विकारत्वाच्च' इति यो दोषः सांख्यैर्दत्तः स न सांख्यपक्षे प्राप्नोति । अतः 'एते दोषाः साधारणत्वान्नान्यतरस्मिन्पक्षे चोदयितव्या भवन्ति' इति त्वदीयं भाष्यं न सम्यगिति चन्द्रिकाकाराणामाशयः ।

मते प्रकृतिसंयोगमात्रेण पुरुषस्य न परिणामितालक्षणो विकारस्तथा मन्मतेऽपि विषमसत्ताककार्यतादात्म्येन न विकारितेत्यभ्युपगमेन विवर्तोपादानत्वाभ्युपगमेन चोपादानत्वेऽपि न निर्विकारत्वविरोधः ॥ १० ॥

तर्काप्रतिष्ठानादन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥

किं च न केवलेन तर्केण ब्रह्मणः श्रौतब्रह्मकारणत्वापह्नवो युक्तः । तर्काणां पुरुषोत्प्रेक्षामात्रनिबन्धनत्वात्पुरुषबुद्धीनां वैचित्र्यात्तेषामप्रतिष्ठितत्वात् । तथा चोक्तम्—

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ इति ।

सर्वज्ञत्वेनाभिमतानामपि कपिलकणादप्रभृतीनां परस्परविप्रतिपत्तिदर्शनाच्चाप्रतिष्ठितत्वम् । अथाप्रतिष्ठानशून्येनैकतर्केणानुमेयम् । नहि प्रतिष्ठितस्तर्को नास्तीति वक्तुं शक्यम् । अप्रतिष्ठानसाधकतर्कस्यापि तथात्वापत्त्येष्टासिद्धेः, तर्कमूलसकललौकिकवैदिकव्यवहारोच्छेदापत्तेश्च । मनुरपि—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥
आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः (१२।१०५।१०६)

इति ब्रुवन्नेव मन्यते—सावद्यतर्कपरित्यागेन निरवद्यस्तर्कः प्रतिपत्तव्य इति चेत् । एवमपि क्वचित्तर्कस्य प्रतिष्ठितत्वेऽपि अचिन्त्येऽतिगम्भीरे मोक्षाय ज्ञेयप्रकृतविषये तर्कस्याप्रतिष्ठानादनिर्मोक्ष एव । 'अचिन्त्याः खलु ये भावा न तांस्तर्केषु योजयेत्' इति स्मृतेः । अथवा—एवमप्यनिर्मोक्षप्रसङ्गात्(ङ्गो)[1] मुक्त्यभावप्रसङ्गात्(ङ्ग)इत्यर्थः । सम्यग्ज्ञानान्मोक्ष इति सर्वेषां मोक्षवादिनां संमतम् । सम्यग्ज्ञानं चैकरूपमेव । वस्तुतन्त्रत्वात् । वस्तुनि च विकल्पाभावात् । तत्रैवं सति सम्यग्ज्ञाने पुरुषाणां विप्रतिपत्तिरनुपपन्ना । कपिलकणभुगाद्युक्ततर्कज्ञानानां तु अन्यो-

---

१ क 'प्यविमोक्ष' ।

न्यविरोधात्प्रसिद्धा विमतिपत्तिरिति तर्कप्रभवसम्यग्ज्ञानाभावा-न्मुक्त्यभावप्रसङ्गोऽन्यथानुमानपक्षे दुर्वारः ।

यद्वा पूर्वोक्तवैपरीत्येन । पूर्वं हि श्रुत्याद्यनुग्रहरहितस्य तर्क-सामान्यस्याप्रतिष्ठितत्वमुक्तम् । न चैतद्युक्तम् । तर्कसामान्येऽ-प्रतिष्ठितत्वसाधकतर्कस्यापि श्रुत्यादिसाहाय्यरहिततयाऽप्रति ष्ठितत्वे सति तर्कसामान्येऽप्रतिष्ठितत्वासिद्धेः । वेदार्थनिर्णायकन्यायानामपि वेदमूलकत्वेऽनवस्थापत्त्या श्रुत्याद्यमूलकत्वेऽपि प्रतिष्ठितत्वस्याऽऽवश्यकत्वाच्च । एवं च नोक्तन्यायेन विलक्षण-त्वादितर्काणामप्रतिष्ठितत्वसिद्धिरिति ' अनुमेयम् ' इति शङ्का भागार्थः । साक्षात्परम्परया वा श्रुतिप्रत्यक्षानुसारिण एव तर्क-स्य प्रतिष्ठितत्वम् । तर्काप्रतिष्ठितत्वलक्षणस्तर्कोऽपि श्रुत्यनुसा-र्येव । अन्यथा बाह्योक्ततर्केण श्रुत्यप्रामाण्यप्रसङ्गात् । एवं वेद-तात्पर्यनिर्णायकोऽपि तर्कः क्वचित्प्रत्यक्षानुगृहीतः क्वचिच्छ्रुत्य-नुगृहीतः क्वचिच्च तदविरुद्धन्यायाविरुद्धो वा भवतीति नाप्रयो-जक इति तर्काणा प्रतिष्ठितत्वेऽपि विलक्षणत्वादितर्काणां तथा-त्वाभावादप्रतिष्ठितत्व दुर्वारमेवेति ' एवमप्यनिर्मोक्षप्रसङ्गः ' इति सिद्धान्तभावार्थः ।

यद्वा तर्काप्रतिष्ठानादिति—यद्यस्माद्विलक्षण तत्तदुपादानकं नेतिसामान्यव्याप्तेर्यत्तत्पदार्थघटितत्वेन पक्षसपक्षसाधारण्येना-नुगतीकर्तुमशक्यतया साध्यासाधकत्वादित्यर्थः । दृष्टान्ते हि घटे सुवर्णविलक्षणत्व सुवर्णोपादानकत्वाभावे प्रयोजक वक्त-व्यम् । न तद्वियदादेर्ब्रह्मोपादानकत्वाभावे साध्ये हेतू कर्तु शक्यते । अपि तु ब्रह्मविलक्षणत्वम् । तथा च दृष्टान्तदार्ष्टान्ति-कयोः साध्यतावच्छेदकहेतुतावच्छेदकयोरैक्यालाभः । तद-लाभे पक्षवृत्तिहेतौ व्याप्तिग्रहासम्भवादनुमितिरसम्भावितैव शास्त्र-योनित्वसूत्रे श्रुतिसिद्धे सार्वज्ञ्ये संभावनामात्रप्रयोजनाय यद्यद्विस्तरार्थं शास्त्र यस्मात्पुरुषविशेषात्सम्भवति स ततोऽप्यधि कतरज्ञानवानिति सामान्यव्याप्त्युपन्यासेऽपि स्वातन्त्र्येण कं-चिदप्यर्थं प्रति साधकत्वेनोपन्यासाभावान्नासगतिः । ननु दृ-ष्टान्तदार्ष्टान्तिकयोः साध्यतावच्छेदकहेतुतावच्छेदकयोरैक्याभा

येन पक्षवृत्तिहेतोर्व्याप्तिग्रहाभावेऽपि प्रकृतहेतुसजातीयहेतौ प्रकृत-साध्यसजातीयसाध्यनिरूपितव्याप्तिग्रहात्प्रकृतहेतोश्च पक्षधर्मताग्रहात्प्रकृतसाध्यानुमितिः स्वीक्रियते । अविद्यादृष्टान्तेन विशेष-व्याप्तिरेव वा विवक्षिताऽस्तु । तत्र च नोक्तदोष इति शङ्कते—अन्यथाऽनुमेयमिति । प्रकृतहेतुसजातीयहेतौ प्रकृतसाध्यसजातीय-साध्यनिरूपितव्याप्त्या विशेषव्याप्त्या वाऽनुमेयमित्यर्थः । एव मपि—उक्तपक्षेऽपि । अनिर्मोक्षप्रसङ्गात्(ङ्ग)—अप्रयोजकत्व-परिहारार्थम् ' तद्विलक्षणत्व ब्रह्मविलक्षणत्व वा तदुपादानकत्वे ब्रह्मोपादानकत्वे वा न स्यात् ' इति तर्कमूलसामान्यव्याप्त्यादे-राश्रयणीयतया पूर्वोक्तमेवाप्रतिष्ठितत्व पुनरापद्येतेत्यर्थः ।

यद्वा ' विलक्षणत्वहेतुर्नाप्रयोजके निर्विकारत्वबोधकश्रुत्यनु-कूलत्वात् ' इत्यस्यानुमानस्य स्वरूपासिद्ध्यादिनाऽप्रतिष्ठितत्वा दनिर्मोक्ष इति योजना ।

यत्तु—चशब्दाभावान्नास्य हेत्वन्तरत्व युक्तम् । किं च अ न्यथाऽनुमेयम् । इत्यनेन त्वयाऽप्येकसूत्रतया स्वीकृतस्य तर्का-प्रतिष्ठानादित्यस्य मद्रीत्या " अन्यथा ' स्वपक्षदोषाच्च ' ( ब्र० सू० २ । १ । १० ) इत्यादिसूत्रोक्ताद्वैपरीत्येनानुमेय तर्काप्रति ष्ठानात् ' इत्येकवाक्यतया श्रुतसाध्या यत्रेन शङ्काविशेषत्वे च संभवति ' विलक्षणयोरपि कार्यकारणभावस्य न हानिः । तर्क-स्याप्रतिष्ठितत्वात् ' इत्येवमध्याहृतसाध्यान्वयेन वाक्य भित्त्वा सिद्धान्तशेषत्वोक्त्ययोगं । अनिर्मोक्षप्रतियोगिनोऽनुषङ्गापत्तिश्च । प्रसङ्गशब्दवैयर्थ्यं चेति चन्द्रिकायां * दूषणमुक्तम् । तदसत् । चशब्दाभावेऽपि तत्समानार्थकापिशब्दसत्त्वेन हेत्वन्तरत्वोपपत्तेः ।

* दूषणमुक्तमिति । ' तर्काप्रतिष्ठानादपि० ' इत्यस्य हि आनन्दतीर्थी-यमतेऽयमर्थ—ननु पूर्वं यत्तर्कबलेन सत करणत्व साधित यच्चासतो न कारणत्वमिति दूषित तन्न सम्यक् । कुत इति चेत् । शृणु । यद्धि वस्तु महता तर्केण किंचिद्धर्मविशिष्ट साध्यते तदेव प्रतितर्केण तद्विरुद्धधर्मविशिष्टमपि साधयितु शक्यते । अतस्तर्कस्याप्रामाण्यम् । नहि प्रतितर्क एतावानेवैतादृश तर्क प्रति विरोधितया वर्तते नैतादृशमिति नियामकमस्ति । अत सर्वानुमानेषु

१ क 'योगादिति' । २ क. 'प्रज्ञनीयत्वाच' । ३ क 'यथांऽच्च' ।

यद्यपि हेत्वन्तरपरत्वे तत्प्रतिपादकभागस्य सूत्रान्तरत्वमुचितं तथाऽपि 'तर्काप्रतिष्ठानात्' इत्यंशस्यानिर्मोक्षप्रतियोगिसमर्पक-तयोत्तरवाक्यैकवाक्यताऽप्यस्तीति सूचनाय सूत्रैक्यानुसरणम्। 'ईक्षतेर्नाशब्दम्' (ब्र० सू० १।१।५) 'गौणश्चेन्नाऽऽत्मश-ब्दात्' (ब्र० सू० १।१।६)। 'आनन्दमयोऽभ्यासात्' (ब्र० सू० १।१।१२) 'विकारशब्दान्नेति चेन्न प्राचुर्यात्' (ब्र० सू० १।१।१३) 'ज्ञेयत्वावचनाच्च' (ब्र० सू० १।१।४) 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्' ब्र० सू० १।४।५) इत्यादौ तु ईक्षणाभ्यासज्ञेयत्वादेरुत्तरवाक्यार्थेऽ

---

प्रतितर्कस्यानिवारणीयत्वेन तेषामप्रामाण्यान्न तद्बलेन सत्कारणत्वसाधनत्वादि युक्तमिति चेत्। मैवम्। इद तावद्भवान्प्रष्टव्य । किं प्रामाणिक तर्कसिद्ध प्रतितर्केण दूषयितु शक्यमप्रामाणिक वेति। द्वितीयस्तु युक्त एव। प्रथमेऽपि किं तव मते मोक्षोऽस्ति न वा। नो चेन्न त्व वादी। प्रयोजनान्तरस्य शास्त्रम तरेणापि सिद्धे । अस्ति चेत्। विप्रतिपन्न किं प्रत्यागमेन साध्यत उत तर्केण। नाऽऽद्य। मोक्षवादिना त्वयाऽऽगम-प्रामाण्यानभ्युपगमात्। अतो द्वितीयपक्ष एवाङ्गीकार्य। तथा च प्रामाणिक-स्यापि तर्कसिद्धस्य प्रतितर्केण बाधे सोऽपि चार्वाकतर्केण बाधित स्यादिति व्यर्थमेव मत भवेत्। एव च प्रमाणसिद्धेऽपि मोक्षेऽन्यथानुमेयत्वादनिर्मोक्ष प्रसङ्ग इति। तथा चैन मते—'तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेत्' इति शङ्काप्रतिपादको भाग । 'एवमप्यनिर्मोक्षप्रसङ्ग' इति उत्तरप्रतिपादको भाग इति भागद्वयमेवास्मिन् सूत्रे। अद्वैतिमते तु भागत्रयमत्र। तथाहि—'तर्का-प्रतिष्ठानादपि' 'अन्यथाऽनुमेयमिति चेत्' 'एवमप्यनिर्मोक्षप्रसङ्ग' इति। तत्राऽऽद्यो भाग 'न केवलेन विलक्षणत्वादिपूर्वोक्ततर्केण ब्रह्मण श्रौतकारणत्वापह्नवो युक्तस्तर्काणामप्रतिष्ठितत्वात्' इत्यर्थप्रतिपादक। द्विती-यस्तु 'ननु अप्रतिष्ठानशून्येन तर्केण ब्रह्मणो न जगत्कारणत्व किंतु प्रधानस्य। नहि प्रतिष्ठितस्तर्को नास्तीति वक्तुं शक्यम्' इति शङ्काप्रतिपादक। तृतीयस्तु 'क्वचित्तर्कस्य प्रतिष्ठितत्वेऽपि अचिन्त्येऽतिगम्भीरे मोक्षाय ज्ञेयप्रकृतविषये तर्कस्याप्रतिष्ठानादनिर्मोक्ष एव' इत्युत्तरप्रतिपादक इति। तत्र भागद्वयकल्पनया लाघवेनाध्याहारादिगौरवाभावेन चास्मद्रीत्या सम्यग्वाक्यार्थे सम्भवति सति अद्वैतिना गौरवग्रस्त मत न युक्तमिति चन्द्रिकाकारणामाशय।

प्रविष्टतया पृथक्सूत्रत्वमादृतम् । अन्यथाशब्दोक्तान्यत्वप्रतियोगितयाऽत्यन्तात्यवहिततर्काप्रतिष्ठानस्यान्वयसम्भवे पूर्वसूत्रोक्तादितिपदाध्याहारेण व्यवहितस्य तत्प्रतियोगित्वेनान्वयोपगमस्य जघन्यत्वाच्च । किं च तर्कसामान्यस्यानुकूलतर्कशून्यतयाऽऽभासत्वरूपम् । प्रतिष्ठितत्व नान्यथानुमेयत्वरूपसाध्यसाधकम् । स्वस्यापि तर्कसामान्यान्तर्गततयाऽऽभासत्वात् । अन्यथा च सिद्धान्त्यभिमततर्कस्याऽऽभासत्वासिद्ध्याऽन्यथानुमित्ययोगादिति 'तर्काप्रतिष्ठानादन्यथाऽनुमेयम् ।' इति व्याहतानुमानपरतया तवैव व्याख्यानमनुचितम् । मम तु श्रुतिप्रत्यक्षान्यतरसाहाय्यरहितस्तर्क एव तर्कशब्देन गृह्यत इति न दोषः । सिद्धान्तसाधकहेत्वन्तरत्वपरत्वे सम्भवति निरसनीयशङ्काशेषत्वकल्पनाया एवानुचितत्वाच्च । उक्तरीत्या व्याहत्याक्रान्तहेतुपरतया व्याख्यानमपेक्ष्य साध्यान्तरान्वयं वाक्यभेदमानिर्मोक्षप्रतियोगिनोऽनुषङ्गं च स्वीकृत्य सूत्रयोजनमेवोचितमिति स्पष्टमेव विदुषाम् । प्रथमयद्वेत्यादिरीत्या द्वितीययद्वेत्यादिरीत्या च सूत्रयोजनायां मन्मते व्याहतिशङ्काया एवाप्रसर । अनिर्मोक्षप्रसङ्गादित्यस्य मुक्त्यभावप्रसङ्गादित्यर्थपक्षे प्रसङ्गपदसार्थक्यमतिस्पष्टमेव ।

यदपि चन्द्रिकायाम्—किं तर्कमात्रस्याप्रतिष्ठितत्वं किंवा श्रुत्याद्यननुग्रहीतस्य । नाऽऽद्यः । तर्काप्रतिष्ठितत्वसाधकतर्कस्याप्यप्रतिष्ठितत्वेन तर्काप्रतिष्ठानासिद्धेः । मीमांसानारम्भप्रसङ्गश्च * 'मन्तव्यश्च । सोऽन्वेष्टव्यः' यस्तर्केणानुसन्धत्ते ' इत्यादिश्रुतिस्मृतिविरोधाच्च न द्वितीयः । ब्रह्मणोऽनुपादानत्वसाधकस्य 'वैलक्षण्यरूपतर्कस्य निर्विकारम्' इति श्रुत्यनुगृहीतत्वादिति दूषणमुक्तम् । तदतिशिथिलम् । उक्तरीत्या श्रुत्याद्यननुगृहीतस्यैव तर्कस्य ' केवलेन तर्केण ' इति भाष्येणाप्रतिष्ठितत्वोक्तेर्विकल्पस्य स्वबुद्धिमात्रकल्पितत्वात् ।

यदुक्तम्—वैलक्षण्यरूपतर्कस्य ' निर्विकारम् ' इति श्रुत्यनुगृहीतत्वान्न तस्य केवलत्वं श्रुत्याद्यननुगृहीतत्वरूपमिति ।

---

* मन्तव्यश्चेति । मननादेस्तर्कानुसन्धानरूपत्वादिति भाव ।

---

१ क 'न तेन त' । क २ 'रम्भापाताच्च ।

तदप्यतिशिथिलम् । निर्विकारत्वस्योपादानताबोधकश्रुतिविरुद्धत्वात् । विपक्षे विकारित्वामसक्त्या तस्य 'निर्विकारम्' इति श्रुत्यानुकूल्यासिद्धेः । अन्यथा 'यत्तर्कबलेन सतः कारणत्वसाधनमसतश्च तद्बाधनं तदयुक्तम् । तर्कबलेन यत्साध्यते तस्मादन्यथाऽपि प्रतितर्केण साधयितु शक्यत्वेन तर्कस्याप्रामाण्यात् । नहि प्रतितर्कमेतावानेवैतादृश तर्कं प्रति विरोधितया प्रवर्तते 'नैतादृशमिति नियामकमस्ति' इति त्वदीयोक्तायाा युक्तेरपि 'असदेवेदमग्र आसीत्' इत्यादिश्रुत्यनुकूलत्वेन शुष्कत्वानुपपत्तेः । वस्तुगत्या श्रुत्यनुसारित्वाभावश्च विलक्षणत्वादेरपि तुल्य इति दिक् ।

आनन्दतीर्थीयास्तु—श्रुत्यादिप्रामाण्याद्विष्णोर्जगत्कारणत्वं सिध्यतीत्युक्तम् । श्रुत्यादिप्रामाण्यस्य च युक्तिविरोधे ब्रह्मणो न जगत्कारणत्व सिध्यतीत्यसौ परिहरणीय एव । श्रुत्याश्रेव विषयः । प्रमाणं नवेति सदेहः । 'वृष्टिकामः कारीर्या यजेत' । इत्यादिश्रुतेरप्रामाण्य दुर्वारमेव । कृतायामपि कारीर्यां फलादर्शनेनान्वयव्यभिचारेण कारणताभावेन कारणताशून्ये कारीर्यादौ कारणताबोधकत्वात् । दृष्टार्थकफलसंवादशून्यार्थबोधकपाशुपतादिस्मृतिवत् । एवं च वेदास्यैकदेशस्याप्रामाण्येऽन्यदेशप्रमाणतायामनाश्वासाच्छ्रुत्यादि न प्रमाणमिति न विष्णोर्जगत्कारणतासिद्धिरिति प्राप्ते—नोक्तश्रुत्यादेस्तथात्वम् । पाशुपतादिस्मृतिवदुक्तानुपलब्ध्यादिहेतुनाऽप्रामाण्य कल्प्यम् । उक्तान्वयव्यभिचारस्याकारणत्वासाधकत्वात् । यतोऽन्वयव्यभिचारो निर्णीतघटादिकारणतोकेषु मृद्दण्डादिष्वपि दृश्यते स्वस्वव्यापारेतरयावत्कारणसत्त्वे कार्यानुत्पत्तिस्त्वसिद्धा । • व्याघातात् । अधिकारादिरूपकारणान्तराभावसभवाच्च । न चैव फलविसंवादेन पाशुपतादीनामप्रामाण्योक्तिरसंगता स्यादिति वाच्यम् । तेषामनिर्णीतप्रामाणकत्वेन कारणान्तराभावाधीन विसंवादकल्पनाया बीजाभावात् । न च वेदानामपि तथात्वम् । तेषां ततो नित्यत्वाख्यवैलक्षण्यात् । नित्यत्व च 'वाचा विरूपनित्यया' इति श्रुतिसिद्धम् । न च नित्यत्वेऽप्रामाण्य वक्तुं

णत्वम् । वाक्याप्रामाण्यस्य वक्तृदोषाधीनत्वात् । न चाऽऽप्ताश्रयः । यतः 'वाचा विरूपनित्यया' इत्यादिश्रुतिजन्मज्ञानस्य प्रामाण्यं साक्षिसिद्धं नापवादमन्तरा ह्रातुं शक्यते । प्रमाणान्तरविरोधादिरपवादहेतुश्चात्र नोपलभ्यते । तथा च सिद्धे प्रामाण्ये तन्निर्वाहाय फलविसंवादो वैगुण्याधीन इति युक्तं कल्पयितुम् । पाशुपतादिस्मृतेश्च प्रामाण्यानिश्चयात् । न तत्र तत्कल्पनावकाशः । पाञ्चरात्रादिस्मृतीनां च वेदानुसारित्वात्प्रामाण्यम् । अतो वेदादिभिर्विष्णोर्जगत्कारणतासिद्धिरप्रत्यूहेति सिद्धान्त इति रीत्या × सूत्रयोजनामाहुः । तत्रेदं दूषणं चिन्त्यम्—अस्मद्रीत्या पूर्वतन्त्राद्युपपादितवेदप्रामाण्यमनाक्षिप्यैव पूर्वपक्षसंभवे तदाक्षेपेण पूर्वपक्षप्रवर्तनस्यानुचितत्वात् । किंच कपिलकणभुक्पाशुपतादीना वेदप्रामाण्याभ्युपगन्तृत्वान्न तन्मतावलम्बनेनेयमाशङ्का । कपिलतन्त्रे 'नाद्वैतश्रुतिविरोधो जातिपरत्वात्' ( सां० सू० १ । १५४ ) इत्यादिसूत्रे श्रुतिव्याख्यानदर्शनात् । 'तद्वचनादाम्नायस्य प्रामाण्यम्' ( वै० सू० १ । १ । ३ ) इति वैशेषिकतन्त्रे वेदप्रामाण्यस्य न्यायपश्चाध्याय्या कण्ठत एवोक्तेः ।

> एवमभ्यर्थितस्तैस्तु कृतवानस्मि संहिताम् ।
> वेदक्रियासमायुक्ता पुराऽहं द्विजसत्तम ॥
> सैव पाशुपते दीक्षा यागः पाशुपतं च सः ।

इति पाशुपतागमोक्तेश्च । कारणागमेऽपि पातीति पा वेदस्तं खण्डयतीति पाषण्ड इति निरुच्य स्वस्य वेदाविरुद्धत्वादपाषण्डता, इतरेषां तथात्वं चोक्तम् । अथ जैनबौद्धादिमतावलम्बनेनात्र पूर्वपक्ष इति चेत् । तथा सति तदनभिमतवेदनित्यत्वस्वतःप्रामाण्यादिना सिद्धान्ते तत्प्रामाण्यसाधनानुपपत्तेः ।

यत्तु—'वाचा विरूपनित्यया' इत्यादिश्रुत्यर्थे विसंवादाभावाद्वेदप्रामाण्यसिद्धिरिति । तन्न । उत्पन्नो गकारो विनष्टो गकार इति प्रत्यक्षविसंवादस्य तत्रापि तुल्यत्वात् । प्रत्यभिज्ञा-

---

× सूत्रयोजनामिति । 'न विलक्षणत्वात्०' इति सूत्रयोजनामाहुरित्यर्थः ।

याश्च बुद्धागमसाधारण्यात्। आनुपूर्वीनित्यतायामप्येवम्। एतेन फलविसंवादेन पाशुपतादिस्मृतिवत् 'कारीर्या यजेत' इत्याद्येकदेशाप्रामाण्यशङ्कायां नित्यत्वेन प्रामाण्यसाधनमिति निरस्तम्। कारीर्यादिस्थले फलविसंवादस्येव 'वाचा विरूपनित्यया' इत्याद्येकदेशे प्रत्यक्षविसंवादस्य तुल्यत्वेन तदुक्तनित्यत्वेन प्रामाण्यसाधनायोगात्।

यदपि 'न विलक्षणत्वात्' (ब्र० सू० २।१।४) इत्यादिप्रथमसूत्रानन्तरम् 'दृश्यते तु' (ब्र० सू० २।१।६) इति सूत्रं पठित्वाऽधिकारिणां फलं दृश्यते। अधिकारश्च फलयोग्यत्वं कर्मवैगुण्यप्रतिबन्धराहित्यं यावत्कारणसंपत्तिर्वेति * तदर्थवर्णनम्। तदपि शिथिलम्। क्वाचित्कफलदर्शनस्य = काकतालीयत्वशङ्काकवलितस्य बौद्धादिभिरप्यनिरासेन तद्वैयर्थ्यात्।

---

* तदर्थवर्णनमिति। अयं भावः— ननु यदुक्तं नित्यत्वेन निर्दोषस्य वेदस्य नाप्रामाण्यमिति। नैतद्युक्तम्। तदुक्तफलस्यादर्शनात्। तदेव ह्यप्रामाण्यम्। न च प्रामाण्यस्य स्वतस्त्वेन संवादानपेक्षितेति वाच्यम्। स्वतःप्रामाण्यवादिनाऽपि दोषदर्शनेऽप्रामाण्यस्यावश्यं ग्राह्यत्वात्। अयमेव हि दोषो यत्पूर्वोक्तस्यादर्शनमिति चेत्। उच्यते—न फलादर्शनेन श्रुत्यादेरप्रामाण्यं वक्तव्यम्। फलादर्शनस्य कर्तुरयोग्यतयोपपत्तेः। कुत एतत्कल्प्यत इति चेत्। योग्यानां फलदर्शनात्। न चोक्तरीत्या पाशुपतादिस्मृतीनामपि प्रामाण्यं स्यादिति वाच्यम्। तत्र योग्यानां फलदर्शनादिति कल्पकाभावात्। वेदस्य तु निर्दोषतया स्वतःप्रामाण्ये सिद्धे व्यभिचारस्यावश्यं गत्यन्तरं कल्पनीयम्। अत एव सूत्रे तुशब्दः प्रयुक्तः। स च कर्तृविशेषस्य द्योतकः। तत्त्वं च तत्फलयोग्यत्वं कर्मवैगुण्यप्रतिबन्धादिशून्यत्वमिति।

= काकतालीयमिति। न्यायस्वरूपं च यथा—काकतालीयमित्यत्र काक इव तालमिवेति 'समासाच्च तद्विषयात्' (पा० सू० ५।३।१०६) इति ज्ञापकात्सुप्सुपेतिवार्थे समासः। तत्र पूर्वपदमुपमानकाकागमनपरम्। उत्तरपदं चोक्तपूर्वपदार्थसमानाधिकरणोपमानतालपतनपरम्। ततः काकतालमिवेति द्वितीयस्मिन्निवार्थे पूर्वोक्तसूत्रेण च्छप्रत्यये काकतालीयमिति भवति। तत्र प्रकृतिभूतसमुदायश्चोपमेयदेवदत्तागमनसमानाधिकरणचोरपतनादि-

यदपि—'मृदब्रवीत्' इत्यर्थवादवाक्यस्य 'मृत्न वदति जडत्वात्' इत्यादियुक्तिविरुद्धार्थकत्वादप्रामाण्ये स्थिते तत्स-जातीयवेदमात्रेऽनाश्वासप्रसङ्गान्नोक्तसमन्वय इति प्राप्ते—भवेदेव यदि मृदाद्येवोच्येत । नैतदस्ति । मृदाद्यभिमानिन्यो देवता एव तत्र मृदादिशब्दैर्व्यपदिश्यन्ते । ननु ता अभिमन्यमानव्यापिन्य किंवा तदेकदेशवर्तिन्यः । आद्येऽपि विग्रहवत्यो न वा । न प्रथमे प्रथमः । उपलम्भप्रसङ्गात् । न द्वितीयः । वचनाद्ययो गात् । नान्त्यः । तद्रहितदेशवद्देशान्तरावस्थानोपपत्तौ तद्वैयर्थ्य-मिति चेत् । अस्त्येव तासां सर्वत्रानुगतिर्विग्रहश्च । न च दर्शन-प्रसङ्गः । सर्वगतानां विग्रहवतीनामपि तासामितरेभ्यो विशेष-सामर्थ्येनादर्शनसंभवादित्यभिमानिसूत्रार्थः । नन्वप्रामाणिकदे-वताकल्पनात्तासां च विशिष्टसामर्थ्यकल्पनाच्च वरं वेदाप्रामाण्यम्। लाघवात् । न च वेदेन तत्सिद्धिः । तत्प्रामाण्ये विवादादित्या-शङ्कां परिहरति—दृश्यते च । अभिमानिदेवतानां तत्सामर्थ्यस्य च महद्भिर्दृश्यमानत्वादिति 'दृश्यते च' इति द्वितीय×सूत्रार्थ इति । तदप्यसत् । अत्रापि कपिलकणभुगादिमतावलम्बनेन पूर्वपक्षायोगस्य महत्कर्तृकदेवतादर्शनरूपसिद्धान्तयुक्तेरवेदवाद्य-नभिमतत्वेन तान्प्रत्येतादृशसिद्धान्तोपपादकयुक्तिप्रदर्शनायोगस्य च तुल्यत्वात् । न च श्रुतिस्मृत्याद्यलौकिकप्रमाणमन्तरेणाभि-मानिदेवतानां महापुरुषप्रत्यक्षगोचरता सिध्यति । मन्मते तु वेद-प्रामाण्यमनपहायैवाभिमानिसूत्रप्रवृत्तेर्नानुपपत्तिः काचिदपि ।

यदपि 'असदेवेदमग्र आसीत्' (छा० ३ । १९ । १) 'असतः सदजायत' इत्यादिनाऽसतः कारणत्वोक्तेर्विरोध

---

पर । एव चोपमानकाकागमनसमानाधिकरणोपमानतालपतनोपमेय देवदत्तगम-नसमानाधिकरण चोरपतनादीति समासार्थ । विशिष्टे विशिष्टनिरूपितोपमेय-त्वबोधाद्विशेषणे विशेषणनिरूपित विशेष्ये विशेष्यनिरूपित च तत्पर्यवस्यति। तत्तदुपमेयबोधे तत्तदुपमेयवाचकसमभिव्याहारस्तन्त्रम् । ततस्तद्धितसमभिव्या-हारे समासार्थोपमानप्रयोज्योपमानभूततालकृतकाकवधोपमेय समासार्थोपमेय-प्रयोज्यश्चोरकृतवधादिरिति बोध. । शब्दशक्तिस्वाभाव्यादिति बोध्यम् ।

× सूत्रार्थ इति । एतत्सर्वं तत्त्वप्रकाशिकायां स्पष्टम् ।

इत्यतो वक्ति—'असदिति चेन्न प्रतिषेधमात्रत्वात्' इति। जगत्कारणत्वं विषयः। तद्विष्णोर्युक्तमयुक्तं वेति संदेहः। श्रुतिविगानं संदेहबीजम्। तत्र न विष्णोर्जगत्कारणत्वं युक्तम्। तत्र प्रमाणाभावात्। न च 'यतो वै' इत्यादिश्रुतिः प्रमाणम्। 'असदेवेदमग्र आसीत्' इत्यादिश्रुत्याऽसतोऽपि कारणत्वोक्तेः। द्वयोः श्रुतित्वाविशेषेऽप्यसत्कारणताबोधकश्रुतेः 'कारणं प्रलयेऽसद्भवितुमर्हति वस्तुत्वात्कार्यवत्' 'विमता भावाः प्रलयेऽसन्तो भावत्वात्सम्मतवत्' इति तत्त्वप्रकाशिकाचन्द्रिकाद्युक्तानुमानरूपयुक्तिसहितत्वेन प्रबलत्वादसदेव कारणमिति पूर्वपक्षे सिद्धान्तः—युक्तमेव विष्णोर्जगत्कारणत्वम्। न त्वसतः। तस्याभावधर्मात्मतामन्तरेण स्वरूपत एव प्रतिषेधबुद्धिविषयत्वात्। असतः कारणत्वादियुक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते। सर्वशब्दानां ब्रह्मणि समन्वयेऽपि 'तदधीनत्वादर्थवत्' (ब्र० सू० १।४।३) इत्यादिना मुख्यस्यैवामुख्यस्यापि वाच्यत्वाङ्गीकारादसतः प्राप्तिः। तथा श्रुतिप्राप्तमेवासन्मत निषिध्यते। समयस्योपरि निषेधादर्थाद्युक्तिविरोधो निराक्रियत इत्यानन्दतीर्थीयानाम् 'असदिति चेन्न प्रतिषेधमात्रत्वात्' इति +सूत्रयोजनम्। तत्रेदं चिन्त्यम्—कारणतायाः कालसबन्धितानियतत्वेनासतः कारणत्वशङ्काया अयुक्तत्वात्।

अथात्रासत्पदं प्रागभावपरम्। तथैव व्यासतीर्थानां चन्द्रिकायां व्याख्यानदर्शनात्। उक्तं च चन्द्रिकायाम्—* अत्रासच्छब्दे शतृप्रत्ययस्यासदभवनमिति च्छान्दसेन भावसाधनत्वेना-

---

+ सूत्रयोजनमिति। एतदपि सर्वं तत्त्वप्रकाशिकायां स्पष्टम्।

* अत्रासच्छब्द इति। अयमर्थः—अत्र नाम श्रुतिसूत्रभाष्येष्वसच्छब्दोऽभावपरः। कथमभावपर इति चेत्। शतृप्रत्ययस्य भावसाधनत्वेन भावप्रधानत्वेन वेति बोध्यम्। ननु शतृप्रत्ययस्य 'ल: कर्मणि च भावे॰' इति विहितकर्त्रर्थलट्प्रत्ययस्य स्थान एव विहितत्वात्कर्त्रर्थकत्वमेव स्यान्न तु भावसाधनत्वमिति चेत्। छान्दसत्वादिति बोध्यमिति।

---

१ क॰ 'ब्दः शतप्रत्य'।

सदसत्त्वमिति भावप्रधानत्वेन वाऽभावपर इति । तथा प्रागभावस्यैव कर्तृत्वमिति पूर्वपक्ष एव तत्संमतः । तथा हि चन्द्रिकायाम्—" अत्र विष्णोर्जगत्कर्तृत्वं युक्तिविरुद्धमुत नेति चिन्ता । तदर्थं विश्वप्रागभावः किं विश्वकर्तोत नेति । तदर्थं प्रागभावस्य कर्तृत्वसाधिका वक्ष्यमाणा युक्तिः श्रुतिसंवादिनी, उत नेति । तदर्थम् ' असद्वा इदमग्र आसीत् ' ( तै० २ । ७ ) इति । ' तदसदेव सन्मनोऽकुरुत ' इति श्रुतिः किं प्रागभावस्य सकल्पप्रतिपादिका, उतान्यस्येति । पूर्वपक्षस्तु विश्वप्रागभावस्ताव-द्विश्वहेतु । घट प्रति घटप्रागभावस्यैवानन्यथासिद्धनियतपूर्ववृत्तित्वात् । अन्यथोत्पन्नो घटः पुनरुत्पद्येत प्रागभावस्य हेतुत्वे तु तदभावादेव नोत्पन्नस्योत्पत्तिः । प्रागभावस्याहेतुत्वे च पाकजरूपरसादीनां भेदो न स्यात् । कार्यभेदस्य कारणभेदाधीनत्वात् । प्रागभावादन्यस्य कारणस्य तत्राभेदात् । श्रूयते च 'असद्वा इदमग्र आसीत्' इति प्रागभावस्य हेतुत्वम् । न ह्यत्रासच्छब्दः शून्यपर । असतो नियतप्राक्सत्त्वरूपहेतुत्वायोगात् । ' आसीत् ' इति सत्त्वोक्तिविरोधाच्च । एव च सिद्धे प्रागभावस्य हेतुत्वे प्रागभावान्तरेऽदृष्टमपि विश्वप्रागभावस्य कर्तृत्वम् ' विमता भावाः प्रलयेऽसन्तो भावत्वात्कार्यवत् ' इत्यनुमानेन प्रलये भावमात्रासत्त्वसिद्धेः कार्यस्य च सकर्तृत्वनियमात्परिशेषात्सेत्स्यति । लघु च क्लृप्तस्य प्रागभावस्य कर्तृत्वमात्रकल्पनमीश्वरतत्कर्तृत्वादिकल्पनात् । दृश्यते चाचेतनेऽपि कर्तरि विहिततृतीयादि । अशरीरत्वेऽपीश्वरस्येवोपादानत्वेऽपि ब्रह्मण इव च जीवस्यापि चेतनत्वेऽपीश्वरमात्रस्येवाभावत्वेऽपि विश्वप्रागभावस्य कर्तृत्वमस्तु । ' तदसदेव सन्मनोऽकुरुत ' इति श्रुतावसच्छब्दार्थस्य विश्वप्रागभावस्य मनःशब्देन वा कर्त्रैकारेण वा ज्ञानेच्छाद्युक्तेश्च । शब्दगत्यो ह्यर्थो यथाशब्दमङ्गीकार्यः" इति प्रागभावस्यैव कर्तृत्वमस्त्विति चेत् ।

न । श्रौतासत्पदस्वारस्यहानावश्यकत्वे ' एतेन सर्वे व्या-

---

१ क °त्वं श्रुतिवि° । २ क °न्यपरेति । ३ क °वेक्षणवर्तित्वा° । ४ क °त । प्रागभावस्यां° । ५ क. °द् । आ° । ६ क. °म् । इ° । ७ क. °यादि । ' तद° । ८ क °स्य ज्ञा° ।

ख्याता ’ ( ब्र० सू० १।४।२८ ) इति प्रथमाध्यायान्त्य(न्त्या)- धिकरणोक्तेन ‘ तदधीनत्वादर्थवत् ’ ( ब्र० सू० १।४।३ ) इति प्रवृत्तिनिमित्ततादधीन्यन्यायेन ‘ यतो वा इमानि भूतानि जायन्ते ’ इत्याद्यनेकश्रुत्यैकवाक्यत्वाय यथाकथंचित्प्रतीयमानार्थपरत्वमतिप्रसङ्गापादकं परित्यज्य तत्पदस्य ब्रह्मपरताया एवोचितत्वेन श्रुत्या प्रागभावकर्तृताया अप्राप्तेः । पूर्वपक्षे ब्रह्म कारणत्वाभिधायिबहुश्रुतिविरुद्धमसत्कारणत्व क्लिष्ट श्रुत्यर्थः स्यात् । ननु कथ श्रौतासत्पदस्वारस्यहानिः पूर्वपक्ष इति चेत् । असच्छब्दस्य प्रागभावे रूढया प्रयोगाभावेन प्रागभाववादिभिर्वैशेषिकादिभिरपि तस्य तेन शब्देन व्यवह्रियमाणत्वाभावेन ‘ नासतोऽदृष्टत्वात् ’ ( ब्र० सू० २।२।२६ ) इत्यादौ सूत्रकृता शून्यस्यैव त्वन्मतरीत्या तेन शब्देन ग्रहणेन ‘ न सदसत् ’ इति व्युत्पत्त्या सद्भिन्नत्वेन भावभिन्नत्वपर्यवसितेन तस्य प्रागभाववाचित्वसंभावनायामपि ‘ अत्रासच्छब्दः शतृप्रत्ययस्यासदभवनमिति च्छान्दसभावसाधनत्वेनासदसत्त्वमिति भावप्रधानत्वेन वाऽभावपर इति प्रागभावस्यैव कर्तृत्वमिति प्रयासेन तस्य प्रागभावार्थकत्वं वर्णयतस्त्वत्पूर्वपक्षिणस्तथा प्रयासवैफल्यापत्त्या तस्य तथा प्रागभाववाचिताया अनभिप्रेतत्वेन प्रागभावस्याभिधेयत्वेन भावधर्मात्मनो भावभिन्नत्वे सत्यभावत्वपर्यवसितं प्रतिषेधमात्रत्वमसिद्धमिति हेतुस्वरूपाविवेचनायां त्वदुक्तरीत्या प्रागभावस्य सद्भिन्नत्वासंभवेन कथंचित्संभवे च तद्रीत्यैव तस्य प्रतिषेधमात्रत्वस्यापि संभवेन स्वरूपासिद्ध्यभावात्तन्निराकरणायाभावधर्मात्मतामन्तरेणेत्यादिहेतुस्वरूपनिर्वचनप्रयासवैफल्येन चासच्छब्दस्य प्रागभावार्थतायामस्वारस्यमित्यवेहि । प्रागभावसत्त्वे प्रमाणाभावाच्च न श्रुत्या तत्कर्तृत्वप्राप्तिः । न च घटोत्पत्त्यनन्तरं घटस्य प्रागभावोऽत्राऽऽसीदिति प्रतीतिरेव तत्सत्त्वे प्रमाणमिति शङ्क्यम् । उत्पत्त्यनन्तर प्रागभावस्यासत्त्वेनोत्पत्तेः पूर्वं घटस्यैवासत्त्वेनासता घटेन प्रागभावेन वा संबन्धानिरूपणात्प्रागभावस्य घटीयत्वासिद्धेः । प्रतियोग्यनुयोगिभाव एव सबन्ध इत्यपि न । तस्य

स्वरूपसंबन्धविशेषरूपत्वेन प्रत्येकस्वरूपत्वेन संयोगादिवत्संबन्धत्वासंप्रतिपत्तेः । प्रतीतिमात्रस्य वस्त्वसाधकत्वात् । प्रतियोग्यनुयोगिभावस्य केनचित्संबन्धेन संबद्धस्यैव संबन्धतोऽसंबद्धस्येत्यादिविकल्पग्रस्तत्वात् । घटात्यन्ताभावविषयकत्वेन तादृशप्रतीत्युपपत्तेश्च । न चोत्पत्तेः पूर्वं मृदादौ घटादेः प्रागभाव एव नात्यन्ताभावः । अन्यथाऽसत्कार्यवादे शशविषाणस्यापि कारकव्यापारादुत्पत्त्यापत्तेः । तादृशप्रतीतेः प्रागभावविषयकत्वमेव नात्यन्ताभावविषयकत्वमिति वक्तुं शक्यम् । उत्पत्तेः पूर्वमसत्त्वाविशेष उक्तविशेषस्यासिद्धेः । तन्मते शशविषाणोत्पत्तेरापादनीयत्वात् । 'उत्पन्नोऽपि घटः पुनरुत्पद्येत पाकजरूपरसादीनां भेदश्च न स्याद्यदि प्रागभावस्य न हेतुत्वम् । प्रागभावादन्यस्य कारणस्य तत्राभेदात्' इति पूर्वपक्षे चन्द्रिकोक्तं न तु सत् । घटं प्रति घटस्य प्रतिबन्धकत्वेन क्लृप्ततदत्यन्ताभावस्य कारणत्वकल्पनयैवोत्पन्नघटोत्पत्तेरापादनायोगात् । घटोत्पत्तेः पूर्वमत्यन्ताभावसत्त्वमुपपादितमेव । एका सामग्र्येकमेव कार्यं जनयतीति स्वभावकल्पनात् । धर्मिकल्पनातो धर्मकल्पनायां लाघवाच्च । लघु चेश्वरतत्कर्तृत्वकल्पनापेक्षया क्लृप्तप्रागभावस्य हेतुत्वमित्यनेनोक्तलाघवस्य त्वयोक्तत्वाच्च न तदापत्तिः । तत्क्षणादृष्टादिरूपकारणाभावेन सामग्र्यभावाच्च न तदापत्तिः । न वा प्रागभावादन्यस्य कारणस्याभेदात्पाकजरूपरसादीनामभेदापत्तिः । विजातीयरूपरसत्वाद्यवच्छिन्नं प्रत्येकजातीयाग्निसंयोगरूपपाकस्य हेतुत्वमिति कार्यकारणभावानुरोधेनैव तद्भेदसिद्धेः । तद्विरोधेन प्रत्यक्षविरोधेन च तदैक्यापादनस्यासंभवात् । किंचोत्पन्नो घटः पुनरुत्पद्येतेत्युत्पन्नस्योत्पत्तिरापाद्यमानाऽप्रसिद्धत्वादापादयितुमशक्या । तदापादकतत्कारणाक्लृप्तेः । अन्यथा शशविषाणादीनामप्युत्पत्त्यापत्तिः स्यात् । कथं वा प्रत्यक्षतो गृहीतभेदानां रूपरसादीनां रूपं रसः स्यादित्यापादनं संभवति । रूपे रसत्वाभावादेव तदापत्त्ययोगादित्यलम् ।

अस्तु वोत्पन्नस्य घटस्य पुनरुत्पत्तिवारणानुरोधेन प्रागभावसिद्धिस्तथाऽपि तस्य तत्तद्व्यक्तिप्रतियोगिकस्यैव सिद्धेः ।

विश्वत्वावच्छिन्नप्रतियोगिताकस्यातिरिक्तप्रागभावस्यासिद्धेः । तत्र प्रमाणाभावात् । ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमनङ्गीकुर्वाणैस्तार्किकैरनङ्गीकाराच्च । तदङ्गीकुर्वद्भिरपि 'न हि तयोः सामान्याभावत्वमतेऽप्येकविशेषप्रागभावविशेषान्तरध्वंसवत्यपि समये सामान्यावच्छिन्नप्रतियोगिताकध्वंसप्रागभावयोः संभवः' इति दीधितिकारोक्तदिशा तादृशध्वंसस्य महाप्रलय एव संभवेन चरमध्वंसस्येवाऽऽद्यप्रागभावस्यैव तथात्वस्वीकारावश्यकतयाऽऽद्यप्रागभाव एव तथा वाच्यः । तथा च सत्याद्यकार्यमुत्पाद्य नष्टस्य तस्य द्वितीयादिकार्यकर्तृताया असंभवेन कथं तस्य विश्वकर्तृत्व[ मिति ] शङ्का युज्यते । आद्यकार्यप्रागभावस्यैव तत्तत्कार्यानुकूलनानाशक्तिकल्पनायां नायं दोष इति चेत् । प्रागभावव्यतिरिक्तशक्तेः प्रलये सर्वभावासत्त्वं भावत्वहेतुना समर्थयता स्वपूर्वपक्षिणा वक्तुमशक्यत्वात् । शक्तेः प्रागभावस्वरूपत्वे च तस्यास्तन्नाशेन नाशावश्यंभावादुक्तदोषानुद्धारात् । किंच प्रागभाववादिना वैशेषिकादिना शक्तिपदार्थस्यातिरिक्तस्यानङ्गीकारात्तत्स्वीकार उत्पन्नो घटः पुनरुत्पद्येत । प्रागभावस्याहेतुत्वे च पाकजरूपरसादीनां भेदो न स्यात्प्रागभावाद्रूपस्य कारणस्य तत्राभेदादिति प्रागभावस्य कार्यहेतुत्वसाधकयुक्तेः पूर्वपक्षसमर्थनावसर उक्ताया असंभवापत्तेः । शक्तिपदार्थस्वीकार उत्पन्नघटानुकूलशक्तेस्तदुत्पत्त्या नाशेन पुनस्तदुत्पत्तेरापादयितुमशक्यत्वात् । पाकजरूपरसादीनां कारणीभूतशक्तीनां भेदात्तेषां भेदोपपत्तेश्च । शक्तिपदार्थस्वीकारे प्रागभावसिद्धेरेव दुर्घटत्वात् । न च यावत्कार्यप्रतियोगिक एक एव प्रागभावः, तद्गतं तत्तत्प्रतियोगिकत्वं तत्तत्कार्योत्पत्त्या नश्यतीति पूर्वपक्ष्याशय इति केषांचिदुक्तिः सुवचा । 'तस्मात्तत्तत्प्रागभाव एव तत्कार्यहेतुः' इति सुधोक्तपूर्वपक्षनिगमनोक्तिविरोधात् । एकस्मिन्प्रागभावे तत्तत्कार्यनाश्यतत्तत्कार्यप्रतियोगिकत्वं स्वीकृत्य तस्य हेतुत्वे विनिगमनाविरहेण सर्वेष्वपि प्रागभावेषु तथा स्वीकर्तुं शक्यत्वेन 'लघु चेश्वरतत्कर्तृत्वकल्पनापेक्षया

प्रागभावहेतुत्वकल्पनम् ' इति पूर्वपक्षे चन्द्रिकोक्तिविरोधाच्च । त्वदभिमतैतादृशप्रागभावस्याक्लृप्तत्वाच्च । तत्तत्प्रतियोगिकत्वस्य प्रागभावातिरिक्तस्य भावरूपस्य प्रलये सर्वभावासत्त्वं समर्थयता त्वत्पूर्वपक्षिणा वक्तुमशक्यतया प्रागभावात्मकस्वरूपसंबन्धविशेषस्य तस्यैकं कार्यमुत्पाद्यान्यकार्योत्पत्त्यर्थं स्थितस्य प्रागभावस्य स्थितौ नाशासंभवेनोत्पन्नस्य पुनरुत्पादापत्तेर्दुर्वारत्वाच्च । न च तत्तत्कार्यं प्रति तत्तत्प्रागभावस्य कर्तृत्वमित्येतावानेवार्थो विवक्षितस्तावतैव विश्वकर्तृत्वव्यपदेश इति वाच्यम् । तथा सत्यपि ' असद्वा इदमग्र आसीत्तदसदेव सन्मनोऽकुरुत ' इति श्रुतिः किं प्रागभावस्य संकल्पप्रतिपादिका, उतान्यपरेति व्यासतीर्थानां तदर्थसंशयप्रदर्शनासंगतेः । संकल्पो हि प्रागभावस्य कार्यम् । तेनैव च नष्टेन प्रागभावेन कार्यान्तरजननासंभवात् । किंच कार्यमात्रस्य सकर्तृकत्ववत्सोपादानकत्वस्याप्यनुभवसिद्धत्वाद्युक्तिसिद्धत्वाच्च प्रलयकाले भावमात्रासत्त्वं समर्थयता पूर्वपक्षिणाऽऽद्यकार्यं प्रत्युपादानं प्रागभाव एवेति वक्तव्यम् । तथा सत्युपादानकारणस्य संकल्पोत्तरकालीनकार्येऽन्वयस्यावश्यं वाच्यतया प्रागभावमर्यादामुल्लङ्घ्य वर्तमानस्य तस्य प्रागभावत्वोक्तिरत्यन्तासंबद्धैव । किंच प्रागभावस्य प्रतियोगिसमानदेशत्वं तन्त्रान्तरसिद्धं सृष्टिपूर्वकालीने विश्वकर्तृत्वेन त्वत्पूर्वपक्ष्यभिमते विश्वप्रागभावे दुर्घटम् । तेन प्रलये भावमात्रासत्त्वसमर्थनात् । तथा च क्लृप्तप्रागभावमर्यादातिलङ्घनेन पूर्वपक्षो नितरामयुक्त एव । श्रूयते चेत्यादि दृश्यते चाचेतने कर्तरि विहिततृतीयादिरिति प्रागभावस्य श्रुत्यर्थगौणकर्तृतामादाय पूर्वपक्षो विष्णोर्मुख्यकर्तृतासिद्धान्ताविरुद्धश्च । अद्वैतरीत्या ' न विलक्षणत्वात् ' इत्यधिकरणे ब्रह्मणो जगद्विलक्षणत्वादनुपादानत्वपूर्वपक्षं केवलोपादानस्य कार्यसालक्षण्यनियमेऽपि त्वन्मते तन्तु-प्रत्यूर्णनाभ्यादेरिव जगत्प्रति ब्रह्मवैलक्षण्येऽपि सिद्धान्त्यभिमतस्य निमित्तत्वे सत्युपादानत्वस्य संभवेन पूर्वपक्षः सिद्धान्ताविरुद्ध इति दूषयता त्वया कर्तुमशक्य एव । ' तदसदेव सन्मनोऽकुरुत ' इत्यादिशब्दगम्यो ह्यर्थो यथाशब्दमङ्गीकार्य इत्यनेन ज्ञानेच्छादिम

स्वरूपमुख्यकर्तृत्वमादाय पूर्वपक्षोऽप्यसच्छब्दस्य प्रागभावास्वर-सतया तदर्थत्वनिराकरणेन निरस्तप्राय एव नोन्मज्जनमर्हति। अपि च 'विमता भावाः प्रलयेऽसन्तो भावत्वात्संमतवत्' इति प्रलये भावमात्रासत्त्वसमर्थनेनेशकारणताप्रतिक्षेपसिद्धेरावश्यकताद्दश्य( स्य )युक्तिविरोधपरिहारमात्रपरत्वे संभवत्येताद्दशरीत्यैतत्सूत्रस्यालीकस्य प्रागभावस्य वा सर्वथाऽसभावित विश्वकर्तृत्वं दुराग्रहतयैव पूर्वपक्ष्यभिप्रेततया स्वयोपवर्णनीयम्। तच्चायुक्तम्। न च "श्रुत्युपसर्जनयुक्तिपरिहारस्यैतदधिकरणोपाधेर्मदभिमतस्य निर्वाहार्थं युक्तौ श्रुतिसवादित्वस्यावश्य वाच्यतया प्रकृतानुपयुक्तमपि प्रागभावस्य कर्तृत्व पूर्वपक्ष्यभिप्रेततयाऽऽदृतम्। उक्त च चन्द्रिकायाम्—श्रुत्युपसर्जनप्रागभावकर्तृत्वसाधकयुक्तिविरोधोऽत्र निरस्यते। न तु समयप्राप्तमसत्कारणत्वम्। तस्य द्वितीये निरसिष्यमाणत्वात्। नापि श्रुतिमात्रप्राप्तम्। तस्य तृतीय एव सगते.। नापि युक्त्युपसर्जनकश्रुतिप्राप्तम्। तस्य चतुर्थ एव संगतेः। नापि समप्रधानश्रुतियुक्तिभ्यां प्राप्तम्। तस्य तृतीयेऽपि संगतेः। नापि युक्तिमात्रप्राप्तम्। पूर्वाधिकरणे दृढयुक्तिविरोधे निरस्त इह युक्तिमात्रेण पूर्वपक्षानुदयादिति" इति वाच्यम्। प्रलये सर्वभावासत्त्वसाधकयुक्तेः श्रुतिमूलकत्वासिद्धेः। न च प्रागभावकर्तृताबोधकश्रुतिरेव स्वार्थसिद्धये प्रलये सर्वभावासत्त्वमाक्षिपतीति वक्तुं युक्तम्। प्रलये भावान्तरसत्त्वेऽपि प्रागभावकर्तृताया उपपद्यमानतया तदर्थमुक्ताक्षेपायोगात्। असच्छब्दस्य प्रागभावे स्वरसाभावेन 'यतो वै' इत्यादिश्रुतिविरोधेन प्रागभावस्यासच्छब्दार्थत्वाभावस्योक्तत्वाच्च। किंच प्रागभावस्य कर्तृतापूर्वपक्षस्त्वत्प्रकाशिकाविरुद्धः। तस्यां हि 'नन्वस्त्वेवमसतः प्राप्तिस्तथाऽपि समयोऽत्र निराक्रियत[1] इति किं न स्यात्' इति शङ्कया 'श्रुतिप्राप्तमेव' इति भाष्यमवतार्य 'शून्यवादिसमयस्योपरितनपादे निराकरिष्यमाणत्वात्। अत्र श्रुतिप्राप्तमेवासन्मत निषिध्यत इत्येवाङ्गीकार्यम्। अन्यथा पौनरुक्त्यापातादिति भावः' इति भाष्यता-

---

1 क निराक्रियत।

त्पर्योक्तेः । न च शून्यवादिना प्रागभावस्य हेतुत्वमुच्यते । येनात्र प्रागभावकारणताविरोधोक्त्या पौनरुक्त्यं स्यात् । यत्तु चन्द्रिकायाम्—प्रागभावप्रापकप्रमयाभावादत्रापि शून्यनिराकरणेऽग्रेऽपि तन्निराकरणात्पौनरुक्त्यमिति पौनरुक्त्यापातादित्यस्य भाववर्णनं तत्स्वोक्तिविरोधात्सुधोक्तिविरोधाच्चानुपादेयमेव । तथा हि—स्मृत्यधिकरणे युक्तिविरोधपरिहारात्मके पादे स्मृत्यधिकरणनिवेशमाक्षिप्योक्तं चन्द्रिकायाम्—'पाशुपतादिस्मृतीनां समयरूपत्वेन स्वोक्तेऽर्थे संमतित्वेन श्रुतियुक्तिकथनेन चतूरूपत्वात्तदविरोधस्यैकैकाविरोधप्रतिपादके पादविशेषेऽनन्तर्भावेऽप्यविरोधाध्यायान्तर्भावेन (ण) क्वचिन्निवेशे कर्तव्ये प्रथमातिक्रमे हेत्वभावाच्चतुरात्मकतया प्रबलतया च प्रथमं निरसनीयत्वाच्चादावेव निवेशः' इति । तत्र पाशुपतादिस्मृतीनामित्यत्राऽऽदिपदेन बौ[द्धा]र्हतादिस्मृतीनां ग्रहणम् । तन्मतरीत्या पूर्वपक्षाणां स्मृत्यधिकरणे दर्शितत्वात् । 'यदुक्तम्— परस्य ब्रह्मणो विष्णोः सकलजगज्जन्मादिकारणत्वादिकम् । तदयुक्तम् । पाशुपतबौद्धसांख्यार्हतादिस्मृतिविरुद्धत्वात्' इति स्मृत्यधिकरणे पूर्वपक्षे सुधोक्तेश्च । सुधायां च—युक्तिविरोधपरिहारलक्षणेऽत्र पादे स्मृतिविरोधपरिहारो न कर्तव्य । असगतत्वात् । कर्तव्यतायां वा प्राथम्यं कुत इति शङ्कया 'तस्या ' इत्यनुभाष्यमवतार्य, एतदुक्तं भवति—पाशुपतादिस्मृतयो हि स्वयमाप्ताभिमतवाक्यतया समयरूपा अपि स्वाभिमतार्थे युक्तिश्रुतीश्च संवादयन्त्यो युक्तिसमयादित्रिरोधिचतुष्टयरूपाः । ततश्चोक्तेऽर्थे तद्विरोधपरिहारोऽस्मिन्नध्यायेऽन्तर्भवत्येव । किंतु पादचतुष्टयसंगतोऽप्ययं न निष्कृष्यैकत्रैव पादेऽन्तर्भवति । ततोऽध्यायादौ तदन्ते वा वक्तव्यः । प्रथमातिक्रमे च न किंचित्कारणमित्याद्याधिकरणे निरूप्यत इत्युक्तम् । तथाऽन्यदपि चातुर्विध्यं वक्तीति 'प्रत्येकं चतुरात्मकाः' इति मूलमवतार्य तदेवं व्याख्यातम्-चत्वारोऽपि पादाः प्रत्येकं चतुरात्मकाः पादचतुष्टयार्थवन्तो द्रष्टव्याः । तद्यथा—युक्तिविरोधपरिहारलक्षणोऽप्ययं पादः समयादित्रयविरोधपरिहारात्मकोऽपि

भवति । तथा समयविरोधपरिहारात्मकोऽपि द्वितीयो युक्त्यादित्रयविरोधपरिहारात्मको भवतीत्यादिपाद इत्येवोक्ते संनिहितत्वादेतदध्यायगता एवेति ज्ञायेत । तदर्थं सर्व इत्युक्तम् । सर्वाध्यायसबन्धिनोऽपीत्यर्थः । यो यदध्यायगतः पादः स तदध्यायगतपादचतुष्टयार्थवानित्यवधेयः । न केवलमेव पादाः, किंतु तदंशाश्च । ते पादा अंशा येषां ते तदंशाः अध्याया इत्यर्थः । प्रथमाध्यायः समन्वयस्येवाविरोधादित्रयस्यापि प्रतिपादको भवति । पादानां चतुरात्मकत्वेऽधिकरणानां तथात्व सिद्धमेव । न चैवमध्यायादिभेदानुपपत्तिः पौनरुक्त्यदोषश्चेति वाच्यम् । विवक्षाभेदेन सामञ्जस्यात् । यदा प्रथमः समन्वयार्थो विवक्ष्यते न तदेतरार्थतेतरेषामित्यादि । तथा चासदधिकरणे निरसनीयस्य प्रागभावस्य समयप्राप्तत्वाभावे तदधिकरणस्य तद्घटिताधिकरणसमुदायात्मकस्य पादस्य च चतूरूपत्वाद्यनुपपत्ते । तस्य श्रुतिप्राप्तस्यापि समयप्राप्तत्वस्याऽऽवश्यकत्वात् ।

एव प्रागभावकर्तृतापूर्वपक्षपक्षस्त्वदीयभाष्यविरुद्धः तत्र हि 'अत्र श्रुतिप्राप्तमेवासन्मतं निराक्रियते । समयस्योपरि निषेधात्' इत्युक्तम् । यदि च प्रागभावप्रापकसमयाभावस्तदा श्रुतिप्राप्तमेवेत्यत्रैवकारवैयर्थ्यम् । शून्यनिराकरणपक्षे तु तस्य श्रुतिसमयोभयप्राप्तत्वात्समयप्राप्तत्वव्यावृत्त्यर्थमत्र श्रुतिप्राप्तत्वेनैव निषेधः । न तु समयप्राप्तत्वेन । उपरि तथा निषेधादित्यर्थ एवकारसार्थक्यम् । अत एव शून्यस्योपरि निषेधादित्यनुक्त्वा समयस्योपरि निषेधादिति धर्म्यैक्येऽपि धर्मभेदेनैव परिहार उक्तः । एवम् 'असद्वा इदमग्र आसीत्' इति श्रौतासत्पदस्य प्रागभावार्थकत्वेन तस्य श्रुतिप्राप्तत्वोपपादने 'एतेन सर्वे व्याख्याताः' ( ब्र० सू० १।४। २८ ) इत्यधिकरणतत्त्वप्रकाशिकाविरोध । तस्यां हि 'सर्वशब्दपात्यसदादिशब्दानां न विष्णुवाचित्वमिति समन्वयाक्षेपात्पूर्वपक्षे न विष्णुरसदादिशब्दवाच्यः । तेषां निषेधमुखवेद्यवस्तुवाचित्वात् । परमात्मनश्च भावत्वेन तदयोगात् । न च स्वयं निषेधमुखवेद्यत्वाभावेऽपि वस्तुतोऽसतः परमात्माधीनत्वेन तस्या-

सदादिशब्दवाच्यतेति वाच्यम् । स्वरूपशून्यस्य नियम्यत्वाभावेन पराधीनत्वायोगात् ' इत्युक्तम् । असच्छब्दस्य प्रागभावार्थकत्वे तु तस्य स्वरूपशून्यत्वाभावात् । सुधायामसदधिकरणे प्रागभावकर्तृतापूर्वपक्षे प्रागभावस्वरूपसत्त्वादिना सदेवेत्यादिप्रयोग विषयत्वोपपत्तेरित्युक्तत्वाच्च । स्वरूपशून्यस्य नियम्यत्वाभावेन पराधीनत्वायोगादित्यस्यासगतयापत्तेः । चन्द्रिकाकारैरेव 'एतेन सर्वे व्याख्याताः' इत्यधिकरणे तत्त्वप्रकाशिकायामुदाहरणत्वेन धृतानाम् ' असद्वा इदमग्र आसीत् ' इत्यादिश्रुतिस्थासदादिशब्दानां शून्य एव मुख्यत्वोक्तेर्न ततः प्रागभावकर्तृताप्राप्तिस्तैर्वक्तु शक्या । तथा ह्यानन्दमयाधिकरणे चन्द्रिकायाम्–वैदिकशब्दानामन्यत्रैव प्रसिद्धोभयत्रप्रसिद्धान्यत्रप्रसिद्धतत्रप्रसिद्धानां लक्षणेषु बलवच्छ्रुतिलिङ्गाद्यैरन्येष्वेव प्रसिद्धतेति । अन्येष्वेव प्रसिद्धानां लक्षणे श्रुत्यादीनां बलवत्त्व हि प्रवृत्तिनिमित्तस्य तदधीनत्वादिना । ब्रह्माणि परममुख्यत्वेऽपि तस्य तद्युक्तवाक्यस्य वाऽपरममुख्यवृत्त्याऽन्यपरत्व विनाऽनुपपद्यमानत्वम् । न त्वापाततो ब्रह्मण्यसंभवमात्रमित्युक्त्वोक्तम्–एवं च ' एतेन सर्वे व्याख्याताः ' इत्यत्रापरममुख्यवृत्त्याऽन्यपरवाक्यस्था एवासदादिशब्दा उदाहर्तव्या । प्रकरणात् । भाष्ये वाक्यविशेषानुपादानाच्च । टीकायाम् ' असद्वा इदमग्र आसीत् ' इत्यस्यापरममुख्यवृत्त्याऽप्यन्यपरत्वरहितस्योदाहरणं तु क्वचिच्छ्रुतावसच्छब्दस्य शून्ये मुख्यत्वे ब्रह्माणि चामुख्यत्वे ' असद्वा इदमग्र आसीत् ' इत्यत्रापि मुख्यार्थत्वाय शून्यमेव गृह्यत इति दर्शयितुमिति । एवम्—"यदुक्त प्रतिषेधमात्रत्वाच्छशविषाणादिवदसतोऽपि न कारणत्वमिति । न तद्युक्तम् । युक्तिविरुद्धस्यापि श्रुतिबलात्कस्यचिदसतः कारणत्वाभ्युपगमे बाधकाभावात् । न च शशविषाणादीनामपि तथात्वप्रसङ्गः । सत्सु वैलक्षण्यवदसत्स्वपि वैलक्षण्योपपत्तेः " इत्येतदधिकरणीयद्वितीयसूत्रावतरणतत्त्वप्रकाशिकाविरोधश्च । नहि कश्चित्प्रागभावः कारण कश्चिन्नेति विप्रतिपत्तिरस्ति । येन वैलक्षण्याभ्युपगमेन तत्कारणत्व समर्थनीयम् । असत्सु शशशृङ्गप्रागभा

वादेषु किंचिच्छशशृङ्गादिकं न कारणं किंचित्प्रागभावादिकं कारणमित्येव वैलक्षण्याभ्युपगम इति चेत्। सिद्धत्वात्तदुपपत्ति-साधनवैयर्थ्यात्। 'युक्तिविरुद्धस्यापि' इति ग्रन्थविरुद्धं चेदमुच्यते। तत्र हि कालसंबन्धानियतं कारणत्वं कालसंबन्धिन एवेति युक्तिविरुद्धमपि कारणत्वं श्रुतिबलात्कस्यचिदसतः स्वी क्रियत इति कालासंबन्धिनोऽपि कारणत्वे शशविषाणादीनामपि कारणत्वं स्यादित्यापत्तौ कालसंबन्धिष्वपि सत्सु कस्यचिदेव कारणत्वं कस्यचिन्नेति वदत्स्वपि कालासंबन्धिषु श्रुतिबलादेव कस्यचिदसतः कारणत्वमित्युपपत्तेरित्यनेन साधितम्। तच्च शून्यपक्षे समञ्जसं न प्रागभावपक्ष इति स्पष्टमेव। प्रागभावस्य कालसंबन्धित्वेन तत्कारणताया युक्तिविरुद्धत्वाभावात्। युक्ति-विरुद्धस्यापि कारणत्वस्येत्यनेन कर्तृत्वरूपमेव कारणत्वं विवक्षितम्। तच्च प्रागभावे युक्तिविरुद्धमेवेति चेत्। एवं सति तस्याचेतनमात्रेऽसंभवादचेतनमात्रस्य तत्प्रसङ्गापत्तौ शशविषाणादीनामपि तथात्वप्रसङ्ग इति ग्रन्थास्वारस्यप्रसङ्गात्। युक्ति विरुद्धस्यापीत्यनेन प्रतिषेधमात्रत्वरूपसौत्रयुक्तिविरुद्धस्येति विवक्षितम्। तस्य चाचेतनमात्रे न प्रसङ्ग इति शशविषाणादीनामेव तत्प्रसङ्गापादनमिति चेत्। एवमपि शशविषाणादीनामित्यत्रात्यन्तासत एवाऽऽदिपदार्थत्वस्वारस्यभङ्गापत्तेर्दुर्वारत्वात्। अचेतनत्वयुक्त्याऽचेतनमात्रस्य कर्तृत्वनिराकरणं विहाय प्रतिषेधमात्रत्वेन तन्निराकरणं कुर्वतः सूत्रकारस्य कारणत्वनिषेधे सामान्यनिषेधेन तद्विशेषकर्तृतानिषेधोऽप्यार्थिक इत्यभिप्रायावगतेश्च। किंच प्रागभावकर्तृतापूर्वपक्षे 'असतः सकाशाज्जगदुत्पत्तौ स्वीकृतायां प्रलयेऽसन्मात्रावशेषः स्यात्कार्यनाशे कारणसत्त्वनियमात्' इति 'अपीतौ तद्वत्प्रसङ्गात्' (ब्र० सू० २।१।८) इतिसूत्रव्याख्यानतत्त्वप्रकाशिकाविरोधः। तत्प्रागभावस्थितेर्भाविकार्यनिमित्तकत्वेन तत्स्थितेः कार्यनाशनिमित्तकत्वाभावात्। न ह्यत्र प्रागभावकर्तृतापूर्वपक्षिणा प्रागभावस्योपादानत्वं वक्तुं युक्तम्। येनात्र कार्यनाशे तन्मात्रावशेष आपाद्येत। समवायिकारणत्वलक्षणस्य कार्याभिन्नकारणत्वरूपस्य

चोपादानत्वस्य प्रागभावे दुर्घटत्वात् । प्रागभावमर्यादामुल्लङ्घ्य वर्तमानस्य तस्य प्रागभावोक्तिविरोधाच्च । तथा प्रागभावस्या-क्लृप्तत्वात् ' लघु चेश्वरतत्कर्तृत्वकल्पनापेक्षया क्लृप्तप्रागभावस्य कर्तृत्वकल्पनम् ' इति पूर्वपक्षे चन्द्रिकोक्तिविरोधाच्च । किंतु कर्तृत्वमात्रं कर्तृमात्रावशेषश्च न कार्यनाशनियतो दृष्टः 'अभाव-धर्मात्मतामन्तरेण स्वरूपत एव प्रतिषेधबुद्धिविषयत्वात् ' इति ' प्रतिषेधमात्रत्वात् ' इति सौत्रहेतुतत्त्वप्रकाशिकाव्याख्यानवि-रोधश्च । प्रागभावकर्तृतापूर्वपक्षे प्रागभावस्य प्रतियोगिनिरूप्यस्य प्रतियोगिपुरस्कारेणैव भाननियमात् । तस्य स्वरूपतः प्रतिषेध-बुद्धिविषयत्वाभावात् । अन्यथा ' विषयनिरूप्यस्य ज्ञानस्य विषयपुरस्कारेणैव भाननियमान्निर्विषयकज्ञानस्वरूपे न प्रमा णम् ' इति न्यायामृतादौ त्वदुक्तिविरोधापत्तेः । तस्मादसच्छ ब्देन शून्यपक्ष एवाभिमतः । तस्य च कालासंबन्धिनः काल-सबन्धनियतकारणत्वाक्षेपो युक्तः । अन्यथा ' न ह्यत्रासच्छब्दः शून्यपरः ' इति चन्द्रिकाविरोधः । कालाद्यपरिच्छिन्नत्वेन शून्य-वाद्यभिमतस्याविनाशिन प्रागभावत्वोक्तिविरोधश्चैतत्पक्षे । उक्तं च तत्त्वप्रकाशिकायां शून्यस्याविनाशित्वम् । 'नासतोऽदृष्टत्वात्' इत्यधिकरणे—' एकं शून्यमेव खल्वनन्तमर्थरहितं परमार्थतो विद्यमानं तस्मादेवैतदशेषं जगदुत्पद्यते ' इति । प्रागभावकर्तृता-पूर्वपक्षादरे तत्त्वप्रकाशिकाविरोध. शून्यस्य कारणतापूर्वपक्षे चन्द्रिकाविरोध इत्युभयतस्पाशा रज्जुरिति । एवं प्रागभा-वकर्तृताक्षेपेणोक्तसिद्धान्तोऽप्यानन्दतीर्थीयानामयुक्त एव । भावस्याभावधर्मात्मकतामिच्छतां तेषामभावेऽपि भावधर्मात्म-कतोक्तिसंभवात् । तार्किकादिभिः प्रागभावस्य हेतुत्वाङ्गी-कारेणाभावत्वहेतोः कारणत्वाभावेऽप्रयोजकत्वाच्च । नन्वभावस्य कर्तृत्वादर्शनाच्चत्व हेतुः क्रियते । तथा चोक्तं सिद्धान्तोपपादने चन्द्रिकायाम्—

> न तृतीयादियोगित्वं कर्तृतेह विवक्ष्यते ।
> किंतु ज्ञानादियोगित्वं तच्चाभावे न युज्यते ॥

---

१ क 'यविर' । २ क 'गितेर क' । ३ क 'र्तृता लि' । ४ क ज्ञानेच्छादि' ।

नहि जन्मादिसूत्रोक्तं कर्तृत्वं तृतीयादिप्रयोजकत्वेन वैयाकरणाभिमतं पारिभाषिकम्[1]। किंतु ज्ञानचिकीर्षादिमत्त्वम्। तदभावे न युज्यत इति। नायुक्तमिति चेत्। न। 'यः कर्ता स भावो यः प्रागभाव स न कर्ता' इति 'यः कालः स भाववान्' इत्यादिदृष्टनियमलङ्घनेनाऽऽशङ्कितारं प्रति विपक्षे बाधकमनभिधाय तदभ्युपगतस्याभिमतव्यभिचारिताकहेतुमात्रस्याभिधानानौचित्यात्।

यदपि—असतः सकाशाज्जगदुत्पत्तावभ्युपेतायां प्रलयेऽसन्मात्रावशेषः प्रसज्येत। कार्यनाशे कारणमात्रावशेषनियमात्। अतोऽसमञ्जसमसन्मतमित्यानन्दतीर्थीयानाम् 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' (ब्र० सू० २।१।८) इति सूत्रस्यार्थवर्णनम्। तदप्यसत्। पूर्ववाद्यभ्युपगतस्य प्रलये सर्वभावासत्त्वस्य त प्रत्यापादनायोगात्।

यदपि—प्रलये सर्वभावासत्त्वं न युज्यते। तदा पदार्थसत्त्वस्यैव 'विप्रतिपन्नोत्पत्तिः सतो भवितुमर्हत्युत्पत्तित्वाद्धटोत्पत्तिवत्' 'विमतो नाशः सशेषो विनाशत्वात्प्रतिपन्ननाशवत्' इति दृष्टान्तबलेन साधयितुं शक्यत्वादिति 'अस्माभिरपि प्रलयेऽसन्मात्रावशेषस्याभिलषितत्वेन नानिष्टापादनम्' इति शङ्कानिवर्तकम् 'न तु दृष्टान्तभावात्' (ब्र० सू०२।१।९) इति सूत्रस्याऽऽनन्दतीर्थीयानां व्याख्यानम्। तदप्यसदेव। 'विमता भावाः प्रलयेऽसन्तो भावत्वात्संमतवत्' इत्येवं रूपस्यानुमानस्य पूर्वपक्षिणाऽभ्युपदर्शितत्वात्। एवमपि सत्प्रतिपक्षतादोषो दुर्वार एवेति चेत्' तथा सति पूर्वपक्षस्येव सिद्धान्तस्याप्यासिद्ध्यापत्तेः। तथा चात्र स्वपक्षसाधकप्रमाणानुग्राहकस्तर्क एव प्रदर्शनीयः। न तु दृष्टान्तसत्तामात्रमिति सूत्रवैयर्थ्यं दुर्वारमेव।

यदपि—न तावत्प्रलये सर्वासत्त्वं प्रत्यक्षसिद्धम्। नाप्यागमसिद्धम्। तस्याभावात्। नानुमानमपि प्रलये सर्वासत्त्वसाधकम्। तत्र दृष्टान्ताभावेन तस्य दुष्टत्वादिति 'स्वपक्षदोषाच्च' (ब्र० सू० २।१।१०) इति सूत्रस्यार्थवर्णनमानन्दतीर्थीयम्।

---

[1] क 'षिकं कर्तृत्वम्। किं'।

तदपि न सत् । दृष्टान्ताभावरूपैकदोषस्य वक्तव्यत्वे दृष्टान्ताभावाच्चेत्यनभिधायानेकदोषानुगमाय सामान्यशब्दोपादाने स्वारस्याभावात् । ‘ तर्काप्रतिष्ठानादपि ’ इति सूत्रस्याऽऽनन्दतीर्थीयाभिमतव्याख्यानं यथा न युक्तं तथोक्तं प्रागेव स्वकीयरीत्यैतत्सूत्रार्थवर्णनावसर इति दिक् ॥ ११ ॥

श्रीमच्छंकरपादाब्जभूषणे परदूषणे ।
रघुनाथेन बालेन समुत्तीर्णोऽयमर्णवः ॥
व्याख्याद्वयविवेकात्मा तत्र हेतुर्गुरोः कृपा ।
मीमांसान्यायपञ्चास्यराघवार्यस्य केवलम् ॥

इति न विलक्षणाधिकरणं समाप्तम् ॥

---

## अथ शिष्टाधिकरणम् ।

### एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

एवं परिणामवाद्यभिमतजगदुपादानत्वप्रतिकूलन्यायस्याविरोधमुपपाद्याऽऽरम्भवादिनामभिमतस्तत्प्रतिकूलन्यायोऽस्मिन्नधिकरणे निराक्रियते । अयमत्र पूर्वपक्षः—सांख्ययोगवृद्धानां तर्काकुशलमतित्वात्तदीयतर्केण ब्रह्मणो जगदुपादानत्वबाधो मा भूद्वैशेषिकादीनां तर्कमतिकुशलत्वप्रसिद्धेस्तदीयन्यायस्याबाधितत्वात्तद्बाधितं ब्रह्मणो जगदुपादानत्वमिति । एवं किलाऽऽरम्भवादी वैशेषिको मन्यते—कारणमहत्त्वस्य कार्ये स्वावधिकोत्कर्षशालिमहत्त्वारम्भकत्वदर्शनाद्यदि महत्तमं जगदुपादानं स्यात्तदा पृथिवीपवनादि कार्यं ततोऽपि महत्स्यात् । यद्यत्कार्यं द्रव्यं तत्तन्न्यूनपरिमाणद्रव्यारब्धं यथा तन्त्वारब्धः पट इति व्याप्तेः । न चास्त्यत्र ‘ दृश्यते तु ’ ( ब्र०सू०२।१।६ ) इति * न्यायावकाशः । नाप्यप्रयोजकता । उत्कृष्टमहत्त्वप्रत्याश्र-

---

* न्यायावकाश इति । तत्र हि ‘ यदुक्तं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकमिति । नायमेकान्तः । दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः । अचेतनत्वेन च प्रसिद्धेभ्यो गोमयादिभ्यो वृश्चिकादीनाम् ’ इत्युक्तम् । एवं च तन्न्यायेन महत्तमादपि ब्रह्मणः सकाशान्न्यूनपरिमाणकमपि जगदुत्पद्येतेति न शङ्कनीयमिति भावः ।

यमहत्त्वस्य क्लृप्ता या कारणता तदुच्छेदप्रसङ्गस्य विपक्षे बाधकस्य सत्त्वात् । न च विवर्तवाद एतद्दोषानवकाशान्नायमाक्षेप इति वाच्यम् । महारज्जावल्पपरिमाणभुजङ्गभ्रमादर्शनेन विभौ ब्रह्मणि मल्लिकामशकाद्यारोपायोगात् । ननु (न च) ब्रह्मणः कारणत्वानुपगमे कपालादीनां सर्वेषां कार्यतया नित्यसिद्धकारणालाभेन प्रलये सर्वेषां कार्यद्रव्याणां नाशान्मूलकारणाभावेन पुनः सृष्टिर्न स्यादिति वाच्यम् । परमाणूनां मूलकारणत्वसंभवात् । न च तत्र प्रमाणाभावः । 'द्व्यणुकं स्वन्यूनपरिमाणद्रव्यारब्धं कार्यद्रव्यत्वाद्घटवत्' इत्यनुमानसिद्धत्वात् । न च तेषामपि पृथिवीत्वादिना सावयवत्वानुमाने तेन च कार्यत्वानुमाने ततोऽपि न्यूनपरिमाणं किंचिद्भवेत्, एवं ततोऽपीत्यविश्रान्तिरिति वाच्यम् । परमाणोः सावयवत्वकल्पने सावयवत्वाविश्रान्तौ मेरुसर्षपयोरनन्तावयवत्वाविशेषेण साम्यात्तुल्यपरिमाणतापत्त्या दृष्टविरोधेन पृथिवीत्वादिना परमाणोः सावयवत्वानुमानासंभवात् । तथा च परमाणव एव मूलकारणं न ब्रह्मेति । एवं बुद्धश्च भगवतो विष्णोरवतारोऽभावं जगद्धेतुं स्मराति स्म तदनुकूलं 'विमतं भावरूपं जगदभावपुरःसरं भावरूपत्वाद्यथा सुषुप्तिपुरःसरः प्रपञ्चः' इति तर्कं चाऽऽह । एवं संघातवादिनोऽप्येवं मन्यन्ते—न स्थिरस्य कारणता संभवति । समर्थस्य क्षयायोगे निखिलकार्ययौगपद्यप्रसङ्गादिति । एवं स्वभाववादिनोऽपि नित्यधर्माणां देशनियमवदनित्यकार्याणां कालनियमस्य स्वभावादेवोपपत्त्या न कस्यचित्क्वचित्कारणत्वमिति कुतो ब्रह्मणो जगत्कारणत्वं प्रत्याशेत्यधिकाशङ्कायामुक्तपक्षानुक्तन्यायातिदेशेन दूषयन् 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः' इति सूत्रेण सिद्धान्तः—एतेन प्रकृतेन प्रधानकारणवादनिराकरणेन शिष्टैर्मनुव्यासप्रभृतिभिः केनचिदप्यंशेनापरिगृहीता येऽण्वादिकारणवादास्तेऽपि निषिद्धतया व्याख्याता निराकृता द्रष्टव्याः । सत्कार्यत्वात्मासङ्गत्वस्वप्रकाशत्वाद्यंशैर्वेदान्तशास्त्रस्य प्रत्यासन्नः प्रधानकारणवादः सत्कार्यत्वाद्यंशेन शिष्टैः स्वीकृत इति प्रबलत्वात्तदुपदेशः । अण्वा-

दिवादानां निर्मूलत्वाद्दुर्बलत्वेनातिदेश इति बोध्यम् । अथमत्र सिद्धान्ताभिप्रायः—न तावद्विवर्तवादे प्राथमिको दोष । उच्चतरगिरिशिखराद्यधिरूढस्य भूमिनिष्ठन्यग्रोधभूरुहादावल्पतृण्दूर्वाप्रवालाद्यभेदारोपस्य दर्शनात् । घटादिषु दर्शनमात्रेण वेदविरुद्धार्थकल्पने पृथिवीत्वादिना परमाणूनामपि सावयत्वकल्पन कथ वारयितुं शक्यम् । न चैवं मेरुसर्षपयोस्तुल्यपरिमाणतापत्तिर्दोष इत्युक्तं सम्यक् । उभयोरनन्तावयववत्वाविशेषेऽप्यानन्त्य एव विशेषकल्पनोपपत्तेः । तथा च मेरुसर्षपयोरवयवानन्त्यस्य विलक्षणत्वान्न तुल्यपरिमाणतापत्तिः । अवश्य ह्यानन्त्ये विशेष आश्रयणीयः । अन्यथाऽतीतकल्पानामतीतक्षणानामनागतानां चाऽऽनन्त्यात्तुल्यता स्यात्तस्तत्राऽऽनन्त्ये विशेषः कल्पनीयः । तथा च सावयवत्वाविश्रान्तेर्मूलकारणमेव परेषा मते दुर्लभं स्यात् । परिणामित्वेऽपि नानुपपत्तिः । विजातीयमहत्त्वादावेव त्वयाऽप्याश्रयमहत्त्वहेतुताया वाच्यतया साक्षाद्ब्रह्मकार्यगतमहत्त्वादौ कार्यतावच्छेदकवैजात्यानुपगमसंभवाद्ब्रह्मादिगतमहत्त्वव्यावृत्तस्यैव धर्मस्य महत्त्वारम्भकतावच्छेदकत्वोपगमसंभवाच्च । सति बाधके यद्विशेषयोरिति न्यायानवताराच्च । अतिदीर्घतन्त्वारब्धस्यापि कन्दुकादेरनतिदीर्घत्ववन्महत्त्ववत्तूलपिण्डारब्धाया दीर्घवर्तेः सूक्ष्मत्ववच्च महदारब्धस्याप्यनतिमहत्त्वोपपत्तेः । उक्तं च परममहत्त्वशून्यस्यापि शरीरादेः पाञ्चभौतिकत्व न्यायपञ्चाध्याय्याम् । स्वीकृता च महत्तरादहंकाराद्भूतसूक्ष्मोत्पत्तिः साङ्ख्यादिभिरपि । यदप्यभावपुरःसरत्वानुमान बौद्धाना तत्रापि साध्यविकलो दृष्टान्तः । सुषुप्तेरवस्थाविशेषत्वेनावस्थावत आत्मनः सद्भावस्याङ्गीकरणीयत्वेन स्वप्नस्य भावपुरःसरत्वात् । एव स्थिरस्य कारणता कार्यकारणभावावश्यकता च ब्रह्मानन्दादिभिर्बहुतर प्रपञ्चिता ज्ञेया । यदा वैदिकशिरोमणिभिः पुराणकर्तृभिस्तत्र तत्र प्रसङ्गादुदाहृता प्रकृतिपुरुषादिप्रतिपादिका साङ्ख्यस्मृतिर्जगत्कारणत्वविषये दौर्बल्येन परित्यक्ता तदा निखिलैः शिष्टैरुपेक्षितानां काणादमतानां दौर्बल्य किमु वक्तव्यम् । न खलु ब्राह्मपाद्मादिषु

पुराणेषु क्वचिदपि प्रसङ्गाद्द्व्यणुकादिप्रक्रियोदाहृता । प्रत्युत मनुस्मृतौ—

हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ।

मोक्षधर्मे—आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ।

तस्यैव फलनिर्वृत्तिः सृगालत्वं वने मम ॥

अधीत्य गौतमीं विद्यां सार्गालीं योनिमाप्नुयात् ।

इति निन्दोपलभ्यते । तथा विष्णुपुराणेऽपि—

मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र तत्त्वम् ॥

( २ । १२ । ४२ ) इति सा प्रक्रिया निन्दिता । यत्तु याज्ञवल्क्येन—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

इति न्यायमतप्रक्रियाया विद्यासाधनत्वमुक्तं तच्छ्रुत्यविरोधिपदार्थशोधकन्यायस्यैवोक्तमित्यविरोधः ।

यत्तु चन्द्रिकायाम्—यच्चोक्तं एतेन—मनुव्यासप्रभृतिभिः शिष्टैः केनचिदंशेन परिगृहीतस्य वैदिकदर्शनप्रत्यासन्नस्य प्रधानवादस्य निरासेन, तैः केनचिदप्यंशेनापरिगृहीता वैदिकदर्शनाप्रत्यासन्ना परमाण्वादिकारणवादाः प्रत्याख्याता इति । 'एतेन' ( ब्र० सू० २ । १ । १२ ) इतिसूत्रार्थमनूद्य तत्र 'एतेन सर्वे व्याख्याताः' ( ब्र० सू० १ । ४ । २८ ) इत्यत्रापि त्वयाऽस्यैवार्थस्योक्तत्वेन पुनरुक्तेः । निरीश्वरसांख्यवादादपि सेश्वरवैशेषिकादिवादानामेवेश्वरवादिभिः शिष्टैः परिगृहीतत्वादीश्वरकारणत्ववादिवैदिकप्रत्यासन्नत्वाच्च । तदुक्तमनुव्याख्याने—न च शिष्टागृहीतत्वं निरीशादीशवादिनः इति दूषणमुक्तम् । तदसत् । 'एतेन सर्वे व्याख्याताः' इत्यत्राण्वादिकारणवादे श्रुतिर्नास्तीत्युक्तम् । अत्र च तदनुमता' ब्रह्मणो जगदुपादानत्वविरोधियुक्तयो दुष्टा इत्युच्यत इति स्पष्टत्वेन पौनरुक्त्योद्भावनस्याद्वैतमतविद्वेषमूलकधूलिक्षेपमात्रत्वात् । निरीश्वरसांख्यवादस्य सत्कार्यत्वाद्यंशेन

१ क 'शिष्टपरिगृ' । २ क 'रीश' ।

श्रुतिप्रत्यासन्नत्वेन शिष्टपरिगृहीतत्वस्य सेश्वरवैशेषिकवादस्य परमाण्वादिकारणवादतया निर्मूलतया श्रुत्यप्रत्यासन्नत्वस्य चोक्तत्वान्नानुव्याख्यानोक्तदोषः साधु । इदानीमुपादानांश एव शिष्टपरिग्रहापरिग्रहयोरुक्तया विरोधाभावात् । अत्र यद्यपि निबन्धेऽस्मिन्नधिकरण एव पूर्वपक्षदशायां कार्यकारणयोरभेदो दूषितस्तथाऽपि तदभेदसाधकन्यायोऽत्र न विवक्षितः । परं पूर्वपक्षोपोद्बलकतामात्रेण पूर्वपक्षे स दूषित इति ध्येयम् । एवं रीत्याऽस्याधिकरणान्तरत्वसंभव एतत्सूत्रस्य पूर्वाधिकरणत्वशेषत्वकल्पनेन " एतेन—सत्कारणत्वादौ दृष्टान्तभावेनासत्कारणत्वादौ दृष्टान्ताभावेन शिष्टापरिग्रहाः—माऽस्तु जगत्कारणत्वमसतस्तथाऽपि न विष्णोर्जगत्कारणत्वं संभवति । 'विप्रतिपन्नं निष्कारणमचेतनकारणं जीवकारणं वा कार्यत्वात्कूलपतनदध्यादिवत्' इति युक्तिविरोधात् । न च निर्मूलयुक्तेरसाधकत्वम् । '+अकस्मात्' इत्यादिश्रुतिमूलत्वादित्यकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयः सिद्धान्ता व्याख्याताः । कूलपतनादावपि निष्कारणत्वादेरसंमतत्वात् " इत्यानन्दतीर्थीयानां व्याख्यानमयुक्तम् । अधिकमुक्तं प्राक् ॥ १२ ॥

श्रीमच्छंकरपादाब्जभूषणे परदूषणे ।
रघुनाथकृतिर्भूयाच्छिष्टाधिकरणे मुदे ॥

इति शिष्टाधिकरणं समाप्तम् ॥

---

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

अत्रोक्तसमन्वये प्रत्यक्षादिसिद्धभोक्तृभोग्यविभागलोपप्रसंगरूपस्वपक्षबाधोद्धारादध्यायादिसंगतिः । पूर्वाधिकरणे श्रुतिप्रत्यक्षाननुगृहीतं प्रत्यक्षसामान्यमप्रतिष्ठितमिति कारणमहत्त्वा

---

+ अकस्मादिति । 'अकस्माद्धीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति' 'प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति । प्रधाने लयमभ्येति न ह्यत्कारणं मतम्' 'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चला । जीवे तु लयमृच्छन्ति न जीवात्कारणं परम्' इति श्रुतयो बोध्या ।

न्महत्तरकार्योपपत्तिरूपस्तर्को न प्रतिष्ठित इत्युक्तम् । इह च भोक्तृभोग्यविभागस्य प्रत्यक्षसिद्धत्वात्तन्मूलकस्तर्को नाप्रतिष्ठित इति प्रत्यवस्थानादनन्तरसंगतिः । अत्रोक्तसमन्वयेनावगम्यमानम् ‘ तत्त्वमसि ’ ‘ सर्वं खल्विदं ब्रह्म ’ इतिवाक्यप्रतिपाद्यमानमद्वैतं प्रत्यक्षसिद्धभोक्तृभोग्यविभागलोपप्रसङ्गरूपतर्कबाध्यं न वेति संदेहे पूर्वपक्षः—स्यादेव बाधः । ‘ तत्त्वमसि ’ ‘ सर्वं खल्विदं ब्रह्म ’ इति वाक्यस्य स्वारसिकार्थाङ्गीकारे ब्रह्माभिन्नयोर्जीवजगतोः परस्परमभेदः स्यादित्युक्तविभागलोपप्रसङ्गस्य दुर्वारतया तादृशवाक्यस्यार्थान्तरपरताया आवश्यकतयाऽयुक्तमिदं ब्रह्मकारणत्वावधारणमिति ।

ननूक्तयुक्त्या जीवजगतोरभेदाभिधानस्यायुक्तत्वेऽपि ब्रह्मकारणतावधारणस्य कथमयुक्ततेति चेत् । जीवजगतोर्ब्रह्मोपादेयतया श्रुतत्वादुपादानोपादेययोश्च समवायं निराकुर्वता सिद्धान्तिना परिशेषात्तयोरभेदस्यैवोपगन्तव्यतयाऽभेदासंभव उपादानोपादेयभावोऽपि न संभवतीत्यभिमानवतः पूर्वपक्षिणस्तथोक्तिसंभवात् । वस्तुतस्तु पूर्वोक्तं जगदुपादानत्वमुक्ततर्कविरोधादयुक्तमुत युक्तमित्यत्र चिन्त्यते । तत्र तावदयुक्तमिति पूर्वपक्षः । उपादानोपादेययोर्न समवाय इति वदता तयोरभेद एव परिशेषाद्वाच्य इति ब्रह्माभिन्नयोर्भोग्यभोक्त्रोः परस्परात्मतापत्त्या विभागाभावापत्तेः ।

यत्तु चन्द्रिकायाम्—यदुक्तं परैः ‘ ब्रह्मण उपादानत्वे भोक्तुः शरीरिणो भोग्यत्वापत्तेर्भोग्यस्य शब्दादेर्भोक्तृत्वापत्तेरन्योरविभागः स्यात् । द्वयोरपि परमकारणब्रह्मानन्यत्वादिति । नैवम् । एकसमुद्रकार्याणां जलतरङ्गादीनामिव विभागोपपत्तेरिति सिद्धान्तः ’ इत्यनूद्य पूर्वपक्षे ‘ = विवर्तसिद्धान्ते नोक्तसांकर्यशङ्कासंभवः । जगद्भ्रमहेतुविद्याविषयतालक्षणस्याधिष्ठानत्वस्य

= विवर्तसिद्धान्त इति । पूर्वाधिकरणेषु विवर्तवादस्यैवाद्वैतिभिः सिद्धान्तितत्वेन तदुपर्यस्मिन्नधिकरणे भोक्तृभोग्यसांकर्यशङ्काया संभव एव नास्तीति निरुक्तपूर्वपक्षो न युक्त इति भाव ।

१ क. °न्ते सांकर्यशङ्कानुदयात् ।

समवायतादात्म्यलक्षणसंबन्धद्वयनिरपेक्षत्वात्' इति दूषणमुक्तम् । तदसत् । उक्ताधिष्ठानतामात्रं नोपादानता । किंतु कार्यसमवायिकारणता कार्याभिन्नकारणता वा । अन्यथा पारिभाषिकतापत्तेः । एकविज्ञानेन सर्वविज्ञानोपपादनायोगाच्च । न चैतदुभयमपि ब्रह्मणि युज्यते । समवायानभ्युपगमात् । आद्यस्यासंभवेन द्वितीयस्यैवाभ्युपगन्तव्यतयाऽविभागः स्यादिति शङ्काया निरपवादत्वात् ।

यदपि चन्द्रिकायाम्—पूर्वपक्षे "किंच पूर्वपक्षिणा किं कार्याणां चेतनाचेतनत्वरूपेण विभागो न स्यादित्यापाद्यते किंवा येन केनचिद्रूपेण । नाऽऽद्यः । चेतनस्यानादित्वेन कार्ये तद्विभागाभाव इष्टापत्ते । ननु चेतनस्यानादित्वेऽपि ब्रह्माभेदाद्ब्रह्मकार्यत्वेन ब्रह्माभिन्न यज्जड तद्रूपत्वापत्तिरिति चेन्न । 'दृश्यते तु' ( ब्र० सू० २ । १ । ६ ) इति सूत्रेणैव जडोपादानत्वेऽपि ब्रह्मणश्चेतनत्वाहानेरुक्तत्वाद्ब्रह्माभेदेन जीवस्य जडत्वाप्राप्तेः । नान्त्यः । एकस्वर्णपिण्डकार्याणां कटकमुकुटाद्यवस्थानां भेदस्यैव दर्शनेन ब्रह्मकार्याणामप्याकाशवाय्वादीनां भेदसंभवात् । सुवर्णपिण्डः सावयवो ब्रह्म तु निरवयवमिति चेत् । त्वन्मतेऽपि 'कृत्स्नप्रसक्तिः' ( ब्र० सू० २।१।२६ ) इति सूत्र इव निरवयवस्य ब्रह्मणो युगपदनेकद्रव्योपादानत्व न युक्तमित्येव पूर्वपक्षयितव्यम्, न तु कार्याणां विभागो न युक्त इति । तस्मान्न पूर्वपक्षोदय इति दूषणमुक्तम् । तदप्यकाण्डताण्डवम् । 'भेदाभेदयोर्विरोधाद्भेदमात्रोपगमे समवायानभ्युपगमादुपादानत्वानुपपत्तिः । अभेदस्यैवोपगमे भोक्त्रादिविभागानुपपत्तिः' इति रीत्याऽस्मदभिमतपूर्वपक्ष उक्तविकल्पाप्रसरात् । 'दृश्यते तु' इति सूत्रे विलक्षणयोरप्युपादानोपादेयभावो दृश्यत इति कार्याभिन्नकारणता लक्षणोपादानता वादिन सांख्य प्रत्युक्तम् । इह तु कार्यकारणयोरभेदाभ्युपगमे पूर्वोत्तरभावानियतकार्यका-

---

१ क 'तनत्वेन । २ क 'भानेनेष्टा' । ३ क इत्यतीताधिकरणस्थस् । ४ क 'क्तत्वेन ब्रह्मा' । ५ क 'कमद्दासुर्वण' । ६ क 'पिण्डं सा' । ७ क 'यवं ब्र' । ८ क 'चेत्तर्हि त्व' । ९ क 'वे कृ' ।

ग्भावानुपपत्तेरिति भेद एव तयोरिति वादिनं तार्किक शङ्कितारं प्रत्युक्तसमाधानानवकाशेन चेतनस्यानादित्वेऽपि ब्रह्माभेदाद्ब्रह्मकार्यत्वेन ब्रह्माभिन्नं यज्जड तद्रूपत्वापत्तेः सुवचत्वात् । अत एवैकमहास्वर्णपिण्डेत्यादिरूप पि न सत् । पूर्वपक्षिणा क्वापि कार्यकारणयोरभेदानभ्युपगमेन कारणाभिन्नकार्याणां भेदासंभवेन येन केनचिद्रूपेण विभागो न स्यादित्यापादनसंभवात् । एव पूर्वपक्षे सिद्धान्तः—स्याल्लोकवदिति । अयमत्र सिद्धान्ताभिप्रायनिष्कर्ष—यथा हि तार्किकैरुपादानभूतात्कपालादेर्द्रव्याद्घटाद्युपादेयं द्रव्यमन्यदेव । तयोश्च समवाय एव सबन्ध इत्युच्यते नैव सिद्धान्त उपादानोपादेयभावस्थले द्रव्यद्वयमभ्युपगम्यते । अपि त्वेकमेव मृज्जलादि द्रव्यं पिण्डावस्थारूपं धर्मं परित्यज्य कारकविशेषात्कम्बुग्रीवादिफेनतरङ्गादिरूपसंस्थानविशेषभाग्भवति । तथा च मृत्पिण्ड एव घटो जातो जलमेव फेनतरङ्गादि जातमिति सामानाधिकरण्यव्यवहारोऽपि । तथा 'सर्वं खल्विद ब्रह्म' इति वाक्ये—

अस्ति भाति प्रिय रूप नाम चेत्यंशपञ्चकम् ।
आद्यत्रय ब्रह्मरूप जगद्रूप ततो द्वयम् ॥

इत्यभियुक्तोक्तरीत्या सदादिरूपेणोपादानतया जगदनुप्रविष्टब्रह्मरूपधर्मिणमादायाभेद उपपन्नः । नामरूपांशस्य तु ब्रह्मणा सहोपादानताघटक तादात्म्यमेव । तच्च समानाधिकरणशब्दोल्लेखिप्रत्ययनिर्वाहक संबन्धविशेषः, नात्यन्ताभेदरूप स्वरूपैक्यम् । तच्च न भेदेन विरुध्यत इति न ब्रह्मजगतोः सांकर्यम् । ननु नामरूपांशे स्वरूपैक्यानभ्युपगमेन सांकर्यवारणेऽपि जीवब्रह्मणोः स्वरूपैक्याभ्युपगमेन तयोः सांकर्यं दुर्वारमेवेति चेत् । न । स्वरूपैक्ये सत्यपि तयोरौपाधिकभेदाभ्युपगमेन सांकर्यानवकाशादिति ।

आनन्दतीर्थीयास्तु—'परेऽव्यये सर्व एकी भवन्ति' इति श्रुतौ जीवस्य मुक्तावीशाभेदप्रतिपादनात्तेन संसारदशायामप्यभेदं प्रसाध्य तेन ब्रह्मणि सर्वकारणत्वमसंभवीत्येकः पूर्वपक्षः । द्विव प्रत्ययस्वारस्याय संसारदशायां भेद एव, मुक्तावेव परम्—

अभेद । तथा च जगज्जन्मादिकारणत्वलक्षणस्य मुक्तजीवेऽति-व्याप्तिरिति द्वितीय । संसारदशायां जीवब्रह्मणाभेदाभेदौ मुक्तौ त्वभेद एव । तथा च मुक्त संसारिणि चातिव्याप्तिरिति तृतीय । तथा हि चन्द्रिकायाम्—'एकी भवन्ति' इति ब्रह्मण स्तावन्मुक्तेनाभेद श्रूयते । न च तावता ब्रह्मण सर्वकर्तृत्व सिध्यति । संसारिण इव मुक्तस्य स कर्तृत्वे प्रत्यक्षादिविरा-धाभावेन पूर्वमसतोऽपि जीवे सर्वकर्तृत्वस्य मुक्तावेव ज्ञानतो-पगमसंभवेन च मुक्ताभिन्नस्यापि ब्रह्मणः कथंचित्सर्वकारण त्वमभावात् । तस्मादसर्वकर्तृत्वेन प्रत्यक्षसिद्धसंसार्यभेदाद्ब्रह्म-णोऽपि न तथात्वमिति वक्तु मुक्तावच्छेदेन संसारेऽप्यभेद-मा थ' । 'एकी भवन्ति' इत्यभूततद्भावार्थच्विप्रत्ययस्तु 'न ह्यन्यस्या यत्व प्रयुज्यते' इतिभाष्योक्तयुक्तिविरोधाद्भेदभ्रम निवृत्तेरभूततद्भावाभिप्राय इत्येकः पक्ष' । द्वितीयस्तु—च्वि-प्रत्ययस्वारस्यात्पूर्वं भेदो मुक्तौ त्वभेद' । 'न ह्यन्यस्यान्यत्व प्रयुज्यते' इति युक्तिस्तु च्विप्रत्ययरूपश्रुत्या बाध्यते । तृतीय स्तु—पूर्वं भेदाभेदौ मुक्तौ तु केवलाभेद । एव च च्विप्रत्ययो युक्तः । पूर्वं केवलाभेदाभावात् । 'न ह्यस्य' इत्यादियुक्ति विरोधश्च न । पूर्वमप्यभेदस्य सत्त्वात् । अत्र पक्षत्रये प्रत्येक पुन' पक्षत्रय संभवति । एकपदलक्षणयैव विरोधपरिहारसंभवाच्चि-न्मात्राच्चिन्मात्रस्य भेदाप्रसक्त्यैक्यापदेशस्वेन व्यर्थैकपदलक्षण यैकत्रैव विशिष्टरूपत्यागेन ब्रह्मणः प्रत्यक्षसिद्धासर्वकर्तृजीव-सालक्षण्येन वा जीवस्य श्रुतिसिद्धसर्वकर्तृब्रह्मसालक्षण्येन वा मिथ्यावादिरीत्या पदद्वयलक्षणयोभयत्रापि विशिष्टरूपत्यागेन चिन्मात्रैक्येन व । तत्राऽऽद्ये लक्षणस्यासंभवः । द्वितीयेऽति व्याप्ति । सदाऽपि शुद्धाभेद इति पक्षे संसारिणि, मुक्तावेवाभेद इति पक्षे मुक्ते । मुक्तेः पूर्वं भेदाभेदाविति पक्षेऽपि मुक्तेऽभेदां-शमादाय संसारिणि चातिव्याप्ति+ तृतीयेऽपीति । सिद्धान्त-

+ तृतीयेऽपीति । इदानीतनच न्द्रिकापुस्तके तु—तत्राऽऽद्ये लक्षणस्या-संभव । द्वितीयेऽतिव्याप्ति । सदाऽपि शुद्धाभेद इति पक्षे संसारिणि मुक्ता

स्तु—जीवेशयोरभेदस्यासंभवाच्च जगत्कारणत्वस्यासंभवादेः। 'एकी भवन्ति' इति मुक्तावैक्यव्यपदेशात्तत्सिद्धिरिति चेत्। लोक उदकान्तरस्यैकीभावव्यवहारेऽप्यन्तर्भेददर्शनेन व्यभिचारात्। ऐक्यव्यपदेशस्य स्थानैक्यादिनाऽपि जलैकीभाववदुपचरितार्थत्वात्। तथैव श्रुतितदुपबृंहणैर्बोधितत्वाच्च। तथा च श्रुतिः—'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम'। स्कान्दे च—

उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्।
न चैतदेव भवति यतो वृद्धिः प्रदृश्यते॥
एवमेव हि जीवोऽपि तादात्म्यं परमात्मना।
प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणात्॥

इतीत्यधिकरणयोजनामाहुः। तदसत्। 'तत्त्वमसि' इत्यादीनामनेकेषां सर्वदा जीवब्रह्माभेदबोधकत्वेन पराभिमतानां वेदान्तानां सत्त्वेन 'परेऽव्यये' इत्यादिश्रुत्युक्तमुक्तपराभेदेन प्रसाधितस्य संसारिपराभेदस्य पूर्वपक्षहेतुतोक्तेः शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात्। मुक्तजीवस्य परात्यन्ताभेदे तस्य लक्ष्यतावच्छेदकाक्रान्ततया तत्र लक्षणसत्त्वस्यातिव्याप्तिरूपत्वाभिधानानौचित्याच्च। 'परेऽव्यये सर्व एकी भवन्ति' इत्यत्र स्थानैक्यादिकं विवक्षितमिति सिद्धान्तोक्तिरप्ययुक्ता। जीवपरयोः स्थानैक्यस्य नित्यसिद्धतया विधिप्रत्ययास्वारस्यस्यापरिहारात्। यदप्युक्तम्—'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इति। सावधारणश्रुत्या जलद्वयसाम्यमेव प्रतिपाद्यते, न त्वैक्यमिति।

तत्रेदं विचारणीयम्—दृष्टान्ते तावच्छुद्धत्वेन सादृश्यमात्रं विवक्षितम्। तदा नासिक्तस्यापि जलस्य शुद्धस्य शुद्धत्वादिना सादृश्यानपायाच्छ्रुतिगतासिक्तान्तभागस्य वैयर्थ्यमिति तद्भेदग्रहाविषयत्वादिना सादृश्यं वाच्यम्। तथा सति जलद्वय-

---

वेवाभेद इति पक्षे मुक्ते पूर्वं भेदाभेदाविति पक्षेऽपि मुक्तेऽभेदांशमादाय संसारिणि चातिव्याप्तेः। तृतीयेऽपि सत्य कर्तृत्वमसंभवि। असत्य तु प्रधानादावतिव्याप्तम्। सिद्धान्तिनोऽनिष्टं च। इत्युपलभ्यते।

मेलनस्य भेदग्रहविरोधित्वेनोक्तसादृश्यप्रयोजकत्वलाभेन तद्भागस्यार्थवत्त्वम् । एवं च तादृग्जलस्य दृष्टान्तत्व वदता मुक्तस्य ब्रह्मणाऽपि तद्भेदग्रहाविषयत्वादिनैव सादृश्य तदभिन्नत्वपर्यवसितमत्र प्रतिपाद्यत इति वक्तव्यम् । यद्यपि सतोऽपि भेदस्याग्रहणेनाप्युक्तश्रुत्युपपत्तिस्तथाऽपि 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' 'न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धः' 'नेव काचनात्र भिदाऽस्ति' 'स ह यो वै तत्परम ब्रह्म वेद ब्रह्मैव भवति'

> 'यावन्मोह तु भेदः स्याज्जीवस्य च परस्य च ।
> ततः परं न भेदोऽस्ति भेदहेतोरभावत ।
> विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
> आत्मनो ब्रह्मणो भेदमसन्त कः करिष्यति'

इत्याद्युतिस्मृतिपर्यालोचनया भेदाभावादेव न तथा ग्रहणमिति युक्त कल्पयितुम् । यथा च 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेर्जीवेशभेदनिषेध एव स्वरसस्तथोक्तं प्रागानन्दमयाधिकरणे विस्तरेण । युक्त च मुक्तिकाले भेदस्यैवाभावकल्पनया तदग्रहणम् । अन्यथा तदग्रहणकारणदोषकल्पनापत्त्या मुक्तेरेवानुपपत्तेः । निरस्तसमस्तदोषस्यैव मुक्तिश्रवणात् । एव माण्डूक्योपनिषदो जीवब्रह्मैक्यपरत्वात्तदन्तर्गतस्य 'परेऽव्यये सर्व एकीभवन्ति' इत्यस्य भेदपरत्वाभावान्नोपचरितार्थत्वकल्पनं युक्तम् ।

अथ भेदार्थे षड्विधतात्पर्यनिर्णायकलिङ्गोपेतमाण्डूक्योपनिषद्गतस्य 'परेऽव्यये सर्व एकी भवन्ति' इत्यस्य कथ न भेदपरत्वम् । तथा ह्याथर्वणे—'द्वा सुपर्णा' इत्युपक्रमः । 'परं साम्यमुपैति' इत्युपसंहारः । 'तयोरन्य पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इत्यभ्यास. । शास्त्रैकसमधिगम्येश्वरप्रतियोगिकस्य कालत्रयाबाध्यभेदस्य शास्त्रं विनाऽप्राप्तेरपूर्वता । 'पुण्यपापे विधूय' इति फलम् । 'अस्य महिमानम्' इति स्तुतिरूपोऽर्थवादः । 'अनश्नन्' इत्युपपत्तिरिति चेत् । अत्र वदन्ति—आथर्वणे प्रथममुण्डके 'कस्मिन्नु भगवो

समिदादि प्रकरणादुभयाकाङ्क्षारूपाद्दर्शाद्यङ्गम्, इतिकर्त-व्यतार्थित्वादुक्तेतिकर्तव्यतात्वेन तदपेक्षितत्वादिति 'असंयु-क्तम्' इति सूत्रार्थः । तथा दर्शपौ(पू)र्णमासौ प्रकृत्य प्रयाजस-मीपे श्रूयते 'अभिक्राम जुहोति' इति । तत्राभिक्राममित्यस्य णमु-लन्तत्वेनाभिक्रम्येत्यर्थकत्वाज्जुहोतिना प्राकरणिकसर्वहोमानु-वादात्तदुद्देशेनाभिक्रमणं विधीयते । प्रयाजानां सन्निहितत्वेऽपि तदपेक्षया प्रकरणस्य बलवत्त्वात् । अन्यथाऽतिसन्निहितोत्तमप्र-याजाङ्गं स्यादिति प्राप्ते—प्रयाजान्विधाय 'त्रीन्प्रयाजानिष्ट्वा समानयत उपभृतः' इत्यनेनोपभृत्स्थाज्यस्यार्धं जुह्वां स्थाप्य मित्येव समानयनं विधाय 'अभिक्रामं जुहोति' इत्युक्त्वा 'यो वै प्रयाजानां मिथुनं वेद समिधो बर्हिरिव यजति तनूनपातमेक-मिव' इत्यादि 'प्रयाजानिष्ट्वा हवींष्यभिघारयति' इत्यन्तेन प्रयाजपरामर्शात्तावत्सन्दर्भस्य प्रयाजप्रकरणत्वनिश्चयात्तन्मध्ये यद्विहितं तत्प्रयाजाङ्गमिति निश्चयात् । अयमेव * संदंशन्यायः । तथा च समिदादिवाक्यार्थस्य यथा दर्शाद्युपकारत्वं निर्णीयते तन्न्यायेन पूर्वापरवाक्यार्थयोरैक्यबुद्ध्युपकारकत्वात्तन्मध्यस्थि-तस्य 'द्वा सुपर्णा' इत्यस्याप्यर्थस्यापि तदुपकारकत्वमेव निर्णेयम् ।

ननु 'यद्भूतयोनिम्' इति प्रथममुण्डके प्राणादिकारण-त्वस्य, द्वितीये 'द्वा सुपर्णा' इत्यादेः तृतीयेऽपि सखण्डस्य प्रतिपादनादभिक्रमणादिवदेव तन्मध्यस्य 'पुरुष एवेदम्' इत्यादेरपि तदनुकूलत्वमेवेति चेत् । न । प्रथममुण्डके उक्त-रीत्यैकविज्ञानेन सर्वविज्ञानानुपक्रमस्य 'परेऽव्यये सर्व एकी-भवन्ति' 'स ह यो वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्युपसंहारस्य मध्येऽपि 'पुरुष एवेदम्' इत्यादिपरामर्शस्याद्वैतनिष्ठत्वादद्वैतस्यैव महाप्रकरणित्वेन श्रुतयोर्विवाक्यादीनां तद्विरुद्धसखण्डे तात्पर्यस्य वक्तुमशक्यत्वादभिक्रम-णादेः प्रयाजाद्युपकारकत्वं तु न महाप्रकरणविरुद्धमिति विशे-षात्तृतीयमुण्डकान्ते 'परेऽव्यये सर्व एका भवन्ति' 'स ह यो

---

* संदंशन्याय इति । एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वमिति यावत् ।

वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्यैक्यलक्षणेन फले-नोपसंहाराच्च मध्यवर्तिनः 'परं साम्यमुपैति' इत्यस्यापि पूर्वोक्तसंदंशन्यायेन भेदरूपसादृश्यपरतया न भेदोपसंहाररूपताऽपि। अत एव 'परम्' इति साम्यविशेषणम्। संसारिव्यावृत्तस्य निर्दुःखत्वादिना सादृश्यस्य 'निरञ्जनः' इति तत्पूर्वतनवाक्येनापि लब्धतया पुनः सादृश्यप्रतिपादनेऽनुपयोगात्। परमत्वविशेषित सादृश्यं चाभेदरूपमेव।

न च—'स ह यो वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इति वाक्ये द्वितीयब्रह्मशब्दो जीवपर एव। तस्य जातिजीवकमलासनाद्यनेकार्थत्वस्य कोशप्रसिद्धत्वात्। तथा च 'यः परमं ब्रह्म वेद स जीव एव भवति न परं ब्रह्म' इत्यर्थः। अत एवाऽऽद्यो ब्रह्मशब्दः परमत्वेन विशेषितः। एवं, सायं गावो गोष्ठ एकी भवन्ति, एकीभूता नृपाः सर्वे ववृधुः पाण्डवैः सह, कीटो भ्रमरेणैकीभूतः, इति स्थानैक्यमत्यैक्यसादृश्यनिबन्धनैकीभावस्य गोनृपकीटभ्रमरादौ दर्शनादत्रापि तदन्यतमनिमित्तेन गौण एकीभावव्यपदेशोपपत्तिरित्युपसंहारो भेदविषय एव। अत एव 'परेऽव्यये' इति सप्तम्युपपत्तिः। अन्यथाऽश्रुततृतीयाकल्पनापत्तिरिति—वाच्यम्। जीवे ब्रह्मपदप्रयोगसम्भवेऽपि प्रकृते ब्रह्मोपादानमेवोचितम्। अन्यथा जीवभावस्याब्रह्मभावस्य च प्रागेव सिद्धतया तस्य ब्रह्मज्ञानसाध्यत्वाभावात् 'परमं ब्रह्म वेद ब्रह्मैव भवति' इति तस्य ब्रह्मज्ञानफलत्वोक्तेरसंगत्यापत्तेः। एवं सति द्वितीयब्रह्मवचनमप्यर्थात्परमत्वविशेषितमेव। एवं चोपक्रमोपसंहारयोरैक्यविषयत्वे पूर्वोक्तन्यायेन मध्यस्थितस्य 'परेऽव्यये सर्व एकी भवन्ति' इत्यस्य तद(दा)नुकूल्येन मुक्तस्य ब्राह्मणा तद्भेदाग्रहविषयत्वरूपैक्यप्रतिपादकत्वमेव युक्तम्। एवं सति 'परेऽव्यये' इति सप्तम्यपि युज्यते। भेदग्रहाभावविषयतायास्तदर्थत्वात्। सायं गावो गोष्ठ एकी भवन्तीत्यत्र च भेदग्रहसत्त्वेनोक्तरूपैक्योपपादनायोगाद्युक्तमेकस्थानस्थितत्वादिना तादृशव्यवहारोपपादनम्। न च विनिगमकाभाव उभयथाऽपि तथा व्यवहारसम्भवादिति वाच्यम्।

अस्मदुक्तरीतावुपक्रमोपसंहारैक्यानुगुण्यस्य विनिगमकत्वात् । कर्मणां वैकुण्ठगमनासंभवेन कर्माणि विज्ञानमयश्चेत्यात्रसंगत्या-पत्त्यैकस्थानस्थितत्वादिना प्रकृते तादृशव्यवहारस्य समर्थ-यितुमशक्यत्वात् । अत एव मत्यैक्येन तादृशव्यवहारोपपादन मपि प्रत्युक्तम् । कर्मणां मत्यैक्यासंभवेन कर्माणीत्यस्यासंग त्यापत्तेः । कीटो भ्रमरेणैकीभूत इत्यादेरिव सादृश्यनिबन्धन एकीभूतव्यवहारोऽत्रास्त्विति शङ्का तु सादृश्यपरत्वे सप्तम्य-नुपपत्त्या निरस्ता । मन्मते तु ब्रह्मणि लीनस्य कर्मणस्ततो भेदग्रहाभावेन जले लवणमेकीभूतमित्यादिवत्स्वीयरूपहानेन तद्धर्मिकभेदाग्रहविषयत्वरूपैकत्वस्यैवोक्तवाक्यार्थस्य संभवेना-संगत्यभावात् । अनुरूपश्चात्र नदीसमुद्रदृष्टान्त । यथा— 'नद्यः स्यन्दमानाः समुद्रायणा समुद्रं प्राप्यास्तं गच्छन्ति' इति पूर्वरूपहानोक्त्याऽगृह्यमाणभेदत्वोक्तेः । अयं तु विशेषः— परस्परावयवभेदेन परस्परमैक्यासंभवात्तत्र सत एव भेदस्या ग्रहणमत्र तु भेदाभावादेवेति भेदाग्रहणांश एव दृष्टान्तसंपाति पत्तेः । नहि दृष्टान्ते सर्वसाम्यापेक्षाऽस्तीति । एतेन मिलितजल-भेदसाधने वक्ष्यमाणचन्द्रिकाकाराग्रहः परास्तः । सिद्धान्ते तदैक्यानभ्युपगमात् । अत एव निबन्धे 'अवस्थितेरिति काश-कृत्स्नः' (ब्र० सू० १ । ४ । २२) इति सूत्रे 'का पुनर्नद्य-भिमताऽऽयुष्मतः' इत्यादिना नदीसमुद्रयोर्मेलनेऽपि न तत्स्वरूपै-क्यमित्युक्तम् । अद्वैतसिद्धावपि यथा नद्य इति भिन्ननदीसमु-द्रदृष्टान्तोक्तिरयुक्तेत्याशङ्क्य स्पष्टभेदविलयनमात्रपरत्वेन दृष्टा-न्तोपपत्तेरित्युक्तम् । एव चैक्यपरमाण्डूक्योपनिषद्गतम् 'परा-त्परं पुरुषमुपैति दिव्यम्' इति वाक्यमपि न देशान्तरस्थब्रह्म-प्राप्तिपरम् । तस्याः सगुणोपास्तिफलत्वेन ब्रह्मविद्याफलत्वा संभवात् । स्कान्दवचनमपि निरुक्तश्रुतिस्मृत्यविरोधेनावान्तरमु-क्त्यभिप्रायम् । अत एव ब्रह्मलोकगतस्य 'परस्यान्ते कृता-त्मानः प्रविशन्ति परं पदम्' इति तस्यैक्यरूपपरप्राप्तिरुच्यते । एतेन—एतदधिकरणसिद्धान्ते 'सिद्धान्तमाह—नत्वध्याहारे णेत्यादिना' इति तत्त्वप्रकाशिकोक्तमवतार्य, अयं भावः—

१ क 'ह—न नत्वोऽध्या' ।

वाक्यान्तरविरोधाच्च पूर्वापरविरोधतः ।
उपपत्तिविरोधाच्च नैव युक्तं मतत्रयम् ॥

उक्तं द्विविध पक्षत्रयमपि पूर्वपक्षोक्तं मुक्तावभेदसापेक्षम् । स एव त्वसिद्ध. । 'एकी भवन्ति ' इति श्रुतभाष्ये ' यथोदकम्' इतिश्रुत्यन्तरविरोधोक्तेः। न्यायविवरणे च ' निरञ्जनः परमसाम्य-मुपैति' इति पूर्ववाक्यविरोधस्य ' परात्पर पुरुषमुपैति दिव्यम् ' इत्युत्तरवाक्यविरोधस्य चोक्तेः । अभेदपरत्वे च 'परेणाव्ययेन ' इति तृतीया स्यान्न तु सप्तमी । 'साय गावो गोष्ठ एकी भवन्ति' इतिवत्स्यादिति चेत् । तत्र स्थानैक्यस्यैव प्रतीतेः । तथा ' कर्माणि विज्ञानमयश्च आत्मा ' इति पूर्ववाक्यस्थकर्मशब्दवि-रोधः । कर्मणां ब्रह्मैक्यायोगादित्यादिबाधकानां च ग्रन्थान्तर उक्तेः । भेदाभेदपक्षेऽपि पूर्वमप्यभेदस्य विद्यमानत्वेनाऽऽद्यान्त्य-पक्षयोरिवप्रत्ययस्य चायोगात् । मध्यान्त्यपक्षयोः 'नान्यदन्य त्वम्' इत्यनुव्याख्यानोक्तोपपत्तिविरोधाच्चान्यपरत्वात् । किंच—

भिन्ननद्यब्धिदृष्टान्त वदन्तीयं श्रुतिः स्वयम् ।
गौणार्थपरतां स्वस्या आचष्टे स्पष्टमेव नः ॥

श्रूयते हि ' एकी भवन्ति ' इत्यस्या अनन्तरम् ' यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्र प्राप्यास्त गच्छन्ति ' इति भिन्ननदीसमुद्रदृष्टान्तः । एव च—

रथ्याजल विष्णुपदीजलेनैकत्वमागतम् ।
इतस्ततो गता गावः सायमेकत्वमागताः ॥
एकीभूता तु सा सेना पाण्डवानभ्यवर्तत ।
इत्यादिवच्चवेदेकी भवन्तीत्यादिवेदवाक् ॥

न च जलस्य जलान्तरमेलन ऐक्यम् । ' तादृगेव ' इति भाष्योक्तसावधारणश्रुत्या ' यतो वृद्धि. प्रदृश्यते ' इति स्मृत्या च विरोधात् । किंच—

---

१ क °म् ॥ १ ॥ द्वि° । २ क °विध । ३ क °न्तरादिवि° । ४ क अथ भेदाभे° । ५ क °मी । तया ' सा° । ६ क वत्स्थानै । ७ क ब्रह्मणैक्या° । ८ क गात् । क° । ९ क. °नदीसमुद्रदृ° । १० क °न्ती अ । ११ क °यमेव । गौ । १२ क °ष्टेति स्प । १३ क व । श्रू° । १४ क वर्तन ।

मानभेदात्स्पर्शरसपूर्वभेदाच्च नीरयोः ।
मेलनेऽप्यभिदा नास्ति यथैव क्षीरनीरयोः ॥

न केवल ' यतो वृद्धिः ' इति स्मृत्युक्त परिमाणभेदमात्रम् । किंतु शीतोष्णयोः स्पर्शरमयो । नत्तत्सरित्सबन्धिनोश्च जलयो मेलने स्पर्शादिभेदोऽपि दृश्यते । अ यथा हसेन विविच्यमानयो' क्षीरनीरयोरप्यभेदः स्यात् । द्रुतसुवर्णताम्रयोमलनेनाभेद तत्कार्यपणादौ केवलस्वर्णकार्यपणान्मूल्यादिभेदश्च न स्यात् । क्षीरे सिक्ता सुराऽपि क्षीर स्यात् । प्रसिद्धश्च कृष्णादिसप्तनदी-जलाना गङ्गादिमहत्सजलानां च पुन प्रत्येक समुद्रसगमार्थं विभक्तानां विलक्षणरूपरसादिमत्तया भेदः । किंच ' अवस्थि-तेरिति काशकृत्स्न ' ( ब्र० सू० १ । ४ । २२ ) इति सूत्रे भामत्यामेव—का तु नद्यभिमताऽऽयुष्मतः । किं पाथ परमाणव उतैषा संस्थानभेद आहो तदवयवारब्धोऽवयवी । तत्र सस्था-नभेदस्यावयविनो वा समुद्रप्रवेशेन नाशात्कथ समुद्रेणैकता । नदीपाथःपरमाणूनां तु समुद्रपाथ परमाणुभ्य. पूर्वस्थितेभ्यो भेद एव नाभेदः । एव समुद्रादपि तेषां भेद एवेत्यादिरीत्या नदीसमुद्रयोरभेदो निरस्त. । एव च—

माषादिवच्च राश्यादौ सभादौ ब्राह्मणादिवत् ।
जले जलान्तरस्यापि संश्लेषो न त्वभिन्नता ॥

द्रवद्रव्यत्वेनान्योन्यमिश्रणे तु भेदाप्रतीतिरिति चन्द्रिकोक्त सर्वं निरस्तप्रायमेवेति दिक् ॥ १३ ॥

श्रीमच्छंकरपादाब्जभूषणे परदूषणे ।
व्याख्याद्वयविवेकेन रघुनाथकृतिः सताम् ॥
भोक्त्राधिकरणे भूयान्मुदे वादजयाय च ।
मीमांसान्यायपारीणराघवार्यप्रसादजा ॥

इति भोक्त्रापत्त्यधिकरण समाप्तम् ॥

१ क °ष्णयोर्मधुरोषरयो सगतसरित्सबन्धिन° । २ क °त्कस्य स° ।

## अथाऽऽरम्भणाधिकरणम् ।

### तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

पूर्वोक्तभोक्तृभोग्यविभागाभावप्रसङ्गपूर्वपक्षे 'स्याल्लोकवत्' इति परिणामवादमाश्रित्य समाधानमुक्त्वा तत्रैव विवर्तवादेन मुख्यसमाधानार्थमिद सूत्रम् । तथा चैत सूत्रव्याख्यानोपक्रमे भाष्यम्—अभ्युपगम्य चेम व्यावहारिक भोक्तृभोग्यलक्षण विभागम् 'स्याल्लोकवत्' इति परिहाराऽभिहितः । न त्वयं विभागः परमार्थतोऽस्तीत्यादि । एतत्सूत्रव्याख्यानोपसंहारेऽपि वक्ष्यति भगवान्भाष्यकारः—सूत्रकारोऽपि परमार्थाभिप्रायेण 'तदनन्यत्वम्' इत्याह । व्यवहाराभिप्रायेण तु 'स्याल्लोक वत्' इति महासमुद्रस्थानीयता ब्रह्मण. कथयति । अप्रत्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रिया चाऽऽश्रयति सगुणोपास नेषूपयोक्ष्यत इति । तत्राभ्युपगम्येत्यस्य मिथ्यात्वेनाव्युत्पाद्ये त्यर्थः । परिणामेत्यादेः परिणामित्वप्रक्रियां दृष्टान्तत्वेनाऽऽश्रयति । परिणामवादसाधारणदृष्टान्तमाहेति तु फलितोऽर्थः । भाष्ये महता प्रब.धेनास्मिन्नधिकरणे प्रपञ्चमिथ्यात्वोपपादनं च 'ब्रह्मणः प्रत्यगभिन्नत्व न सभवति । कर्तृत्वाकर्तृत्वादिविरुद्ध-धर्मयोरेकत्र समावेशासंभवात् । विरुद्धधर्माणां दृश्यत्वादिना मिथ्यात्वसिद्धेर्नायं दोष इति तु न सम्यक् । प्रबलप्रत्यक्षवि रोधे जागरूके दुर्बलेन लिङ्गेन मिथ्यात्वासिद्धे' इति शङ्का-निरासाय ।

केचित्तु—पूर्वसूत्रे 'लोकवत्' इत्युक्ते लोके विका-रानृतत्वाप्रसिद्धेर्विकारसत्यतामभ्युपेत्यैव परिहारो दर्शित इति भ्रमः स्यात् । तथौपाधिकोऽपि जीवब्रह्मणोर्भेद उपाधि-सत्यतया पारमार्थिकः स्यादिति भ्रमः स्यादिति तदपाकर णायास्मिन्सूत्रे विकारमिथ्यात्वप्रतिपादनमिति वदन्ति ।

नन्वेव मिथ्यात्वोपपादनसगमनावप्यस्मिन्सूत्रे 'अभ्युपगम्य चेमम्' इति भाष्येण मिथ्यात्वा युत्पादनकीर्तनस्य क उपयोग इति चेत् । अत्र ब्रूमः—मिथ्यात्वोपपादनं विना

पूर्वसूत्रसिद्धान्तानुन्मेषेणैतदधिकरणस्य तादृशमिथ्यात्वोपपादकस्य तच्छेषत्वापत्त्याऽधिकरणान्तरत्वानावश्यकता स्यादिति शङ्कायां तदावश्यकताद्योतनाय मिथ्यात्वोपपादनं विनाऽपि पूर्वाधिकरणसिद्धान्तसंभवप्रदर्शनाय तत्कीर्तनस्यात्र सामञ्जस्यात् । यद्वा नोक्तं ब्रह्मणो जगदुपादानत्वं युक्तम् । सिद्धान्त्यभिमतनिर्विकारत्वभङ्गप्रसङ्गादिति शङ्कायां विकारमिथ्यात्वोपपादनमत्र क्रियते स्वपक्षसाक्षाद्बाधकनिरासस्य पादार्थत्वाच्च नासंगतिः । तथा चाक्षेपसंगतिप्रदर्शनाय भाष्ये तदुक्तिः । पूर्वाधिकरण एव तद्व्युत्पादने च न तत्संगतिः संभवतीत्युपयुक्तमेवाभ्युपगम्येत्यनेन मिथ्यात्वाव्युत्पादनकीर्तनमिति ध्येयम् । अत्र चोक्तरीत्या स्वपक्षसाक्षाद्विरोधिनो विरोधिधर्मसत्यत्वादेर्वारकत्वाद्द्वारादृष्टाद्यसंगतिः । तादात्म्यस्य भेदाविरुद्धत्वाद्भोक्त्रादिविभागोपपत्तिरूपतर्कस्याप्रतिष्ठितत्वेऽपि श्रुत्यनुगृहीतस्य निर्विकारत्वानुपपत्तिरूपतर्कस्यैव प्रतिष्ठितत्वमिति प्रत्यवस्थानादनन्तरसंगतिः । अत्र ब्रह्मणो जगदुपादानत्वं निर्विकारत्वभङ्गापत्तिरूपतर्कविरुद्धं न वेति संशये—भवत्येव तर्कविरुद्धम् । ब्रह्मणो निर्विकारत्वस्य सिद्धान्तिनोऽप्यनुमततयेष्टापत्त्यनवकाशान्मूलशैथिल्याभावाच्चेति पूर्वपक्षे—नोक्ततर्कविरोधः । धर्मिसमानसत्ताकविकारशून्यत्वरूपसिद्धान्त्यभिमतनिर्विकारत्वस्य ब्रह्मणि तोपादानतयाऽविरोधाद्विकारस्य मिथ्यात्वाद्ब्रह्मणश्च सत्यत्वात् । स्वीकृतेऽप्युपादानत्वे निर्विकारत्वभङ्गाभावात् । मिथ्यात्वं चानिर्वाच्यत्वं नात्यन्तासत्त्वमिति सिद्धान्तमाह सूत्रकारः—तदनन्यत्वमिति । कार्यस्य विकारजातस्य तदनन्यत्वं कारणानन्यत्वम् । मिथ्यात्वमिति यावत् । कुतः । आरम्भणशब्दादिभ्यः । आरम्भणशब्दस्तावत्—एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्येवरूपः । आदिपदात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' 'इदं सर्वं यदयमात्मा' 'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्'

'नेह नानाऽस्ति किंचन' इत्येवमादिश्रुतिजातम् 'विश्वं मिथ्या दृश्यत्वात्परिच्छिन्नत्वात्' इत्याद्यनुमानं भाष्याद्युपदर्शितं संग्राह्यम्। अत्र च 'आरम्भणशब्दादिभ्यः' इति सूत्रांशेन 'वाचाऽऽरम्भणम्' इत्यादिश्रुतेर्हेतूकरणात्। तस्याश्च प्रपञ्चमिथ्यात्वकथन एव स्वरसादनन्यत्वपदेन साध्यतया मिथ्यात्वमेव प्रतीयत इति ध्येयम्।

अथ तदनन्यत्वपदेन कथं मिथ्यात्वप्रतीतिः। तत्र तस्य शक्त्यादिग्राहकप्रमाणाभावादाधुनिकलक्षणाभ्युपगमे च सूत्राक्षरास्वारस्यम् 'मिथ्यात्वमारम्भणशब्दादिभ्यः' इति विन्यासोपेक्षाया निर्बीजता चेति चेत्। अत्रोच्यते— 'तदनन्यत्वम्' इति सूत्रे तत्त्वत इति पदमध्याह्रियते। अनन्यत्वपदं चाऽऽवर्तनीयम्। तथा च तदनन्यत्वपदं तत्त्वतस्तदनन्यत्वपरं तादात्म्यपरं च। तदनन्यत्वमित्यत्रान्यपदस्यात्यन्तभिन्नार्थकतया तादात्म्यस्यापि तेन लाभसंभवात्। तदैक्यशून्येन तदत्यन्ताभेदाभावस्य तादात्म्यं विनाऽनुपपन्नत्वात्। न च भेदात्यन्ताभावमात्रं तादात्म्यम् पृथिवीतद्रूपयोर्भेदाभेदवादिनो मते भेदवति भेदात्यन्ताभावासंभवात्। किंतु तस्मादन्यदेव तादात्म्यम्। तच्च द्रव्यधर्मविशेषरूपमतिरिक्तं वेत्यन्यदेतत्। तत्त्वतस्तदनन्यत्वं च तदन्यत्वावच्छिन्नतात्त्विकरूपशून्यत्वम्। तथा च विशेषापेक्षया ब्रह्मानुज्ञानार्थं वा ब्रह्मान्यजगद्रूपस्यातात्त्विकता मिथ्यात्वापरपर्याया लभ्यत इति नोक्तदोषः। न च तत्त्वतस्तदनन्यत्वमात्रेण जगतो मिथ्यात्वसिद्ध्यो कपूर्वपक्षनिराससंभवे तादात्म्यभानं व्यर्थमिति शङ्क्यम्। तुच्छसाधारणेन ब्रह्मव्यतिरिक्ततात्त्विकरूपशून्यत्वेन जगतो मिथ्यात्व उपगते तस्य तुच्छतापत्त्या तदुपादानत्वं ब्रह्मणो दुर्घटमिति शङ्कानिरासाय तादात्म्यस्यापि तत्र वक्तव्यत्वात्। असत्ख्यातिमते त्वतिरिक्ततात्त्विकरूपशून्यस्यापि शुक्तिरजतादेर्घटज्ञानेन ज्ञाततात्त्विकरूपत्वासंप्रतिपत्त्या वियदादेर्ब्रह्मविज्ञानेन विज्ञाततात्त्विकरूपत्वतत्त्वरूपस्य वक्ष्यमाणैकविज्ञानेन सर्वविज्ञानस्योपपादनायोगेन ब्रह्मणो वियदादितत्त्वरूपताबोधनाय

तयोस्तादात्म्यस्यावश्य वाच्यत्वाच्च । 'अनन्यत्वं व्यतिरेकेणाभावः' इति भाष्येऽपि निरुक्तरूपमुभय विवक्षितम् । 'न खल्वनन्यत्वमित्यभेदं ब्रूमः । किंतु भेद व्यासेधाम.' इति भामत्यामपि, अभेदमैक्य भेद तदन्यतात्त्विकरूपवत्ता तत्तादात्म्यासमानाधिकरणतद्भेदवत्ता चेत्यर्थो विवक्षित इति न काचिदनुपपत्तिः । एतेन—"न तावद्ब्रह्माभेदस्तदनन्यत्वम् । अनृतस्य विश्वस्य ब्रह्माभेदायोगात् । अनङ्गीकाराच्च । अज्ञानविशिष्टनोपादानेनाभेदोऽस्तीति चेत् । मुमुक्षुज्ञेयशुद्धब्रह्मज्ञानादेव सर्वविज्ञानार्थं शुद्धेनैवाभेदस्य वक्तव्यत्वात् । अन्यथाऽविद्याऽपि 'येनाश्रुतं श्रुतम्' इतिवाक्योक्तज्ञेयकोटिप्रविष्टा स्यात् । नापि 'न खल्वनन्यत्वमित्यभेद ब्रूम. । किंतु भेद व्यासेधामः' इति भामत्युक्तरीत्या ततो भेदाभावमात्र तदनन्यत्वम् । भेदाभावेऽभेदध्रौव्यात् । भेदाभावे सत्यानृ=व्यवस्थायोगाच्च । अभेदाभावेन व्यवस्थायां तेनैवैकविज्ञानेन सर्वविज्ञानाभावोऽपि स्यात् । यदि चैकविज्ञानेन सर्वविज्ञानानुपपत्त्या भेदाभावः सत्यानृतव्यवस्थानुपपत्त्या चाभेदाभाव. कल्प्यते, तर्ह्युभयानुपपत्त्या लाघवाय तथा 'इदं सर्वं यदयमात्मा' 'नेति नेति' इत्यादिसामानाधिकरण्यश्रुतिभेदश्रुत्योर्मृत्पिण्डादिदृष्टान्तस्य च स्वारस्याय भेदाभेदावेव किं न कल्प्येते । ब्रह्मण एकरसत्वश्रुतिरप्यनेकरसात्मकाच्च भेदाभावेऽप्यभेदाभावमात्रेण वा भेदेऽप्यभेदेनैवोपपन्नाऽस्तु । यथा च सत्यस्यानृताभेदो न युक्तस्तथा ततो भेदाभावेऽपि । नापि ब्रह्मव्यतिरेकेणासत्त्व तदनन्यत्वम् । विशेषनिषेधस्य शेषाभ्यनुज्ञानार्थत्वादानन्दादिवज्जीवचैतन्यवच्च ब्रह्मात्मकत्वापातात् । ब्रह्मण्यारोपितत्व तु न तदनन्यत्वशब्दार्थः । शुक्त्यारोपिते रूप्ये तदनन्यशब्दाप्रयोगात् । प्रातिभासिकव्यावहारिकयोर्व्यावहारिकपारमार्थिकाभ्यामन्यत्वाभावेऽनिर्वाच्य-

---

= व्यवस्थायोगाच्चेति । व्यवस्थाया अयोगाच्चेत्यर्थ ।

---

१ क °स्य सत्यम । २ क चन् । नं । मु° । ३ क °ति कल्पतरूक° । ४ क °त्रेणेवाभेदेऽपि भे° । ५ क °र्थत्वेनाऽऽन° ।

त्वासिद्धेश्च । एकविज्ञानेन सर्वविज्ञानायोगाच्च । मृत्पिण्डादिदृष्टान्तानुपपत्तेश्च । कथं हि ब्रह्मविज्ञानाद्विज्ञातं सकलं भवेत् ॥" इति चन्द्रिकोक्तं पूर्वोक्तभाष्याभिप्रेतार्थानवबोधविजृम्भितमित्यनादरणीयमेव । 'आरम्भणशब्दादिभ्यः' इति सूत्रांशेन 'वाचाऽऽरम्भणम्' इत्यादिश्रुतेर्हेतूकरणात्तस्याश्च प्रपञ्चमिथ्यात्वकथन एव स्वरसादुक्तरीत्या तादात्म्यघटितमिथ्यात्वस्यैव तदनन्यत्वमित्यनेन विवक्षितार्थप्रतीतेः 'यद्रजतमभात्सा शुक्तिः' इति सामानाधिकरण्यप्रतीतेः सर्वसंमतत्वादारोपितेऽपि तत्त्वतोऽधिष्ठानानन्यशब्दप्रयोगाविरोधात्प्रातिभासिकव्यावहारिकयोरपि तत्त्वतो व्यावहारिकपारमार्थिकाभ्यामन्यत्वाभावेनानिर्वचनीयताया निष्प्रत्यूहं सिद्धेश्चोक्तचन्द्रिकाकारोक्तस्य कस्यापि दोषस्यानवकाशात् । अथ—'वाचाऽऽरम्भणम्' इत्यादिश्रुतेः प्रपञ्चसत्यतामुपेत्याप्यर्थवर्णनसंभवात्कथं तस्याः प्रपञ्चमिथ्यात्वकथन एव स्वरसः । तथा हि केचिद्वर्णयन्ति—एकविज्ञानेन सर्वविज्ञानोक्त्या कार्यकारणयोरभेद उपक्षिप्ते पिण्डे दृष्टेऽपि घटादिगोचरः संशयः पिण्डघटयोरर्थक्रियाभेदो नामादिभेदश्च कथमुपपन्न इति शङ्कायाम् 'वाचाऽऽरम्भणम्' इति वाक्यशेषः । वाचा 'घटेन जलमाहर' इत्यादिवाक् । तत्पूर्वको व्यवहारश्च वाक्पदार्थः । तदर्थम् 'अध्ययनेन वसति' इत्यादाविव फलस्यापि हेतुत्वविवक्षया तृतीया । विकारो घटादिस्तन्नामधेयं च मृत्तिकयाऽऽरम्भणं स्पृश्यं संबन्धनीयमिति यावत् । 'आलम्भः स्पर्शहिंसयोः' इति वचनात् । स्पर्शार्थकस्याऽऽलभतेः संबन्धे पर्यवसानम् । कर्मणि ल्युट् । मृत्तिकेत्येवेत्यत्र विद्यमानस्यानुषिक्तस्य मृत्तिकापदस्य तृतीयया विपरिणामः । तथा च घटमानयेत्याद्यभिधानरूपव्यवहारार्थं तन्मूलानयनादिव्यवहारार्थं च मृत्तिकया कम्बुग्रीवादिसंस्थानं घट इत्यादि नामधेयं च संबध्यत इति प्रतिपादिते पिण्डघटयोरेकद्रव्यत्वेऽप्यवस्थानां भेदात्संदेहादिकं सर्वमुपपद्यत इत्युक्तं भवति । ननु द्रव्यैक्यमुपेत्यावस्थाभेदात्संदेहादिकं किमित्युपपाद्यते तार्किकादिवत्कार्यकारणद्रव्ययोर्भेद एव कुतो नोपेयत इत्याशङ्क्योक्तम् 'मृत्ति-

केत्येव सत्यम् ' इति । घट इति पदमध्याहृत्य घटो मृत्तिकेत्येवार्थे । सत्य प्रामाणिक इति यावत् । घटो मृत्तिकेति लोकसिद्धप्रत्याभिज्ञयाऽभेदोऽवगम्यते । अतो द्रव्यैक्यमादायैव व्यवहारादिकमुपपादनीयमिति । नैतत्स्वारसिकम् । एवमर्थे वर्ण्यमाने वाचेति तृतीयायाश्चतुर्थ्यर्थत्वाङ्गीकारो मृत्तिकेत्यनुषङ्गस्तृतीयान्ततया तस्य विपरिणामो मृत्तिकेत्येवेत्यत्र घटपदाध्याहारश्चेति रीत्या योजनाया अतिक्लिष्टत्वात् ।

यदपि—विकारो घटशरावादिः ' मृदो भिन्न. ' इति वाचाऽऽरम्भणं वाङ्मात्रेण व्यवह्रियते न भेद इति भाव । घटादि नामधेय घटादि द्रव्य मृत्तिकेति कृत्वैव सत्यम् । सति प्रामाणिकेऽर्थे साधु । ' तत्र साधु. ' (पा० सू० ४ । ४ । ९८) इति यत्प्रत्ययः, तथा च घटपिण्डादिनामव्यवस्थाऽवस्थाभेदानुसारेणैव कर्तव्या न तद्वशेन कार्यकारणद्रव्यभेद आवस्थेय (आस्थेय) इति पर्यवसितोऽर्थ इति व्याख्यानम् । तदपि ' वाचाऽऽरम्भणम् ' इत्यत्र ' मृदो भिन्न. ' इति पदाध्याहारान्नामधेयपदस्य घटादिपरत्वाङ्गीकारेण सङ्कोचकल्पनान्मृत्तिकेत्यत्र ' घटादि द्रव्यम् ' इति पदाभ्याहाराच्च न स्वरसम् ।

यदपि—वाचा वागिन्द्रियमात्रेणाऽऽरम्भणं यस्य तन्नामधेयं विकारः । संस्कृतापभ्रंशरूपेण विक्रियमाणत्वात् । व्याकरण सापेक्षेण वागिन्द्रियेण निष्पाद्य मृत्तिकेत्येव सत्य नित्यम् । प्रवाहरूपेणानादीन्यर्थः । ' न वधेनास्य हन्यते । एतत्सत्यं ब्रह्मपुरम् । ' इत्यत्र सत्यपदस्य नित्ये प्रयोगात् । सदाशब्दस्य त्यबन्तस्य सत्यपदत्वेन सदातनार्थकत्वाच्च । एकविज्ञानेन सर्वविज्ञान हि सादृश्यात्प्राधान्याद्वा । तत्रैकस्य ब्रह्मणो ज्ञानेन सत्त्वादिना तत्सदृशस्य ज्ञाने मृत्पिण्डमृन्मया दृष्टान्ताः । प्रधानस्य तस्य ज्ञानेन तद्गुणीभूतस्य सर्वस्य ज्ञाने संस्कृतापभ्रंशो दृष्टान्तः । अपभ्रंशज्ञानाद्धि यत्फलं तत्तदधिक च सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानाद्भवतीति संस्कृतं प्रधानम् । तादृशगुणप्रधान दृष्टान्तलाभार्थं च 'वाचाऽऽरम्भणम्' इत्यादावपि ' यथा सोम्यैकेन ' इत्यादिकमनुषञ्जनीयमिति रीत्याऽऽनन्दतीर्थीय-

व्याख्यानम् । तदप्यस्वरसम् । तथा हि—वाचेत्यनेन वागिन्द्रियमात्र लक्षणीयम् । अन्यथा व्याकरणनिष्पाद्यत्वालाभेनाप भ्रंशालाभापत्तेः । मन्मते वाचेत्यस्य वाङ्मात्रमित्यर्थे नामधेय मित्यत्र नामधेयमात्रमित्यर्थे लक्षणा तु श्रुतसामानाधिकरण्यानुपपत्तिनिबन्धना लोकसिद्धा चेति वक्ष्यते । सत्यशब्दस्याबाध्ये रूढत्वान्नित्यत्वार्थकत्वमपि लक्षणयैव । संस्कृतस्यापि मुख्यनित्यत्वाभावेन सदाशब्दमादाय योगासंभवेन व्याकरणनिष्पाद्यत्वरूपगौणनित्यत्व लक्षणापत्तिश्च । सदाशब्दस्य त्यब तत्वमपि=व्यारणासिद्धमेव । विकारशब्दस्य मुख्यविकारार्थकत्वे त्वदिष्टार्थासिद्ध्या संस्कृतोच्चारणाशक्त्योच्चार्यमाणार्थकत्व लक्षणयैव । नामपदस्यापि शब्दार्थकत्व लक्षणयैव । अपभ्रंशस्य संकेतवत्प्रातिपदिकरूपरूढ्यर्थत्वाभावात् । 'यथा सौम्यैकेन' इत्यादिकमनुषञ्जनीयमित्यपि न सत् । पूर्ववाक्यप्रविष्टभागस्योत्तरवाक्यघटकत्वेन प्रतिसंधान ह्यनुषङ्गः । स च प्रकृते न संभवति । प्रकृते हि 'मृत्तिकेत्येव सत्यम्' इत्यादेः पश्चात् 'यथा सौम्यैकेन मृत्तिकेत्यनेन सर्वस्तद्विकारो विज्ञातो भवति' इत्यादि हि विवक्षितदृष्टान्तलाभाय कल्पनीयम् । न चैतत्पूर्ववाक्ये प्रविष्टम् । किंच यथा 'वाचाऽऽरम्भणम्' इत्यादिना गुणप्रधानभावः श्रुत्या ज्ञापितस्तथा मृत्पिण्डतद्विकारयोः सादृश्यमपि ज्ञाप्येत । यदि च मृत्पिण्डज्ञानेऽपि तद्विकाराणां घटत्वादिना ज्ञानासंभवान्मृत्त्वेन रूपेणैव घटादिज्ञानं मृत्पिण्डज्ञानादिति पर्यालोचनात्तत्सदृशज्ञान तज्ज्ञानाधीनमिति लक्ष्यत इत्युच्यते तर्हि संस्कृतज्ञानादपभ्रंशज्ञानासंभवात्संस्कृतस्य प्राकृतकार्यकारित्वतात्पर्यकम् 'मृत्तिकेत्यनेन सर्वस्तद्विकारो विज्ञातो भवति' इति वाक्ये संभवतीति तदेव श्रुत्योच्येत, किम् 'वाचाऽऽरम्भणम्' इत्यादिना गुणप्रधानभावज्ञापकेनेति

---

= व्याकरणासिद्धमेवेति । 'अव्ययात्त्यप्' (पा० सू० ४ । २ । १०४) इत्यत्र 'अमेहक्वतसित्रेभ्य एव' इति परिगणनादिति भाव ।

श्रुतिस्वारस्यहानिः । अपि च कार्ष्णायसान्ताना × सदृशदृष्टा-न्तानां पश्चादेव वाचाऽऽरम्भण नामधेय विकार इतिवत् ‘ सस्कृतं सत्यम् ’ इति सामान्यन एवोच्यते( च्येत ), न तु मृत्पिण्डादिदृष्टान्तस्यैकैकस्यान्ते विशिष्य ‘ मृत्तिका ’ इत्येकै कम् । शब्दान्तराणामपि सस्कृतानां सभवन मृत्तिकेत्येवेत्यादे-रुपपादनमप्यस्वरसम् । ‘ आयसमित्येव सत्यम् ’ इत्यस्यैव पूर्णत्वसभवे कार्ष्णेति किमित्युक्तमिति शङ्काऽप्यनुत्तरैव त्वन्मते । मन्मते तु कार्ष्णायसाभिवाचककलघुशब्दान्तरसभवेऽपि न दोष । घटाद्यर्थविवक्षायां घटादिशब्दानामिव कलशादि-शब्दानामपि तत्पर्यायाणां प्रयोगात् । एकविज्ञानेन तत्सदृश तदधीन च सर्वमपि ज्ञायत इत्यप्यसगतम् । तथा नियमाभा-वात् । नहि गोज्ञाने गवयादे राजज्ञाने च प्रजादेर्नियतं ज्ञानम् । अनियतज्ञाने च सदृशादेरेव किमित्युपा( दा )नमित्यत्रानुत्तर मेवेति दिक् ।

एव मतान्तरे प्रपञ्चसत्यतामुपेत्य वाचाऽऽरम्भणश्रुतेरर्थ प्रतिपादनेऽस्वारस्यमेवेत्यत प्रपञ्चमिथ्यात्वपरत्वेनैवास्मद्गुरु-च्योपदर्शित व्याख्यान स्वरसम् । तथा हि भाष्यम्—एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरा वोदञ्चनादिकं मृदात्मत्वाविशेषाद्विज्ञातं भवेत् । यतो वाचाऽऽर-म्भण विकारो नामधेयम् । वाचैव केवलमस्तीत्यारभ्यते विकारो घट, शराव उदञ्चन चेति । न वस्तुवृत्तेन विकारो नाम कश्चिदस्ति । नामधेयमात्र ह्येतदनृतम् । मृत्तिकेत्येव सत्यमिति ।

ननु नामधेयमित्यत्र मात्रपदार्थान्तर्भावेणानृतत्वपर्यवसायि नामधेयपदव्याख्यानं कथ स्वरसमिति चेत् । अत्रोच्यते—

× सदृशदृष्टान्तानामिति । छान्दोग्ये हि ‘ येनाश्रुतश्रुत श्रुत भवति ’ इत्युपक्रम्य ‘ यथा सोम्यैकेन मृत्पिण्डेन सर्व मृन्मय विज्ञातश्स्याद्वाचाऽऽ-रम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम् ॥ ४ ॥ यथा सोम्यैकेन लोह-मणिना सर्व लोहमय विज्ञातश्स्याद्वाचाऽऽरम्भण विकारो नामधेय लोहमि-त्येव सत्यम् ॥ ५ ॥ यथा सोम्यैकेन नखनिकृन्तनेन सर्व कार्ष्णायस विज्ञा-तश्स्याद्वाचाऽऽरम्भण विकारो नामधेय कृष्णायसमित्येव सत्यमेवश्सोम्य स आदेशो भवतीति ॥ ६ ॥ ’ इति दृष्टान्तत्रयमुक्तम् ।

वाचा व्यवह्रियमाणं विकारम् ‘वाचाऽऽरम्भणम्’ इति वाक्योदितमनूद्य नामधेयत्वविधानमत्र स्वरसतः प्रतीयते। तत्र च श्रुतार्थमादाय सामानाधिकरण्यासंभवान्नामधेयपदे नामधेयवाच्यत्वलक्षणामुपेत्य सामानाधिकरण्योपपादने पौनरुक्त्यापत्तेः ‘मृत्तिकेत्येव सत्यम्’ इतिवाक्यशेषस्वरसाच्चार्थपरिसंख्यार्थमुपेत्य मात्रपदान्तर्भावेण मिथ्यात्वपर्यवसायि तदर्थकथनस्यैव स्वरसत्वात्। दृष्टं च नामपदस्याऽऽभासकत्वद्योतकत्वम्—‘यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्’ इति। लोकेऽपि पुत्राभासे पुत्र इति नामधेयम्, नात्र पुत्रत्वमस्तीति। ‘मृत्तिकेत्येव सत्यम्’ इति तु गुडजिह्विकान्यायेन मृदः सत्यत्वानुवादपूर्वकं विकारानृततप्रतिपादनायैव स्वरसम्। अमुमर्थं दार्ष्टान्तिके दर्शयति—‘एवं हि सौम्य स आदेशो भवति’ (छा० ६। २ ७) इति। एवंशब्देन वाचाऽऽरम्भणं विकारः, आदेश एव सत्य इति प्रतिपादितं भवति। आदेशश्चाऽऽदिश्यत इत्यादेश इति व्युत्पत्त्या ‘उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति’ इत्युपक्रान्तमुपदेशैकगम्यं ब्रह्मैव। इत्थमेव चास्मिन्प्रकरणे तेजसादीनां पदार्थानां त्रिवृत्करणनिरूपणावसरे स्पष्टमेव प्रतिपादितम्—‘यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्’ (छा० ६। ४। १) इति। अत्र ‘अपागादग्नेरग्नित्वम्’ इति स्पष्टमेव विकारोपमर्दो दर्शितः। अतः स्वरसतो वाचाऽऽरम्भणश्रुतेर्विकारानृतत्वपरतैवेत्यवधार्यते। यद्वा ‘मृत्तिकेत्येव सत्यम्’ इत्यादौ हेतु ‘वाचाऽऽरम्भणं विकारो नामधेयम्’ इति। आरम्भणमुत्पत्तिर्वाचा वाङ्मात्रं विचारासहमिति यावत्। तथा चोत्पत्तिः सतो वाऽसतो वेति निरूपयितुमशक्यत्वादुत्पन्नसामान्यं विचारासहमिति भावः। तावताऽप्यनाद्यविद्यासाधारण्येन हेत्वलाभादाह—विकारो नामधेयमिति। नाशादिविक्रियायुक्तं नाममात्रं विचारासहमिति यावत्। अर्थे नामाभेदासंभवात् ‘अब्भक्ष’ इत्यादाविव मात्रार्थान्तर्भावेन (ण) विचारासहत्वलाभः। ‘मृत्तिकेत्येव

सत्यम्' इत्यस्यार्थश्चन्द्रिकोक्तदूषणपरिहारावसरे वक्ष्यते । एवम् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा० ६।८।७) इति श्रुतेरपि विकारानृतत्वप्रतिपादन एव स्वारस्यम् । तथा हि—'ऐतदात्म्यमिदं सर्वम्' इति हि 'इदं सर्वं यदयमात्मा' इति श्रुत्यन्तरानुसारात् 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रमानुसाराच्च 'एष आत्माऽस्य' इति बहुव्रीहिं कृत्वा ततो भावप्रत्यये कृते भावप्रत्ययस्य प्रकारीभूतप्रकृत्यर्थपरत्वाद्बहुव्रीह्यर्थे विशेषणीभूतात्मपरामर्शकत्वेन 'एष आत्मा इदं सर्वम्' इति प्रतिपादयति । 'एष आत्मा इदं सर्वम्' इत्येव वक्तव्ये सामानाधिकरण्यमात्मात्मीयभावेनौपचारिकमितिशङ्कानिराकरणाय बहुव्रीहिभावप्रत्यययोरुपादानम् । तथा सति बहुव्रीहिणैव मुख्यया वृत्त्याऽऽत्मात्मीयभावे लब्धे पुनर्भावप्रत्ययरूपयत्नान्तरकरणं व्यर्थं स्यादिति तर्केण तन्निरासः । तच्च सामानाधिकरण्यं मृद्घट इतिवत्परिणामाभिप्रायेण 'यद्रजतमभात्सा शुक्तिः' इतिवदाऽऽरोपितबाधाभिप्रायेण वाऽऽते द्वेधा सम्भवति । अतस्तन्निर्धारणाय 'तत्सत्यम्' इति वाक्यम् । तत्र हि तच्छब्दः प्रकृतमात्मानं परामृशति । तस्यैव तात्पर्यविषयतयाऽस्मिन्सन्दर्भे प्राधान्यात् । 'स आत्मा' इति वाक्ये तस्यैव परामर्शात् । तदेकार्थ्यानुसाराच्च । ततश्च तच्छब्देनाऽऽत्मानं परामृश्य तस्य विशिष्य सत्यताप्रतिपादनमनात्मनोऽनृततां ... पूर्वोपदर्शितसामानाधिकरण्यं बाधायामेवेति व्यवस्थापयति । ततश्च 'तत्त्वमसि' इति वाक्यमपि स्वस्वारस्यानुसारेणोपक्रमस्वारस्यानुसारेण च यथाश्रुतमेव । न तु—'ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति श्रुतेः 'तस्मै त्वं समर्पणीयोऽसि' इत्यर्थे 'तस्मै त्वं तत्त्वम्' इति 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः 'तस्मात्त्वमुत्पन्नोऽसि' इत्यर्थे 'तस्मात्त्वं तत्त्वम्' इति, 'स कारणं करणाधिपाधिपः' इति श्रुतेः 'तत्स्वामिकोऽसि' इत्यर्थे 'तस्य त्वं तत्त्वम्' इति, 'सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठिताः' इति श्रुतेः 'तस्मिंस्त्व

प्रतिष्ठितोऽसि ' इत्यर्थे ' तस्मिंस्त्वं तत्त्वम् ' इति वा ' सुपां सुलुक् ' ( पा० सू० ७ । १ । ३९ ) इति विभक्तिलोपादिना क्लेशेन व्याख्येयम् । मदर्शितानेकार्थसंभावनया व्यामोहापत्तेरर्थविशेषानिर्णयात् । एवं शरीरवाचकानां शरीरिपर्यन्तत्वमुपेत्य शरीरिशरीरभावेन(ण) सामानाधिकरण्याभिप्रायेण 'तत्त्वमसि' वाक्यार्थवर्णनमपि न स्वरसम् । न ह्यत्र त्वंशब्दस्येश्वरशरीरभूतजीववाचकस्येश्वरे वृत्तिरभ्युपेयते । त्वंशब्दार्थस्य तच्छब्दार्थे विशेषणत्वाभावात् । किंतु तच्छब्दस्यैव प्रकृतपरामर्शकस्य त्वंशब्दार्थे जीवेऽभेदसंबन्धेन विशेषणसमर्पकता । अन्यथा 'असि' इति मध्यमपुरुषानुपपत्तेः । त्वं शब्दार्थस्येतरविशेषणत्वे आकाङ्क्षाभावेनाऽऽख्यातसामानाधिकरण्यायोगात् । युष्मच्छब्दस्याऽऽख्यातसामानाधिकरण्य एव ' युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ' ( पा० सू० १।४।१०५ ) इति सूत्रेण मध्यमपुरुषविधानात् । अतस्त्वंशब्दार्थस्य विशेष्यत्वमुपेयम् । तत्र च परमात्मपरतच्छब्दस्य वृत्तिः शरीरवाचकानां शरीरिपर्यन्तत्वाभ्युपगमेऽपि न संभवति । ईश्वरस्य जीवं प्रति शरीरत्वाभावात् । अतो मध्यमपुरुषोपपत्तये जीवविशेष्यकमेव सामानाधिकरण्यमुपेयम् । दृश्यते च त्वमहंशब्दार्थयोर्विशेषणविशेष्यभावव्यत्यासे मध्यमोत्तमपुरुषयोर्व्यत्यासः—त्वं वाऽहमस्मि भगवो देवतेऽहं वै त्वमसीति । एवं सद्विद्यायाः प्रपञ्चमिथ्यात्वप्रतिपादन एव स्वारस्यं मोक्षधर्मे श्वेतकेतुसुवर्चलोपाख्यानरूपोपबृंहणेन स्पष्टीकृतं सूत्रकृता भगवता व्यासेन । तथा हि तत्रोपाख्यायते—देवकन्या सुवर्चला जन्मान्तरसिद्धसहजब्रह्मतत्त्वानुभवात्तादृशं पतिमिच्छन्ती श्वेतकेतुं पितृसमीपतो लब्धात्मतत्त्वबोधमुपश्रुत्य तं वृतवती । पित्राऽपि तस्मै निवेदिता । ताभ्यां दम्पतीभ्यां ब्रह्मनिष्ठाभ्यां वैदिककर्मानुष्ठानयुक्तं गार्हस्थ्यमाश्रित्य स्थितमिति । तत्र तयोरित्थं ब्रह्मकथारूपः संवादः प्रवृत्तः—

> ततः कदाचिद्भर्तारं श्वेतकेतुं सुवर्चला ।
> पप्रच्छ को भवानत्र ब्रूहि मे तद्द्विजोत्तम ॥

तामाह भगवान्वाग्मी त्वया ज्ञातो न संशयः ।
द्विजोत्तमोऽह सुभगे सत्यव्रतपरायणः ॥
सा तमाह महात्मानं पृच्छामि हृदि शायिनम् ।
तच्छ्रुत्वा प्रत्युवाचैनां सर्वज्ञो मुनिपंगवः ।
मनसैव समायुक्तमात्मानं मन्यसे यदि
तन्मिथ्या, गोत्रसद्भावे वर्तते देहव धनः ॥
त्वमप्यहमह सर्वमहमित्येव वर्तते ।
नात्र तत्परमार्थं तद्यन्मा त्व परिपृच्छसि ॥

अत्र सद्विद्यायाम् 'तत्त्वमसि' इत्यसकृत्पित्रोपदिष्टः श्वेतकेतुः कथमात्मानं बुध्यत इति जिज्ञासमानया सुवर्चलया 'कस्त्व द्विजोत्तम' इति प्रश्न कृतः । ततः प्रश्नाभिप्रायमनवगच्छताऽपि श्वेतकेतुना क्रमेण तमर्थं सा बोधनीयेति मत्वा तत्रोत्तरमुक्तम्—द्विजोत्तमेति सबन्धयन्त्या त्वया ब्राह्मणोऽहमित्यवगतमेव किमत्र प्रष्टव्यमिति । ततः सुवर्चलया देहोपाधिकत्वेनाऽऽत्मनि कल्पितं प्रत्यक्ष ब्राह्मण्य न पृच्छामि, किंतु 'द्विजोत्तमोऽहम्' इत्यहंशब्देन देहाद्विविक्तं यमात्मानं हृदि शायिन निर्दिशसि त पृच्छामीत्युक्ते तत्रोत्तरमुक्तम्—अहशब्दो मनःशबलितात्मस्वरूपे वर्तते । मन.शबलितात्मस्वरूप च मिथ्या, ब्राह्मणकुलोत्पन्ने देहोपाधिक आत्मनि ब्राह्मण्यमिव । अत आत्मतत्त्वजिज्ञासुभिर्नाहशब्दार्थ प्रष्टव्यः, अपि चाहभावः सर्वसाधारणः प्रत्यक्षसिद्ध. । अत परमार्थवस्तुजिज्ञासा चेन्नाहभाव प्रश्नार्ह. । तदनन्तर कर्तृत्वभोक्तृत्वादियुक्तमहभाव यद्यनृतमवगच्छसि तर्हि कर्तृत्वपूर्वक वैदिक कथमाचरसीति पृष्टे लोकसग्रहार्थ वैदिककर्माचरणमित्युक्तम् । तदनन्तर सर्वेरात्मनि प्रयुज्यमानस्याहशब्दस्य कथं तदर्थता न स्यादिति मनसि निधाय शब्दार्थसबन्धप्रश्ने कृते न संयोगादिः शब्दार्थयोः संबन्धः, अपि तु वाच्यवाचकभाव इत्युत्तरमुक्तम् । तदनन्तरं दम्पत्योरिय प्रश्नोत्तरपरम्परा—

सुवर्चला—सदाऽहकारशब्दोऽयं व्यक्तमात्मनि संश्रितः ।
न वाचस्तत्र वर्तन्त इति मिथ्या भविष्यति ॥

श्वेतकेतुः—अहशब्दो ह्यहंभावे नाऽऽत्मभावे शुभप्रभे ।
न वर्तन्ते परेऽचिन्त्ये वाचः सगुणलक्षणाः ॥

सुवर्चला—अहंभावोऽत्र को नाम ह्यात्मभावस्तथैव च ।
तन्मे ब्रूहि यथान्यायमेव चेन्मुनिपुंगव ॥

श्वेतकेतुः—मृन्मयो हि घटाभासस्तादृग्भाव इहेष्यते ।
अहभावः परेऽचिन्त्ये ह्यात्मभावो महान्परः ।
न वाचस्तत्र वर्तन्त इति नैव विरुध्यते ।

अत्र शब्दार्थयोर्वाच्यवाचकभाव संबन्धोऽस्ति चेत्कथमह शब्द आत्मवाचको न स्यादिति प्रश्ने कृतेऽहंशब्दो नाऽऽत्मनि मुख्यया वृत्त्या वर्तते, किंत्वहमर्थ इत्युत्तरमुक्तम् । ततः को नामाहमर्थादन्य आत्मेति पृष्टे मृदि घटाभासवदात्मन्यहभावोऽप्याभास इत्यहमर्थात्मनोर्विवेकं दर्शयित्वा कल्पिताकारोपधानेन प्रवर्तमानः शब्दो न शुद्धाधिष्ठानपर्यन्त प्रवर्तते रजतोपधानेन प्रवर्तमानः शुक्तौ रजतशब्द इव । अतः कल्पितोपाधिनिमित्तोऽहंशब्दो न शुद्धात्मनि मुख्यया वृत्त्या प्रवर्तत इति न विरुध्यत इत्युपसंहृतम् । ततोऽहंकाराद्विविक्त आत्मैव प्रपञ्चाधिष्ठानं ब्रह्मेति सिद्धवत्कृत्य यथाऽऽकाशस्य प्रपञ्चाश्रयत्वेऽपि तदसङ्गित्वमेवं ब्रह्मणोऽप्यसङ्गित्वे श्वेतकेतुना प्रतिपादिते पुनरिमे प्रश्नोत्तरे—

सुवर्चला—निर्विकारं ह्यमूर्तं च निरंशं सर्वगं तथा ।
दृश्यते च वियन्नित्य तादृगात्मा न दृश्यते ॥

श्वेतकेतुः—त्वचा स्पृशति वै वायुमाकाशस्य पुनः पुनः ।
तत्स्थं गन्धं तथाऽऽघ्राति ज्योतिः पश्यति चक्षुषा ॥
तमो रश्मिगणं चैव मेघजालं तथैव च ।
वर्षतारागणं चैव नाऽऽकाशं दृश्यते पुनः ॥
आकाशस्याप्यथाऽऽकाशं सद्रूपमिति निश्चितम् ।
सदर्थे कल्पित सर्व तत्सत्यं विष्णुरेव च ॥
यानि नामानि गौणानि ह्युपचारात्परात्मनि ।
न चक्षुषा न मनसा न चान्येन परो विभुः ॥
चिन्त्यते सूक्ष्मया बुद्ध्या वाचा वक्तु न शक्यते ।
एतत्प्रपञ्चमखिलं तस्मिन्नेव प्रतिष्ठितम् ॥ इति ।

अथाऽऽकाशारम्भपश्चाधिष्ठानं ब्रह्म कुतो न दृश्यत इति प्रश्ने–आकाशस्थस्य वाय्वादेरेव ग्रहणमस्ति, न तु विविक्तस्याऽऽकाशस्य । यदा लौकिकाकाश एवेयं गतिस्तदा केव कथा परमात्मनि ततोऽपि सूक्ष्मे । तत. सदर्थे कल्पितं सर्वम् । स(त)च सद्रूपं सर्वाधिष्ठानत्वाद्व्यापकम् । तत्रोपाधिमाश्रित्य प्रवर्तमानाः शब्दाः शुद्धे साक्षान्नप्रवर्तन्त इत्युत्तरमुक्तम् । अस्यां प्रश्नोत्तरपरम्परायां मृन्मयो हि घटाभास इति दृष्टान्तोक्त्या वाचाऽऽरम्भणश्रुत्यर्थः, सद्रूपमित्यात्मशब्देन प्रकृतस्य जीवस्य सद्रूपत्वोक्त्या 'तत्त्वमसि' इति वाक्यार्थ, 'सदर्थे कल्पितं ह्येतत्तत्सर्वं विष्णुरेव च' इत्यनेन 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति श्रुत्यर्थश्च निष्प्रपञ्चप्रत्यगभिन्नब्रह्मप्रतिपत्त्यनुकूलो दर्शित इति । एवं चोक्तोपबृंहणेन सद्विद्याया निष्प्रपञ्चप्रत्यगभिन्नब्रह्मपरत्व एव स्वारस्ये सिद्धे तस्य प्रपञ्चमिथ्यात्वं विनाऽनुपपत्त्या तदन्तर्गतवाचाऽऽरम्भणमित्यादिश्रुतेः प्रपञ्चमिथ्यात्वप्रतिपादन एव स्वारस्यमिति स्पष्टमेव विदुषाम् । एवम् 'नेह नानाऽस्ति किंचन' इत्यादिवाक्यस्यापि प्रपञ्चमिथ्यात्वप्रतिपादन एव स्वारस्यम् । अत्र ह्यध्यारोपन्यायेन महावाक्यीयपदार्थशोधकेन 'इह' इत्यनेन जगद्विशिष्टब्रह्मोपस्थापनात् । तत्र च नाना परिदृश्यमानं जगत्किंचन किमपि । यद्वा केनापि प्रकारेण नास्तीति द्वैतसामान्याभावरूपविधेयसमर्पणम् । असति बाधक उद्देश्यतावच्छेदककालाद्यवच्छेद्यत्वमानस्योद्देश्यविधेयभावेनान्वयस्थले व्युत्पत्तिसिद्धत्वात् । कालान्तरावच्छेदेन द्वैताभावबाधस्य 'तरति शोकमात्मवित्' 'विद्वान्नामरूपाद्विमुक्तः' 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुतिभिर्ज्ञाननाश्यत्वानुमापकदृश्यत्वलिङ्गादिरूपमानान्तरेण च सिद्धत्वेन तद्बोधने 'नेह नाना' इतिवाक्यवैयर्थ्यापत्तेः । यदा येन संबन्धेन येन रूपेण च यत्र यत्प्रतिपन्नं तत्कालावच्छेदेन तत्संबन्धावच्छिन्नतद्रूपावच्छिन्ननिष्ठाभावप्रतियोगित्वरूपमिथ्यात्वबा(बो)धकताया एव तस्य स्वरसत्वात् । इह ब्रह्मणि नानात्वं ब्रह्मप्रतियोगिकभेदो नास्तीति परमतसिद्धतदर्थस्तु न स्वरसः ।

नानेत्यस्य नानात्वपरतया ब्रह्मणि जीवघटादिप्रतियोगिकभेद-सत्त्वेन तन्निषेधस्य कर्तुमशक्यतया भेदसामान्यनिषेधायोगेन नानात्वमित्यस्य भेदसामान्यस्वरसस्य ब्रह्मप्रतियोगिकभेदविशेषपरतया च क्लिष्टार्थत्वात् । तावताऽपि किंचनेत्यस्यास्वारस्यं वैयर्थ्यं चेति दिक् ।

यदपि चन्द्रिकायां परिहृतदूषणोत्तरम्—एकविज्ञानेन सर्वविज्ञानायोगाच्च । मृत्पिण्डदृष्टान्तानुपपत्तेश्च ।

> कथं हि ब्रह्मविज्ञानाद्विज्ञातं सकलं भवेत् ।
> न हि शुक्तिस्वरूपस्य विज्ञानाद्रजतज्ञता ॥

प्रत्युत—शुक्तेस्तत्त्वापरिज्ञानाद्यथैव रजतज्ञता ।

> ब्रह्मतत्त्वापरिज्ञानात्तथा सर्वज्ञतोचिता ॥

इति दूषणमुक्तम् । तदपि मन्दम् । विवर्तवादेऽधिष्ठानज्ञानेनाऽऽरोपितस्य तत्त्वतो ज्ञातत्वं संप्रतिपन्नम् । तच्चाधिष्ठानात्मकस्वीयतात्त्विकस्वरूपकत्वम् । उक्तं हि भामत्याम्—रज्ज्वां ज्ञातायां भुजंगतत्त्वं ज्ञातं भवति । सा हि तस्य तत्त्वमिति । एवं च शुक्तिसाक्षात्कारानन्तरं यद्रजतमभात्सा शुक्तिरिति प्रत्ययाद्रजते शुक्तिकात्मकज्ञातस्वीयतात्त्विकस्वरूपकत्वात्मकं शुक्तिकाज्ञानेन तत्त्वतो ज्ञातत्वमक्षतमेव । एकविज्ञानेन सर्वविज्ञानमपि तत्त्वतः सर्वविज्ञानमेव विवक्षितम् । एवं चाधिष्ठानभूते ब्रह्मणि ज्ञाते 'इदं सर्वं यदयमात्मा' 'सर्वं खल्विदं ब्रह्म' इति बाधायां सामानाधिकरण्यानुरोधाद्ब्रह्मरूपज्ञातस्वीयतात्त्विकस्वरूपकत्वस्य ब्रह्मण्यारोपिते जगति सत्त्वादेकविज्ञानेन सर्वविज्ञानानुपपत्तिः, मृदादिविज्ञानेन घटादीनां विज्ञान(त)स्वीयतात्त्विकस्वरूपकत्वं गुडजिह्विकान्यायेनैवेत्युक्तं प्रागिति नोक्तदृष्टान्तासंगतिः ।

यत्तु चन्द्रिकायाम्—रज्ज्वां ज्ञातायां भुजंगतत्त्वं ज्ञातं भवति । सा हि तस्य तत्त्वम् । एवं च ब्रह्मज्ञानात्सर्वं तत्त्वतो ज्ञातं भवतीति भामत्युक्तमनूद्य तन्न, एवं हि ब्रह्मज्ञानेन ब्रह्मैव ज्ञातं भवतीत्यर्थः स्यात् । तच्चायुक्तम् । स्वस्य स्वहेतुत्वायोगात् । 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यात्'

---

१ क. शुक्तितत्त्वाप° ।

इति 'श्रुतिगताश्रुतादिपदायोगाच्च । किंचासाधारण स्वरूप धर्मो वा तत्त्वमित्युच्यते । न तु भ्रमाधिष्ठानम् । तथा सत्यानन्दो ब्रह्मणः, रज्जुत्वं च रज्जोस्तत्त्व न स्यात् । न च रज्जू रज्जुज्ञाननिवर्त्यस्य सर्पस्य स्वरूप धर्मो वा । न च परस्परभिन्नानेकारोप्यानुगतमधिष्ठानमप्येकस्याऽऽरोपितस्यासाधारणम् । न चाऽऽरोपितमित्येतावता ततोऽन्यस्य तत्त्व भवति । स्वीकृत च त्वयाऽपि सर्पस्य रज्जुव्यतिरेकेणासत्त्वेन ततोऽन्यत्वाभावेऽपि रज्जो. सर्पव्यतिरेकेण सत्त्वेन ततोऽन्यत्वम् । किंच रज्ज्वामय सर्प इति धीरानन्दे ब्रह्मधीरिव सर्पे सर्पधीरिव च प्रमा स्यात् । तत्तत्त्व तद्धीत्वात् । रज्जुज्ञानेन सर्पभ्रमनिवृत्तिस्त्वधिष्ठानतत्त्वज्ञानस्य तदज्ञाननिमित्तकभ्रमविरोधित्वात् । न च घटादेर्मृदादावारोपितत्वात्तद्दृष्टान्तो युक्त इति वाच्यम् । मृत्तत्त्वे ज्ञातेऽपि घटाद्यनिवृत्ते यद्यपि तार्किकमत इव घटादिकं मृदारब्ध द्रव्यान्तर नास्ति तथाऽपि कारकव्यापारसाध्यो जलाहरणादिसमर्थो व्यावहारिको मृदादितुल्योऽवस्थाविशेषरूपो घटादिशब्दार्थस्त्वन्मतेऽप्यस्ति । तत्त्वतस्तु न मृदन्यास्ति । किंच—

> यदि मृ मात्रविज्ञानाद्विज्ञात स्याद्घटादिकम् ।
> मृत्त्व निश्चित्य न पुनः संशयः स्याद्घटादिके ॥

एतेन यदुक्त भामत्याम्—मृज्ज्ञानेन घटादयस्तत्त्वतो ज्ञाता भवन्ति । मृदेव हि घटादीनां तत्त्वमिति तन्निरस्तम् । मृत्त्वज्ञानेऽपि संस्थानविशेषरूपघटत्वाज्ञानेन घटस्तत्त्वतो न ज्ञात इति व्यवहारात् । घटे शरावत्वाद्यारोपनिवृत्तश्चेति दूषणमुक्तम् । तदपि मन्दम् । ब्रह्मविज्ञानेन सर्वं तत्त्वतो विज्ञात भवतीत्यत्र ब्रह्मविज्ञानेनेत्यभेदे तृतीया । अभेदस्य च विज्ञातमित्यत्र विज्ञानेऽन्वयः । तथा च ब्रह्मविज्ञानाभिन्नं यत्तत्त्वतो ज्ञान तद्विषयस्वीयतत्त्वज्ञानाभिन्नज्ञानविषयकब्रह्मक सर्वमिति पर्यवसितार्थे न स्वस्य स्वहेतुत्वापत्तिरूपदूषणावकाशः । 'येनाश्रुतं श्रुत भवति'

---

१ क °श्रुतौ श्रु° । २ क °रूपमसाधारणध° । ३ क °यत्वे चाऽऽन° । ४ क °न्यत्वात् । किं° । ५ क °म् । किंच यदि रज्जु सारस्य तत्त्व तर्हि रज्जुज्ञ सर्पज्ञ इत्युच्येत । किंचैव र° । ६ क °तुल्याव° । ७ क °पि तत्सस्या° ।

इत्यादावप्यश्रुतं वियदादिकं येन तत्त्वतः श्रुतं भवति यदभि-न्नश्रुतात्मकस्वीयतात्त्विकस्वरूपकं भवतीति रीत्या बाधायां सामानाधिकरण्येन पर्यवसितान्वयेन न श्रुतादिपदायोगाऽपीति।

यदपि—विवर्तवादे मृत्पिण्डमृन्मयादिदृष्टान्तानुपपत्तिरिति च निरुक्तायां दूषणमुक्तम्। तदपि श्रीमद्भाष्यकारहृदयानवबोधनिबन्धनम्। तथा हि—वाचाऽऽरम्भणशब्दव्याख्यानभाष्यस्यायमभिप्राय—'येनाश्रुतं श्रुतम्' इति बाधायां सामानाधिकरण्यम्। अश्रुतं वियदादिकं सर्वं तत्त्वतो यदभिन्नश्रुतब्रह्मव्यतिरिक्तस्वीयतात्त्विकस्वरूपशून्यमित्यर्थः तथा चैकं ब्रह्म सर्वस्याधिष्ठानमित्यर्थं प्रतिज्ञातः। तत्र मृत्पिण्डव्यतिरेकेण तत्त्वतस्तद्विकारो यथा नास्तीत्यादिदृष्टान्तः 'यथा सोम्यैकेन' इत्यादिना प्रतिपाद्यते। मृत्पिण्डपदं च मुख्यार्थकैकपदयोगाद्भूमिरूपपिण्डार्थकम्। पिण्डपदं च स्थौल्यविशेषबोधकं मृन्मयमात्रोपादानतायोग्यतालाभाय। मृन्मयपदं च भूमिविकारमात्रार्थकम्। तथा च भूमिरूपविकारः सर्वोऽपि यथा भूमिं विना तत्त्वतो नास्तीत्यर्थः। भूमिविकारत्वं च साक्षादेव वृक्षादावस्तीति भूमेर्विभक्तपिण्डस्य नानाविकारानुपादानत्वेऽपि न क्षतिः। यद्यपि भूमिर्नाधिष्ठानं तथाऽप्यधिष्ठानतावच्छेदकशुक्त्यादिव्यतिरेकेण तत्त्वतो रूप्यादि नास्तीति व्यवहारवद्भूमिविकारादिस्वरूपविचारदशायामाधारतावच्छेदकभूम्यादिव्यतिरेकेण तत्त्वतस्तद्विकारो नास्तीति व्यवहारानुरोधात्तथोक्तम्। एवं च सर्वं मृन्मयमेकमृत्पिण्डात्मकनिष्ठानस्वीयतात्त्विकस्वरूपकमित्यपि बाधायां सामानाधिकरण्यम्। तत्र हेतुः 'मृत्तिकेत्येव सत्यम्' इति। 'सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थितो' इत्युक्तेः। मृत्तिका भूमिरिति गृह्यमाणं यत्तदवच्छिन्नमद्रूपं ब्रह्म तदेव सत्यम्। मृत्तिकास्वरूपस्य सत्यत्वाभावात्। तदवच्छिन्नसद्रूपस्य दृष्टान्तत्वधीदशायां सदा विवर्त्याज्ञानाद्भूमित्वेन ज्ञायमानत्वेन तद्रूपलाभार्थमेव 'मृत्तिकेत्येव सत्यम्' इति इत्युक्तेः। अन्यथा तद्वैयर्थ्यापत्तेः। एतेन शब्दप्रकरणे व्याकरणादौ प्रकरणमिदं शब्दपरत्वं

च प्रकृतेऽनुपयोगात् 'मृत्तिकेत्येव' इत्यत्रेतिशब्दवैयर्थ्यमेव त्वन्मत इति परोक्तदूषणमनवकाशमेव। आद्यर्थको वा प्रकृत इतिशब्दः। 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरकोशात्। तथा च विकारस्वरूपस्य विचारदशायां तत्स्वरूपमिव भूमिस्वरूपस्य विचारदशायां साऽपि मिथ्यैव। तत्कारणभूतापञ्चीकृतभूतान्येव सत्यानि। तेषामपि स्वरूपविचारदशायां तान्यपि मिथ्या। तत्कारणं ब्रह्मैव सत्यमित्याद्यर्थलाभः। एवमेवोत्तरेष्वपि दृष्टान्तेषु योजनीयम्। मृत्तिकेत्येव सत्यमित्यत्र हेतुर्वाचाऽऽरम्भणं विकारो नामधेयमित्यादि। तच्च व्याख्यातं प्राक्। अस्मिन्नेवार्थे—

> को भवानिति निर्देशो वाचाऽऽरम्भो ह्यनर्थकः।
> शिबिकादारुसंघातो रचनास्थि(स्थ)ति संस्थितः॥
> अन्विष्यतां नृपश्रेष्ठ तद्भेदं शिबिका त्वया।
> एवं छत्रशलाकानां पृथग्भावो विमृश्यताम्॥
> क्व यातं छत्रमित्येष न्यायस्त्वयि तथा मयि।
> वस्तु राजेति यल्लोके यच्च राजभटात्मकम्॥
> तथाऽन्यच्च नृपेत्थं तन्न सत्सङ्कल्पनामयम्।
> एवमेव(क)मिदं विश्व(ब्रह्म) न भेदि सकलं जगत्॥
> वासुदेवाभिधानस्य स्वरूपं परमात्मनः॥

इत्यादिविष्णुपुराणवाक्यसहस्रैरुपबृंहणरूपैरनिर्वचनीयापरपर्याये प्रपञ्चमिथ्यात्वे निर्णीततात्पर्यकं सद्विद्यागतम् 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणी

---

त्वेन भवतीत्यनेन सूत्रेण विधीयते। यदि चात्र लौकिकविकल्पस्य विधिमुखेन प्रवृत्तिः स्यात्तर्हि पित्त्वेव प्रत्ययेषु सम्प्रसारणस्य विकल्पः स्यात्। तत्र हि सम्प्रसारणस्याप्राप्तेः। यदि च निषेधमुखेन प्रवृत्तिः स्यात्तर्हि कित्स्वेव विकल्पः स्यात्। तत्र 'वचिस्वपि०' इत्यनेन सम्प्रसारणस्य प्राप्तेः। उभयथा प्रवृत्तिस्तु वैरूप्याद्वाक्यभेदापत्तेश्चाशक्या। शास्त्रीयसंज्ञाकरणे तु श्रुतकृपानुरोधात्पूर्वं कित्सु निषेधः। ततः किदकिद्रूपेषु सर्वेषु णिति परत ऐकरूप्यं प्रापितेषु सत्सु 'भवति' इत्येकरूपेण विधिमुखेनैव सर्वत्र विकल्पः सिध्यतीति।

त्यैव सत्यम् ' इत्यादिश्रुतिवाक्यं प्रमाणम् । तत्र हि त्रिवृत्कृदग्न्यादिस्वरूपस्यात्रिवृत्कृततेजोबन्नस्वरूपव्यतिरेकेण विचारासहत्वमाग्नित्वमित्यन्तेन हेतूकृत्य वाचाऽऽरम्भणमित्यादिना त्रि(वृ)त्कृतमात्र मिथ्येति प्रतिपादितम् । परोक्तेऽर्थे तु न किंचित्प्रमाणमस्वारस्य चोक्तमित्यलमधिकेन ।

किंचासाधारणस्वरूप धर्मो वा तत्त्वमित्यादि दूषणमपि मन्दम् । अनारोपितस्यैव तत्त्वरूपत्वेनोक्तदूषणानवकाशात् । अत एव ' तत्त्वज्ञानान्निःश्रेयसाधिगम ' ( गौ० सू० १ । १ । १ ) इति भाष्ये तत्त्वमनारोपितस्वरूपमित्युदयनाचार्यैरुक्तम् । एवं च व्यवहारदशायां शुक्त्यादावनारोपितत्वभ्रमेण रूप्यादेतादात्म्योपलक्षितत्वेन च रूप्यादेः स्वरूपतत्त्वं शुक्तिरिति लोके व्यवहारः शुक्त्यादेर्धर्मतत्त्वं शुक्तित्वादिरिति च व्यवहारः । विवेकदशायां तु ब्रह्मैवानारोपितत्वेन ज्ञायत इति वस्तुगत्या तदेव सर्वेषां स्वरूपतत्त्वम् । एतदभिप्रायेणैव = ब्रह्म तत्त्व तपो वेद.' इत्यमरेणोक्तम् । 'तत्त्वं परमात्मनि वाद्यभेदे स्वरूपे च' इति हैमनश्च । प्रपञ्चतत्त्ववादिनस्तव तत्त्ववादित्वं नासाधारणधर्मवादित्वम् । किंत्वनारोपितप्रपञ्चवादित्वमेवेति तव मतेऽप्यनारोपितस्वरूपस्यैव तत्त्वरूपतायाः संमतत्वेनासाधारणस्वरूप धर्मो वा तत्त्वमित्युक्तिः स्वमतविस्मरणनिबन्धनैव । किंच तस्य भावस्तत्त्वमिति व्युत्पत्त्या तत्त्वशब्दात्र साधारणधर्मोऽसाधारणधर्मान्तरं वा प्रतीयते । घटत्वमित्यादिशब्दाद्घटपदजन्यबोधप्रकारीभूतजातिसमनियतधर्मान्तराप्रतीतेः । रूढिश्च पारमार्थिकवस्तुन्येव सर्वसमता । न त्वसाधारण्यमपि तत्रान्तर्भावनीयम् । एवं चानारोपितवदीयस्वरूपमेव तदीय स्वरूपतत्त्वमिति विवक्षितम् । तदीयत्वं च तन्निष्ठतादात्म्यप्रतियोगित्वमित्युक्तं प्राक् । ब्रह्मानन्दयोः काल्पनिकभेदसत्त्वेन तादात्म्यसंभवादानन्दस्य ब्रह्मतत्त्वरूपतोपपत्तिः । रज्जुत्वं च रज्जोर्न स्वरूपतत्त्वम्, किंतु धर्मतत्त्वमेवेति न ' तथा सत्यानन्दो ब्रह्मणः, रज्जुत्वं च रज्जोस्तत्त्वं न स्यात् ' इति दूष-

---

= ब्रह्म तत्त्वमिति । 'वेदस्तत्त्वं तपो ब्रह्म' इतीदानींतनकोशपुस्तकपाठः ।

णावकाशः । सर्पमिथ्यात्वयुक्तरीत्या कास्पनिकाभेदमादाय तदीयस्वरूपतत्त्वरूपतापर्यवसितश्च । रज्ज्वामय सर्पबुद्धिश्च ( सर्प इति बुद्धिश्च ) न प्रमा । अबाधितार्थविषयकत्वाभावात् । व्यवहारकालीनबाधगोचरार्थविषयकत्वाच्च न व्यावहारिकप्रमात्वमपि । तदीयतत्त्वाविशेषप्रकारकज्ञानत्वादिकं तत्त्वमात्वमिति त्वया वक्तुमशक्यम् । तथा सति घटे द्रव्यत्वमित्याधेयतासंसर्गकघटादिप्रकारकज्ञानानां तव मते घटाद्यंशे प्रमात्वाभावप्रसङ्गात् । तदीयासाधारणस्वरूपादेरेव तत्तत्स्वरूपतायास्त्वयोक्तत्वात् । द्रव्यत्वादेर्घटाद्यसाधारणस्वरूपत्वाभावात् । अधिष्ठानीभूततत्तत्त्वतज्ज्ञानस्यैव भ्रमनिवर्तकत्वात् । मृत्त्वे ज्ञातेऽपि घटाद्यनिवृत्तिरुपपन्ना । उपपन्ना च मृदित्यादिज्ञानादयं घटो न वेति संशयानिवृत्तिरपि । समानविषयकनिश्चयस्यैव संशयविरोधित्वात् । मृदादिविज्ञानेन घटादीनां विज्ञाततदीयतत्त्वकत्वं गुडजिह्विकान्यायादिनोपपन्नमिति प्रतिपादितं प्रागिति ' मृज्ज्ञानेन घटादयस्तत्त्वतो ज्ञाता भवन्ति मृदेव हि घटादीनां तत्त्वम् ' इति भामत्युक्तमपि सम्यगेवेति ' एतेन ' इत्यादिनोक्तं दूषणमपि निरस्तम् ।

यदपि चन्द्रिकायाम्—प्रकृत्यधिकरणादृश्यत्वाधिकरणाभ्यामस्य पुनरुक्तिश्चाद्वैतमते । अत्रेवोभयत्रापि ब्रह्मविवर्ततायाः एवोक्तत्वादिति दूषणमुक्तम् । तदत्यन्तं मन्दम् । ब्रह्मणो निमित्तत्वे सत्युपादानताया व्यवस्थापनमेव प्रकृत्यधिकरणप्रमेयम् । तादृशोपादानतास्वीकारे भोक्तृभोग्यविभागलोपापत्तिरिति पूर्वपक्षे परिणामवादाभिप्रायेण लोकवदिति स्वपक्षानुरोधाद्धारमुक्त्वा परमार्थतस्तादृशविभाग एव नास्तीति समाधानायात्र विवर्तोक्तावपि तस्यैतदधिकरणप्रमेयत्वाभावात् । अदृश्यत्वाधिकरणे भूतयोनिवाक्यस्य प्रधानपरतां निरस्य ब्रह्मपरत्वव्यवस्थापनमेव प्रमेयम् । तदुपपादनाय तत्र विवर्तोक्तावपि तस्यैतदधिकरणप्रमेयत्वाभावात् ।

यदपि चन्द्रिकायाम् —किंच त्वन्मते पूर्वसूत्रे भेदोक्तेरत्राभेदोक्तेर्विरोधः । न च प्रमाणयोः सूत्रयोर्विरोधे एकस्यानुत-

विषयत्वेन परिहर्तुं युक्त इति दूषणमुक्तम् । तदप्युक्तरीत्या तदनन्यत्वमित्यनेन तादात्म्यघटितमि॰यात्वस्यैवोक्तेरभेदानुक्तेरसत्कमेव । प्रमाणयोरपि सूत्रयो प्रमाणमूर्धन्यसा॰ान्यविशेषशास्त्रयोरिव भिन्नविषयत्वस्य युक्तत्वात । पूर्वसूत्रे लोकवदित्युक्ते लोके च विकारानृतत्वप्रसिद्ध्यभावात्मत्य भोक्तृभोग्यविभागमाश्रित्यैव समाधानमुक्तमिति भ्रमवारणायैतत्सूत्रारम्भ इति 'अभ्युपगम्य चेम व्यावहारिक भोक्तृभोग्यविभागम्' इति भाष्याभिप्रायस्यास्मद्भाष्यव्याख्यातृभिर[भि]हितत्वाच्च ।

यदपि चन्द्रिकायाम्-किंच घटादेर्मृदनन्यत्वप्रतिपादक आरम्भणशब्दो जगतो ब्रह्मानन्यत्वरूो त्वदीये सा ये × न साक्षाद्धेतुः, + मम तु हेतुरिति दूषणम् । तदपि मन्दम् । तत्र

---

× न साक्षाद्धेतुरिति । भ मत्या हि तदनन्यत्व एव वैदिकमृ मयदृष्टान्त इत्युक्त्वा मृन्मययोर्भेदा॰यज्ञा॰ने॰ान्यज्ञानायोगात्कथ मृदादिदृष्टान्त इत्यवतार्य 'वाचाऽऽरम्भणम्' इति श्रुतौ मृदन्यस्य विकारजातस्यानृतत्वोक्त्या घटशरावोदञ्चनादीना मृदेव तत्त्वमिति मृदि ज्ञाताया तेषा तत्त्व ज्ञान भवतीत्यारम्भणाऽऽरम्भणशब्दस्य दृष्टान्तोपपादकत्वोक्त्या तद्द्वारा तदनन्यत्वोपपादकत्वावगमा॰िति भाव ।

+ मम तु हेतुरिति । अयमाशय —पूर्वस्मिन्नधिकरणे विष्णुर्जगत्सृष्ट्यादिकर्तेत्युक्तम् । तस्य च स्वत त्रसाधनानपेक्षत्वे युक्तिविरो॰प्राप्तौ न सर्वगुणत्व सिध्यतीत्यसौ निराकरणीय एवेति ज॰त्सृष्ट्यादि॰ ॰िषयोऽस्मिन्नधिकरणे । तत्र सशय — किं स्वतन्त्रसाधनसापेक्ष न वेति । कुत पुनरय सशय । लोकदृष्टिरलौकिकत्वाभ्यामिति गृहाण । किम ॰युष्मताऽभिप्रेयते । स्वत त्रसाध॰सापेक्षमिति । कु॰ इति चे॰ । 'विप्रतिपन्ना जगत्सृष्टि पक्षीकृत्य कर्तृव्यतिरिक्त॰॰॰॰॰॰॰सापेक्षत्व ॰ ॰ते सृष्टि॰॰॰टा॰ि मिष्टिवत्' इत्यनुमानेन त॰॰ सिद्ध ॰॰ । ॰॰॰सृष्टौ ॰ ॰ ॰ ॰॰ खलु स्वत त्रसाधनान्यपेक्ष्यते । तानि विना सृष्ट्यनुपपत्ते । तस्माद्रू॰ ॰॰ ॰ ॰ ॰नसापेक्षमेव सृष्ट्यादिकर्तेति न तस्य अगज॰ मादिकारणत्वेन सर्वगुणपूर्णत्वसिद्धिरिति प्राप्ते सिद्धा । —य॰पि ॰॰ सृष्टि स्वत त्रबहुसाधनसापेक्षा दृष्टा तथाऽपि नैतद्दृष्ट॰॰॰॰ ॰॰॰ जगत्सृष्टि॰॰ ॰॰॰॰ । ॰तु स्वतन्त्रसाधनस्य तद्न॰॰॰ बोध्यत । एव च तस्य स्वरूप सामर्थ्या॰ त सृष्टि । किं तत्र प्रमाण॰

मतेऽपि केवलारम्भणशब्दस्य हेतूपपादकत्वाभावेन ' किंस्विदासीदधिष्ठानमारम्भण कतमत्स्वित्कथाऽऽसीत् ' इति ह्याक्षेपः ( आन० ब्र० सू० भा० )। ' येनाधिष्ठानादिना भूमिं द्यां च जनयञ्जनयिता विशेषेण बभूवं तदधिष्ठानं किमासीत् । आरभ्यतेऽनेनेत्यारम्भण साधन वा किमासीत् । कथं वाऽऽसीत् । न किंचित्कथमपीति साधनाद्याक्षेपः क्रियते । आक्षेपस्य विपर्ययपर्यवसानात् । किंशब्दस्य प्रश्नाक्षेपयोः समत्वात्प्रश्नार्थे किं न स्यादित्यत आह—अधिष्ठानाद्यनुक्तेरिति। प्रश्नश्चेत्परिहारो वक्तव्यः। किंस्विद्धिमस्य भेषजमिति प्रश्नेऽग्निर्हिमस्य भेषजमितिवत् । अत्र परिहारायाधिष्ठानाद्यनुक्तेर्नायं प्रश्नः । किंत्वाक्षेप एव ' इति त्वदीयतत्त्वप्रकाशिकादिग्रन्थपर्यालोचनया स्वतन्त्रसाधनस्य तदनन्यत्वरूपत्वदभिमतसाध्ये केवलारम्भणशब्दस्य हेतूपपादकत्वाभावेन तद्घटितवाक्यसंदर्भस्यैव हेतुत्वस्याभिमततया मन्मतेऽपि तदनन्यत्वमित्यत्र 'तयोः कार्यकारणयोरनन्यत्व तादात्म्यम् ' ' तस्मात्कारणात्कार्यस्य तत्त्वतोऽनन्यत्वम् ' इत्यर्थद्वयरूपनिरुक्तविवक्षितसाध्य आरम्भणशब्दघटितसंदर्भस्य सदृष्टान्तस्य ' एव सौम्य स आदेशो भवति' इत्युत्तर दार्ष्टान्तिकवाक्यरूपस्य साक्षादेव हेतूपपादकत्वात् ।

---

मिति चेत् । ' किंस्विदासीदधिष्ठानमारम्भण कतमत्स्वित्कथाऽऽसीत् ' इति श्रुतावारम्भणादीनामाक्षेप एवेति बोध्यम् । आक्षेपस्य हि विपर्यय एव पर्यवसानात् । पूर्वोक्तमनुमान तु श्रुतिविरोधादप्रमाणमेव । तथा चोच्यते—स्वतन्त्रसाधनापेक्षा लोकेऽशक्तिनिबन्धना । ईश्वरस्य स्वसामर्थ्ये न कुत्रापीश्वरत्वत ॥१॥ द्रव्यस्य कर्मकालादे श्रूयते चेशतन्त्रता । नानाशिल्पेषु निपुण साधन स्वयमेव हि ॥२॥ सपाद्य तेन धना कार्याणि कुर्वल्लोकेऽपि दृश्यते । स्वाधीनसाधनादान त्वीशस्य न विरुध्यते ॥ ३ ॥ प्रमितत्वाच्च लीलात्वादीशत्वाद्यातुकत्वत । लीलया दण्डमालम्ब्य गच्छान्कि पङ्गुता व्रजेत् ॥ ४ ॥ इति । एव चाऽऽरम्भणशब्दस्य साक्षाद्धेतुत्व सिध्यति । न तु दृष्टान्तद्वारेति भाव ।

---

१ क 'व । येन च महिम्ना विश्वनश्चक्षुराद्यणोत्तद' । २ क वा कनमदासी' । ३ क 'धकप चाऽऽसी । ४ क 'प्रश्नोऽय किं' ।

यदपि—वाचारम्भणशब्दस्य समासतया 'वाचारम्भणशब्दादिभ्यः' इत्येव सूत्रणीयम् । विशिष्टपदग्रहणौचित्यात् । पदैकदेशग्रहणं त्वनौचितमिति चन्द्रिकोक्तं दूषणम् । तदपि न साधु । 'वाचैव केवलमस्तीत्यारभ्यते घटः शराव उदञ्चनं च' इति भाष्ये व्यस्तस्यैव वाचेत्यस्योपादानात् । न चैव सति कृद्योगे षष्ठीप्रसक्तया वाचेति तृतीयानुपपत्तिरिति वाच्यम् । वाचेत्यत्र करणतृतीयोपगमात् । वाचेति तृतीया षष्ठ्यर्थे इति छान्दोग्यभाष्यविवरणे भिन्नपदतायाः उक्तत्वाच्च । 'वागारम्भणमिति वागालम्बनमित्येतत्' इति छान्दोग्यभाष्यं तु फलितार्थकथनपरम् । सदर्भविशेषात्मकनामविशेषस्फुरणाय समासैकदेशोपादानेऽपि बाधकाभावात् । आरम्भणशब्दमात्रस्य प्रतद्दूषेऽपि हेतूपपादकत्वाभावस्योक्तत्वात् ।

यदपि चन्द्रिकायाम्—त्वन्मते सौत्रादिशब्दार्थस्य 'इदं सर्वं यदयमात्मा' इत्यादेरपि शब्दरूपत्वात्सूत्रे 'वाचाऽऽरम्भणादिशब्देभ्यः' इत्येव विन्यासः स्यादिति दूषणम् । तदपि मन्दम् । आदिशब्दाद्युक्तिभिश्चेति त्वदीयभाष्येऽपि युक्तीनामिव 'यथा घटकरकाद्याकाशानां महाकाशानन्यत्वं यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वम् । दृष्टनष्टस्वरूपत्वात्स्वरूपेणानुपाख्यत्वात् । एवमस्य भोक्तृभोग्यादिप्रपञ्चस्य ब्रह्मव्यतिरेकेणाभावः' इत्यस्मदीयभाष्येण दृश्यत्वपरिच्छिन्नत्वादिरूपयुक्तीनामप्यादिशब्दार्थताप्रदर्शनायोपन्यस्तत्वेन शब्दमात्रस्यैवाऽऽदिशब्दार्थत्वोक्तेर्भ्रान्तिमूलकत्वात् । 'दृष्टनष्टस्वरूपत्वात्' इत्यनेन श्रुतिसिद्धे प्रपञ्चमिथ्यात्वेऽनुमानमपि दर्शितम् । 'विमतिपन्नं वियदादिकं मिथ्या, दृश्यत्वाज्ञानप्रतियोगित्वाच्च' इत्यनुमानद्वयमत्र विवक्षितमित्यस्मदीयैस्तद्भाष्यव्याख्यानाच्च ॥१४॥

## भावे चोपलब्धेः ॥ १५ ॥

अत्र—सूत्रात्प्राक् 'कारणस्य' इति, उपलब्धेरित्यस्य पूर्वम् 'कार्यस्य' इति चाध्याहर्तव्यम् । भाव इत्यस्य भाव एवेत्यर्थः । चशब्देन कारणोपलब्धावेवोपलभ्यमानत्वं समुच्चीयते । एवं च कारणसत्त्व एव सत्त्वस्य कारणोपलब्धावेवोप-

लभ्यमानत्वसमुच्चितस्य कारणानन्यत्वरूपसाध्यहेतुतालाभः। एतादृशार्थद्वयलाभायैव 'भावे च सत्त्वात्' इत्यनुक्त्वा 'भावे चोपलब्धे', इत्युक्तम्। तत्र च प्रभायामुपलभ्यमानायामेवोपलभ्यघटीयरूपविशेषादेः प्रभान्यत्वाद्व्यभिचारवारणाय कण्ठोक्तस्य वह्निसत्त्व एव सतो धूमविशेषस्य वह्निभिन्नत्वाद्व्यभिचारवारणाय च समुच्चितविशेषणस्योपादानम्। 'कारणस्य भावः सत्ता चोपलम्भश्च' इति टीकायाम् 'इति द्वय हेतुविशेषणकोटौ विवक्षितम्' इति शेषः। तथा च टीकाग्रन्थस्य फलितार्थकथनपरत्वात्। "भावशब्दोपलब्धिशब्दयोरावृत्तिर्विभक्तिविपरिणामः कारणस्य कार्यस्य चेति पदद्वयाध्याहारश्चेत्यनेकदोषापाताच्च। मम तु 'उपलब्धेः' इत्युत्तरम् 'प्रसङ्गात्' इति हेतुमात्र कल्प्यम्" इति चन्द्रिकोक्तदूषणानवकाशः। 'कारणस्य कार्यस्य' इति च पूरण च पराभितम् 'प्रमाणान्यस्य स्वतन्त्रसाधनस्य' इति पूरणमपेक्ष्य लघु। उपलब्धेरितरस्योपलब्धिप्रसङ्गादित्यर्थकल्पना पर परस्यातिरिच्यते। स्वतन्त्रसाधने प्रमाणैरनुपलभ्यमानतायाः स्वत एव सिद्धत्वा त्तदभिधानानर्थक्यादुपलब्धेरित्यस्योपलब्धिप्रसङ्गादित्यर्थकताया आवश्यकत्वात्। तथा हि परकीयव्याख्यानम्—यदि भगवत्सृष्टौ तदतिरिक्तं स्वतन्त्रसाधनमस्ति तर्हि वेदादिप्रमाणैरुपलभ्येत। न चोपलभ्यते। अतो नास्तीत्यर्थ इति।

यत्तु—कारणसत्त्व एव सत्त्वरूपहेतुत्वस्यानृतत्वरूपसाध्यविरोधितेति। तन्न। हेतुविशेषणप्रविष्टसत्ताया विद्यमानतारूपत्वेनानिर्वाच्यत्वरूपानृतत्वादिविरोधित्वात्। अत्र सूत्रे तादात्म्यरूपानन्यत्वस्यैव साध्यतया विवक्षितत्वाच्च। उक्त चाद्वैतानन्दश्रीचरणैः—अनेन सूत्रेणोपादानोपादेयभावनियामकतया तादात्म्याख्यस्वरूपसंबन्धविशेष उपपाद्यत इति।

यदपि—शब्दैकसमधिगम्यनिर्विशेषचिन्मात्ररूपस्य शुद्धस्य सर्वज्ञत्वादिविशिष्टस्य सगुणस्य वाऽनुपलम्भ एव। प्रपञ्चोपलम्भेन सौत्रो हेतुरसिद्ध इति। तदपि न। तदुपलब्धीत्यनेन तत्तदीयोपहितरूपान्यतरविषयकोपलब्धेरेव विवक्षणीयत्वात्। 'भावा-

वोपलब्धेः ' इति पाठे भावस्तादात्म्यम् । ल्यब्लोपे पञ्चमी । भाव विषयीकृत्योपलब्धेश्चेत्यर्थः । चशब्देन पूर्वोक्तानुमाना दिसमुच्चयः । ' प्रत्यक्षोपलब्धिभावाच्च ' इत्यादिभाष्यादिकं च फलितार्थकथनपरम् । ' भवति हि प्रत्यक्षोपलब्धि । कार्य-कारणयोरनन्यत्वे ' इत्यग्रिमभाष्ये ' अनन्यत्वे ' इति सप्तमी विषयत्वार्थिका । तच्च भाष्य भावादिर्थस्य विवरणरूपमिति बोध्यम् । तेनास्मिन्पक्षे + भावशब्दो व्यर्थ इति शङ्का * निरस्ता । यत्त्वस्मिन्पक्षे कार्यकारणयोरभेदस्यैव सिद्ध्या कार्यस्य नानृतत्वसिद्धिरिति तत्प्रागेव निरस्तप्रायम् ॥ १५ ॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

पूर्वसूत्रे प्रत्यक्षानुमानाभ्यां पटादीनां तन्त्वाद्यभिन्नत्वप्रसाध-नेन तद्दृष्टान्तेनोपादेयत्वहेतुना वियदादेः प्रपञ्चस्य ब्रह्मानन्य-त्वम् । सत्त्वाच्चावरस्य कारणात्मनैव कारणे सत्त्वमिति स्वीय-सूक्ष्मरूपात्मना परमकारणब्रह्मतादात्म्यमित्यर्थः । कार्यावस्था-पन्नवियदादिसूक्ष्मरूपस्य सत्तादात्म्यश्रवणादिति निष्कर्षः । कार्यावस्थापन्नवियदादितादात्म्यविशिष्टस्य सतोऽग्रकालसत्त्वा-नुपपत्त्येदंशब्दोपस्थाप्यतावच्छेदककार्यावस्थाया उपलक्षणतयैव वाक्यार्थानुप्रवेशस्याऽऽवश्यकत्वात् । न च कार्यावस्थापन्नस्यैव वियदादेरुपलक्षणत्वसंभवात्कार्यावस्थामात्रस्योपलक्षणत्वोक्तिर युक्तेति वाच्यम् । विशिष्टार्थपरत्वस्यौत्सर्गिकतया विशेषणांशे तत्त्यागमात्रेणापवादकबाधोपशान्त्युपयुक्तौ विशेष्यांशेऽपि विना निमित्तं तत्त्यागस्यानुचितत्वादिति भावः । उक्तश्रुत्यर्थस्य वक्ष्यमाणाया जगदुपादानताया उपयोगिता गीतायेत्याह—यच्च यदात्मनेति । एवं च श्रुताविदंशब्दोपन्यासनस्य प्रयोजनमुपद-र्शितं भवति । नन्वेवमपि कार्यावस्थापन्नस्य जात सत्तादा-

---

+ भावशब्दो व्यर्थ इति । उपलब्धेरित्यस्य पञ्चम्यन्तत्वस्वीकारादपि विवक्षितार्थसिद्धेस्तस्य वैयर्थ्यादिति भाव ।

* निरस्तेति । पञ्चम्यन्तपक्षे तादात्म्यार्थकं भाव स्वीकृत्य तत्सार्थक्या-दिति भावः ।

त्म्यमसिद्धमित्याशङ्क्याऽऽह—तस्मात्प्रागुत्पत्तेरिति । तथा च कार्यावस्थापन्नं वियदादि सत्तादात्म्यवत्, स्वसमानकालीनसत्तादात्म्यवत्स्वीयसूक्ष्मरूपकत्वात् । यत्स्वसमानकालीनसत्तादात्म्यवत्सूक्ष्मरूपकं तत्तादात्म्यवत् । यथा घटसमानकालीनमृत्सामान्याभिन्नस्वीयसूक्ष्मरूपात्मको घटो मृत्सामान्यतादात्म्यवानिति सामान्यमुखव्याप्त्युपष्टम्भ्यानुमानेन कार्यमात्रे परमकारणसत्तादात्म्यसिद्धिरिति भावः ।

प्रकारान्तरेण सूत्रं व्याख्यातुमुपक्रमते—यथा चेति । त्रिषु कालेषु सत्त्वं न व्यभिचरतीति कस्यामपि सदविषयप्रतीतौ न विषय इत्यर्थः । एवमग्रेऽपि । तथा च वियदादिकं सत्तादात्म्यवत्, सद्विषयकप्रतीत्याविषयत्वात् । यो यद्विषयकप्रतीत्याविषयः स तत्तादात्म्यवान्, यथा मत्प्रतिपन्न इत्यनुमानेन जगद्ब्रह्मणस्तादात्म्यसिद्धिरिति भावः । न च 'भावे चोपलब्धेः' इत्यनेनास्य गतार्थता शङ्क्या । तत्र तन्तुपटादीनां तादात्म्यं प्रसाध्य तद्दृष्टान्तेन ब्रह्मणोऽपि जगत्तादात्म्यमुपादानत्वेन प्रसाधितम् । अत्र च साक्षादेवेति विशेषात् । न चोपादानत्वस्य तादात्म्यघटिततया साध्याविशिष्टता । तस्प्रागभावस्वरूपोपादानताया एव तत्र हेतुत्वेन विवक्षणात् न चैवमपि तुल्यन्यायतया तेन गतार्थता । पटादौ तन्त्वाद्यविषयकप्रतीत्याविषयत्वस्यैव जगति ब्रह्माविषयकप्रतीत्यविषयत्वस्यासिद्धेः । अत एव च सन्पटः सन्नित्याद्यनुभवप्रतीतावनुगतरूपस्यैव सतो विषयत्वे लाघवमाश्रित्य इत्य सप्रतीयत्वात् । तादृशतद्धेव न नापामाणिकम् । 'सदेव' इत्यादिश्रुत्यनुगृहीतत्वात् । पारमार्थिकत्वेन स्वसजातीयद्वितीयत्वे हि ब्रह्मण एकत्वावधारणानुपपत्तेः स्फुटत्वात् । समभिव्याहृतविशेष्यतावच्छेदकरूपेण सजातीयान्तरव्यवच्छेदकत्वे संभवति योजनान्तरक्लेशस्यानुचितत्वात् । भवति च पारमार्थिकत्वमतिप्रसिद्धं सत्पदार्थतावच्छेदकमिति । सतो भावः सत्त्वमिति विवक्षितैकत्वसाधकविभक्त्यन्तेन समासाश्रयणादुक्तार्थसूचकत्वं सूत्रस्योपपद्यते । एवाद्यवर्धकस्फोरणानुरोधेन च 'सर्वं खल्विदं ब्रह्म'

इत्यादिवाक्यमनुदाहृत्योक्तवाक्योदाहरणम् । एतेन—अवर-कालीनस्य वियदादेः सत्त्वं त्वदभिमतानृतत्वविरुद्धमित्यवरस्य सत्त्वादित्यसगतम् । उत्पत्तेः प्रागित्यध्याहारगौरवं च द्वितीयमस्य तन्तुपटादिविषयः । तृतीयस्य तु ब्रह्मवियदादीती(ति)भिन्नविषयत्वेन चशब्दास्वारस्य च । 'तत्तेजोऽसृजत' इति वाक्यशेषेण 'सदेव' इत्यादिवाक्यस्य कारणपरत्वात्कार्यकारणभेदस्य चाबाध्यसिद्धेस्तेन कार्यसत्त्वासिद्धिश्चेति परास्तम् । सत्ता-दात्म्यकालसंबन्धादिलक्षणसत्त्वस्यासद्विलक्षणत्वादिनियततया-ऽनिर्वाच्यतायामनुगुणत्वेन तद्विरोधित्वायोगात् । अत्यन्तासत्त्वं तु नात्र प्रसाध्यते । कार्यस्य सत्तादात्म्यश्रवणादित्युक्ते वियदादेः कार्यावस्थापन्नस्योक्तवाक्यैरुक्ततादात्म्य प्रागुक्तरीत्या बोधयितुमशक्यमिति कथमेवमुक्तमिति शङ्काव्युदासाय प्रवृत्ते भाष्य उत्पत्तेः प्रागित्युक्तत्वेऽपि सौत्रवाक्यार्थेऽसदर्थानुप्रवेश-विरहान्नाध्याहारगौरवम् । द्वितीयसूत्रेत्यादिकं त्वाऽऽपाततः इति सुव्यक्तमेव ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

ननु क्वचिदसत्त्वमपीति । अथ भावः—'असदेवेदम्' इत्यत्र न समस्तं पदम् । 'असदासीत्' इत्युक्तौ व्याहत्यापत्तेः । असादिति पदद्वयम् । तथा च 'इदमात्मकं सत्त्वाऽऽसीत्' इत्यपि क्वचिच्छ्रूयते । यद्वा—इदं जगदग्रेऽसदवर्तमानमासीदित्यर्थः । तथा च श्रुतिद्वयस्यानतिनिर्णायि 'सदेव' इति वाक्ये 'इदमग्रे' इति समस्तं पदम् । इदमिति सद्विशेषणं वा । 'आत्मा वा इदम्' इति वाक्येऽपि 'अथ चासावेकश्च' इति कर्मधारयो वाच्यः । एवं च नानेन वाक्येन जगत्सत्तादात्म्यासिद्धिरिति ।

नन्विदमसंगतम् । 'तदसदेव सन्मनोऽकुरुत' इति वाक्यशेषात्पूर्ववाक्यस्य कारणपरत्वेन कार्यासत्त्वाप्रापकत्वात् । न च कार्यकारणयोरनन्यत्वाङ्गीकारेण कार्यासत्त्वाशङ्केति युक्तम् । कार्यसत्त्वस्यापि अनन्यत्वसिद्ध्यर्थकत्वेनानन्यत्वाङ्गी-

कारणासत्त्वशङ्कानुदयादिति चेत् । न । वाक्यशेषेण निर्णयस्य सिद्धान्तयुक्तितया तद्विरोधेन पूर्वपक्षानुत्थितत्वाभिधानस्य त्वद्विषयकमहामोहप्रसादैकफलत्वात् । 'तदसत्सृष्टं' प्राक्कालेऽवर्तमानं मन. सङ्कल्पाकुरुत ' इति योजनामाश्रित्य पूर्वपक्षप्रवृत्तिसंभवाच्च ॥ १७ ॥

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

यद्यप्यत्र शब्दान्तरस्य सदेवेत्यादेरेव भाष्य उदाहृतत्वात् 'सत्त्वाच्चावरस्य ' इत्यनेनास्य पौनरुक्त्यमिवाऽऽभाति तथाऽप्यव्यवहितपूर्वसूत्रे पूर्वपक्षिणा तस्यान्यथा व्याख्यातत्वात्तदुपेक्षायां तादृशवाक्यार्थेऽपि किंचिद्बाधकं नास्तीति भ्रमः स्यात्तद्वारणाय पुनरुक्तिः । तथा चोक्तरीत्याऽसद्वेत्यादिवाक्यतात्पर्ये वर्णिते नोक्त श्रुतिव्याख्यानमुचितम् । तथा सतीदमादिपदवैयर्थ्यापत्तेर्निरर्थकलक्षणादिस्वीकारापत्तेश्चेति पूर्वोक्तश्रुत्या तत्सिद्धिरनपवादेति फलिष्यति । अन्यथा युक्तिशब्देन पूर्वापरसर्वयुक्तीनामारम्भणशब्दादीत्यत्राऽऽदिशब्देन वा सर्वयुक्तिग्रहणसंभवादेतत्सूत्रसार्थक्यं तदाऽपि दुरुपपाद स्यादेवेति ॥ १८ ॥

## पटवच्च ॥ १९ ॥

## यथा च प्राणादि ॥ २० ॥

अत्र च 'कार्यं कारणाद्भिद्यते तस्मिन्नाश्रीयमानेऽपि सदिग्धत्वात्ततोऽधिकपरिमाणत्वान्मशकादिव शशकः' इत्यनुमाने व्यभिचारप्रदर्शनाय ऽऽद्यम् । तत्रैव विलक्षणकारित्वहेतोर्व्यभिचारप्रदर्शनाय द्वितीयमिति दृष्टान्तद्वयोपदर्शनफल संप्रदायसिद्धिरुक्तम् । दृष्टान्ते सर्वसाम्यानपेक्षणाच्च ' संवेष्टितपटप्राणदृष्टान्तौ न विवर्तवादिनामनुगुणौ, जगतो ब्रह्मणीव प्रसारणादेः पटादावनध्यस्तत्वात्संवेष्टितप्रसारितपटादाविव निरवयवे ब्रह्मणि संकोचविकासयोरसंभवाच्चेति दूषणमनवकाशम् ॥

मीमांसान्यायपश्चास्यरामचाचार्यसूरिणाम् ।
शिष्यस्य शांकरे पादभूषणे परदूषणे ॥
कृतिर्वितनुतां मोदमस्मिन्नयविवेचने ॥

श्रीमच्छंकररूपशंकरमहाचार्यैर्विचार्याऽऽहितं
यच्छारीरकभाष्यमार्यविनुतं दोषोज्झित तत्र यैः ।
दोषा ये प्रतिपादिताः परिहृता निःशेषतस्ते मया
तेषामेव च दूषिताः प्रतिपद दुर्योजनायुक्तिभिः ॥
शारीरकस्थप्रथमद्वितीयाध्यायाद्यपादद्वयभूषणावह ।
ग्रन्थोऽयमन्वर्थकनामधेयः समापितः शंकरपादभूषणः ॥
येषां शंकरसंज्ञपूर्वजवरैरोजःप्रसिद्धैः पुरा
लब्धा लोकमनोज्ञपन्तसचिवाभिख्या भृश श्रेयसी ।
नीरातीरसमीपभोगनगरं यद्वासभूः संततं
श्रीकृष्णार्चनतत्परा रघुवरोत्साहेऽपि दत्ताश्रयाः ॥
नानासाहेबनाम्ना ये प्रसिद्धास्तु तदाश्रयात् ।
सिद्धिं गतश्च ग्रन्थोऽयमङ्कितश्च शिलाक्षरैः ॥
तत्माड्विवाकश्च भिडेउपाह्वो मद्ग्रन्थसिद्धौ परमाश्रयो यः ।
गोपालसूनुः स च विष्णुनामा जीयाच्चिरं सेवजनप्रवीणः ॥

इत्यारम्भणाधिकरणं समाप्तम् ॥

---

समाप्तोऽय शांकरपादभूषणाभिधो ग्रन्थः ॥

# शांकरपादभूषणास्थश्रुत्यादिवचसामकारादिवर्णानुक्रमेण सूचीपत्रम् ।

ब

# अथ शांकरपादभूषणान्तर्गतानां ब्रह्मसूत्राणामकारादि-वर्णानुक्रमेण सूचीपत्रम् ।